யில் நடந்த செய்திகளை அறிந்துகொண்டு இன்றைக்கு ஏழாம் நாள் இந்நகரத்தை அடைவாள். இந்நகரத்தில் அவள் வேற்று வடிவத்துடன் வருவாளாயினும் உனக்கு வெளிப்பட்டுத் தோன்றுவாள். அவள் இந்நகருக்கு வரும்பொழுது பல அதிசயங்கள் நடைபெறும். நான் இங்கு வந்ததையும் மணிமேகலையை எடுத்துச் சென்றதையும், மாதவிக்குக் கூறுக. முன்னமே மாதவி என்னை அறிவாள். மாதவி மணிமேகலையைப்பெற்ற காலத்தில் கோவலன், "நமது குலதெய்வத்தின் பெயரை இக்குழந்தைக்கு வைப்போம்" என்று சொல்லி மணிமேகலைக்கு என்பெயரை வைத்தான். அன்றிரவு நான் மாதவியின்கனவிற்சென்று 'காமன் செயலற்று வருந்தும் வண்ணம், ஆசையை முழுதுங்கெடுக்கும் தவமாதைப் பெற்றாய்' என்று கூறினேன். இதனையும் அவளுக்கு நீ எடுத்துச் சொல்லி நினைப்பூட்டுவாயாக" என்று கூறிச்சென்றது.

## நள்ளிருட்காட்சி.

பிறகு நள்ளிருள் வந்து சேர்ந்தது. அந்த நள்ளிருளில், சிறுவர் கூட்டத்துடன் சேர்ந்து சிறுதேரிழுத்து விளையாடி, உடல்வருந்திப் படுக்கையில் அயர்ந்து தூங்கும் குதலைமொழியையும், குறு நடையையும் உடைய புதல்வர்களைச் செவிலித்தாயர், வேப்பிலை வெண் சிறு கடுகுகளாகிய காப்புகளை எறிந்து தூபங்காட்டி அவர்களைத் தூங்கச் செய்தனர். இரவில் வாழும் பறவைகளும், நீரில்வாழும் பறவைகளும், காவிலுறையும்புட்களும், ஓசையடங்கின. திருவிழாச்சிறப்பு அடங்கி முழவோசையும் அடங்கிற்று. அரசன் கோயிலில் நாழிகை வட்டிலால், நாழிகை அறிவோருடைய ஒலியும்; கட்டுத்தறியில் உணவின்றி வாடிக் கூப்பாடுபோடுகின்ற மதங்கொண்ட யானையின் கூவுதலும்; கப்பலோட்டி வந்த மாலுமிகள் நெல்லிலிருந்து எடுத்த தொப்பி என்னும் கள்ளையுண்டு

# श्रीमध्वमंत्ररत्नाकरस्थानां विषयाणां क्रमप्रकारः ।





PRINTED AT THE HINDI PRACHAR PRESS, TRIPLICANE, MADRAS.

श्रीमद्धनुमद्भीममध्वांतर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः ॥

# श्रीमध्वमंत्ररत्नाकरः ।

'श्रीमध्वमंत्ररत्नाकर' नामकस्यास्य पुस्तकस्येदानीं मुद्रणमधिकृत्य प्रकाशकस्य कानिचन वाक्यानि । मम तातपादान्पंडित टी. आर्. कृष्णाचार्यान्यो न जानीते तादृशो न कोऽपि संस्कृताभिज्ञो विद्वानस्मिन्भरतखंडे स्यात् । श्रीमदानंदतीर्थभगवत्पादाचार्यविरचितस्य सर्वमूलस्य, श्रीमज्जयतीर्थाचार्यविरचितानां, श्रीमन्न्यायसुधादीनामनेकेषां टीकाग्रंथानां, श्रीमद्व्यासराजस्वामिभिर्विरचितानां, न्यायामृततात्पर्यचंद्रिकाप्रभृतीनां ग्रंथानां श्रीराघवेंद्रतीर्थविरचितानां दशोपनिषत्खंडार्थ-गीताविवृति-दशप्रकरणटिप्पणीप्रभृतीनां ग्रंथानां च, इदंप्रथमतया प्रकटनेन, तथा दाक्षिणात्यकोशानुसारेण महाभारतवाल्मीकिरामायणादीतिहासपुराणानां प्रकटनेन. च त्रिमतस्था अपि टी. आर्. कृष्णाचार्यान्परोक्षतोऽपरोक्षतो वा जानत एव । तेषां महाभारतादिप्रकटनचातुर्यं दृष्ट्वा तुष्टा अनेके महाशयाः सहस्रं रूपिका आरभ्य ततोऽप्यस्तात् स्वसंतोषानुरूपं

 



पारितोषिकं दत्तवंत इति च सुप्रसिद्धं। अतस्तेषां विषये न मया नूत्नतया किमपि लेख्यमस्ति। अधीतशास्त्राणामपि तेषां वादग्रंथापेक्षयापि प्रमेयग्रंथेष्वादरोऽधिक आसीत्। तेषां बाल्यात्प्रभृति स्नानसंध्यावंदनमहामंत्रजपौपासनसच्छास्त्रपारायणादिरूपे कर्मण्यधिकं श्रद्धावत्त्वात्ते श्रीमदानंदतीर्थभगवत्पादाचार्यविरचितं तंत्रसारसंग्रहमनेकव्याख्यानानुसारेण पर्यशीलयन्। तत्रापि तेषां मंत्रभागे उत्कटौत्सुक्यस्य स्थितत्वात् अष्टौ महामंत्राः द्वासप्ततिर्महामंत्राश्च व्याख्यानेन सह मुद्रिताश्चेन्माध्वानामैहिकपारत्रिकोपकारो भवेदिति मत्वा ते स्वेनपरिशीलितं विषयं पुस्तकात्मनाऽग्रथयन्।

किं नाम तैः कृतं ग्रथनं?। न तावन्नूत्नतया रचनं। अपितु—प्राचीनग्रंथान्दृष्ट्वा तत्रतत्र विक्षिप्य स्थितान्विषयांस्तेभ्यस्तेभ्यः संगृह्य प्रकृतानुगुण्येन तत्रतत्र समावेशनमेव। ग्रंथकाराणां वाक्यान्येव प्रायोऽत्र ग्रथितानि। क्वचित्तेषां दीर्घाणि वाक्यानि स्ववाक्येन संक्षिप्य च संयोजितानि।

येभ्यो ग्रंथेभ्यः प्रकृतोपयुक्तव्याख्यानानि संगृहीतानि ते ग्रंथास्तु–(१) छलारीयं तंत्रसारसंग्रहस्य व्याख्यानं (२) छलार्याचार्यशिष्यरामदासविरचितं भावार्थचंद्रिकाख्यं (३) रोट्टीवेंकटाद्रिभट्टकृतगुर्वर्थदीधितिनामकं (४) श्रीरघुनाथतीर्थकृततत्वकर्णिकाख्यं 

चेति व्याख्यानचतुष्टयं, (५) उपर्युक्तश्रीरघुनाथतीर्थकृतबृहतीसहस्रव्याख्यानं (६) श्रीधीरेंद्रतीर्थकृतसूक्तव्याख्यानं (७) श्रीसत्यसंधतीर्थकृतसूक्तव्याख्यानं (८) श्रीमन्महैतरेयोपनिषदः ताम्रपर्णीयं व्याख्यानं (९) श्रीमद्राघवेंद्रतीर्थविरचिता मंत्रार्थमंजरी (१०) श्रीमद्वादिराजतीर्थविरचिता श्रीहरिवायुस्तुतिपुरश्चरणपद्धतिः इत्येवमादयो ग्रंथाः।

एवं तैर्महता श्रमेण संकलितमिदं पुस्तकं तेषामेवाध्यक्षतायामहममुद्रयं। इदं तरंगत्रयात्मना विभक्तं वर्तते। प्रथमे तरंगे अष्टौ महामंत्राः। द्वितीये द्वासप्ततिर्मंत्राः। तृतीये श्रीहरिवायुस्तुतिपुरश्चरणप्रभृतयः कतिचन मंत्राश्च वर्तंते। अत्र विद्यमानानां प्रायः सर्वेषां मंत्राणां श्रीमत्तंत्रसारोक्ता उद्धारश्लोकास्तत्रतत्र मुद्रिताः। सर्वेषां मंत्रादीनामर्थः प्राचीनेभ्यो व्याख्यानेभ्यो विचित्य लघुटिप्पणीत्वेन मुद्रितः। वेदभागानां स्वरचिन्हानि दत्तानि। अस्मिन्पुस्तके रत्नसदृशानामनेकेषां मध्वमतोपयोगिनां मंत्राणां विद्यमानत्वात् "श्रीमध्वमंत्ररत्नाकर" इति यथार्थं नाम च दत्तं। नकेवलमेते मंत्राः मोक्षार्थमेवानुष्ठेयाः। अपितु कौटुंबिकैः ऐहिकेष्टप्राप्त्यर्थं सर्वारिष्टनिवृत्त्यर्थं चानुष्ठेयाः। निष्कामं जपितॄणां तु ज्ञानभक्तिवैराग्यादिद्वारा मोक्षप्रदाश्च। यद्यपि लोके सप्तकोटिमंत्रा

वर्तंते तथापि तेषु बहवो राजसास्तामसाश्चित्तविभ्रमकारकाश्च । कदाचित्ते साधकानामपेक्षितफलं दद्युः कदाचिज्जपितारं समूलघातमुच्छेदयेयुश्च । नास्मत्पुस्तकस्था मंत्रास्तु तथाविधाः । एते तु शुद्धसत्वमहासत्वैः श्रीमदानंदतीर्थभगवत्पादैः स्वमतावलंबिनामैहिकपारत्रिकसुखार्थं श्रीमन्नारायणेन ब्रह्मणे उपदिष्टात्तंत्रसारादुद्धृत्य तंत्रसारसंग्रहे संगृहीताः । तदुक्तं श्रीभगवत्पादैः "दृष्टार्थ एव मंत्राणां कलौ वीर्यं तिरोहितं । तत्राप्युद्दीप्तवीर्या हि मंत्रा अत्र प्रकीर्तिताः ।" इति । अर्थः— मंत्राणां दृष्टार्थे वीर्यं कलावेव तिरोहितं । तत्रापि कलावपि ये उद्दीप्तवीर्याः मंत्राः त एव तंत्रसारसंग्रहे कथिताः इति । अधिकारी यं यं कामं कामयित्वा एतदुक्तप्रकारेण श्रद्धया जपं साधयति तं तं कामं प्राप्नुयादेव । यदि कदाचिदधिकारिणः केनापि वैगुण्येन तत्रोक्तसंपूर्णफलालाभेऽपि किंचित्फलं भवेदेव । विशेषस्तु एतज्जपानुष्ठानेन विपरीतफलं तु कदापि न स्यात् । एतादृशगुणविशिष्टस्याप्येतत्पुस्तकस्य संग्रहीतारो विरला एव स्युरिति अल्पसंख्याकान्येव पुस्तकानि मुद्रितानि । तदनुसारेण मूल्यं च कल्पितं । अस्मिन्पुस्तके उपोद्धातस्य प्रथमतरंगस्य च पृथक्पृथक्पत्रसंख्या वितीर्णा वर्तते । द्वितीयतृतीयतरंगयोः शुद्धिपत्राणां च मिलित्वा पृथगनुस्यूता संख्या दत्तास्ति । आचारकालेऽस्य पुस्तकस्योपयोक्तव्यत्वात् बंधनं (बैंड्) न कृतं । यदि केषां चिद्बैंडपुस्तकापेक्षा स्यात्तैस्तथा कर्तुं च शक्यमेव ।

अस्माकमपेक्षितपुस्तकदानेनोपकृतवंतो महाशयास्त्वेते—

१. म. शा. खापे. रामचंद्राचार्याः ।

२. म. शा. कुटाकोल. माधवाचार्याः ।

३. म. शा. चतुर्वेदी. वेंकटेशाचार्याः ।

४. उडिपी संस्कृत कालेजस्य प्रिन्सिपाल्पदवीमध्यारूढाः रा. रा. एम्. रामचंद्ररायाः एम्.ए. इत्येते ।

प्रूफ्शोधने सहायभूतास्तु—

१. रा. रा. N. संजीवरायाः एम्. ए. उपपदधारिणः पुदुकोट्टा संस्थानस्थ-राजकीयकालेजस्य भूतपूर्वांगलभाषोपाध्यायाः ।

२. म. शा. पांडुरंगी केशवाचार्याः । मध्यार्जुनस्थांगलपाठशालायाः संस्कृतांगलोभयभाषाध्यापकाः ।

३. म. शा. चतुर्वेदी वेंकटेशाचार्याश्च इति.

उपरि निर्दिष्टानां महात्मनां विषये नितरां कृतज्ञाः स्मो वयं ।

किंच—काले काले श्रद्धया मुद्रणं कृतवतां मद्रासनगरांतर्गत तिरुवल्लीकेणीस्थ-हिंदीप्रचार मुद्रणशालाध्यक्षाणां उपकारो न विस्मरणीयोऽस्माभिः । महत्या जागरूकतया परिशोधितेप्यस्मिन्मुद्रितपुस्तके अज्ञानमूलतया भ्रमप्रमादमूलतया मुद्रणयंत्रस्य देशांतरस्थतया च क्वचित्क्वचिदशुद्धानि समुत्पन्नानि । तेषां शुद्धिपत्राणि तृतीयतरंगांते संयोजितानि । तथापि पुनरुपलभ्यमानानि सुज्ञैः संशोध्यास्मभ्यं चावेद-नीयानि ।

एवं महता प्रयासेन द्रव्यव्ययेन च संसाधितमिदं पुस्तकं सर्वेप्यास्तिकाः संगृह्य मंत्रदेवताप्रसादं लभेरन्नित्याशास्महे । इति—

ग्रंथगुंफकः—
टी. आर. कृष्णाचार्यः
शके. १८५७ युवनाम सं-
वत्सरे वैशाख शुक्ल
अक्षय्यतृतीयायां

ग्रंथप्रकाशकः
टी. के. वेंकोबाचार्यः
म्यानेजर, मध्वविलास
पुस्तकालयः,
कुंभघोणम्.

अस्मिन्पुस्तके विद्यमानानां विषयाणामनुक्रमणिका ।

## तत्र प्रथमतरंगस्था विषयाः ॥ १ ॥



## अथ द्वितीयतरंगस्था विषयाः ॥ २ ॥

## अथ तृतीयतरंगस्था विषयाः ॥ ३ ॥



॥ इति विषयानुक्रमणिका ॥

॥६॥

# श्रीमध्वमंत्ररत्नाकरे प्रथमस्तरंगः ॥ १ ॥

॥ अष्टौ महामंत्राः ॥

श्रीमद्धनुमद्भीममध्वांतर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः ।

जयत्यब्जभवेशेंद्रवंदितः कमलापतिः । अनंतविभवानन्दशक्तिज्ञानादिसद्गुणः ॥

## भूतोच्चाटनं ।

स्नानानंतरं अर्घ्यप्रदानांतं संध्यावंदनं कृत्वा । प्राङ्मुख उदङ्मुखो वा देवाग्निदीपेंदुगोविप्रजलाशयाभिमुखो वा चेलाजिनकंबलकुशोत्तरे आसने उपविश्य तदभावे स्ववस्त्रस्य दशां वाऽधो निधाय तदुपर्युपविश्य भूतोच्चाटनं कुर्यात् ।

अपसर्पंत्विति भूतोच्चाटनमंत्रस्य मम शरीरस्य अंतर्यामी ऋषिः शिरसि । प्रकृतिश्छंदः मुखे । सत्यो देवता हृदये । समस्तभूतोच्चाटने विनियोगः । अपसर्पंतु ये भूता ये भूता भुवि संस्थिताः । ये भूता विघ्नकर्तारस्ते नश्यंतु शिवाज्ञया । अपक्रामंतु ये भूताः क्रूराश्चैव तु राक्षसाः । ये चात्र निवसंत्येव देवता भुवि संततं । तेषामप्यविरोधेन ब्रह्मकर्म समारभे । इति च्छोटिकामुद्रया वामभागे सर्वभूतोच्चाटनं कृत्वा ।

# आसनंपरिकल्पनं ।





पृथ्वीति मंत्रस्य मेरुपृष्ठ ऋषिः शिरसि । कूर्मो देवता हृदये । सुतलं छंदः मुखे । आसने विनियोगः । पृथ्वि त्वया धृता लोका देवि त्वं विष्णुना धृता । त्वं च धारय मां देवि पवित्रं कुरु चासनं । मां च पूतं कुरु धरे नतोऽस्मि त्वां सुरेश्वरि । इति पृथिवीं प्रार्थ्य । ओं निरस्तः परावसुः । इति मंत्रेण आसनात्तृणं प्रत्यग्दक्षिणं निरस्य । अप उपस्पृश्य । इदमहमर्वावसोः सदने सीदामि । आसने सोममंडले कूर्मस्कंधे उपविष्टोऽस्मि । इत्यासनं परिकल्प्य । ओं भूर्भुवः स्वरोम् इत्यासनं स्पृष्ट्वा । ॐ मं मंडूकाय नमः । ॐ कूं कूर्माय नमः । ॐ वं वराहाय

---

१. लघुटिप्पणी आसनप्रकार उक्तस्तंत्रसारे । वीरपद्मे च स्वस्तिकाद्यानि चासनं । आद्यपदेन सिद्धासनभद्रासनादीनां ग्रहणं । ऊर्वोरधः पदोरूर्ध्वं विभागेनेति च त्रिधा । आसनत्रयमुद्दिष्टं । अर्थः—पदोः = पादयोः । ऊर्वोरधः अवस्थापनं स्वस्तिकासनं । पादयोरूर्वोरुपर्यवस्थापनं पद्मासनं । विभागेन = एकपादस्य ऊरोरुपरि अन्यपादस्य ऊरोरधोऽवस्थापनं वीरासनं । इति त्रिप्रकारकमासनं । अत्रेदमवधेयं । अस्मिन्पुस्तकेऽस्माभिरुदाह्रियमाणाः प्रमाणश्लोकाः प्रायः श्रीमदानंदतीर्थभगवत्पादाचार्यविरचिततंत्रसारसंग्रहस्था एव ।

नमः । ॐ शें शेषाय नमः । ॐ कां कालाग्निरुद्राय नमः । ॐ वं वज्राय नमः । इति षण्मंत्राञ्जपित्वा । ॐ अस्त्राय फट् । इति नाराचमुद्रया दिग्बंधनं कृत्वा । ॐ रं प्राकारावस्थितवह्नये नमः । इति प्राकारावस्थितं वह्निं ध्यात्वा । ऐंद्र्यां दिशि बध्नामि ॐ नमश्चक्राय स्वाहा । इति चक्रमुद्रां प्रदर्श्य ॥ १ ॥ आग्नेय्यां दिशि बध्नामि ॐ नमः शंखाय स्वाहा । इति शंखमुद्रां प्रदर्श्य ॥ २ ॥ याम्यां दिशि बध्नामि ओं नमो गदायै स्वाहा । इति गदामुद्रां प्रदर्श्य ॥ ३ ॥ नैर्ऋत्यां दिशि बध्नामि ओं नमः पद्माय स्वाहा । इति पद्ममुद्रां प्रदर्श्य ॥ ४ ॥ वारुण्यां दिशि बध्नामि ओं नमः खड्गाय स्वाहा । इति खड्गमुद्रां प्रदर्श्य ॥ ५ ॥ वायव्यां दिशि बध्नामि ओं नमः शार्ङ्गाय स्वाहा । इति शार्ङ्गमुद्रां प्रदर्श्य ॥ ६ ॥ कौबेर्यां दिशि बध्नामि ओं नमस्तार्क्ष्याय स्वाहा । इति तार्क्ष्यमुद्रां प्रदर्श्य ॥ ७ ॥ ऐशान्यां दिशि बध्नामि ओं नमो वनमालायै स्वाहा । इति वनमालामुद्रां प्रदर्श्य ॥ ८ ॥ अथवा अवकाशाभावे । ऐंद्र्यादिदिक्षु बध्नामि ओं नमश्चक्राय स्वाहा । इति चक्रमुद्रां प्रदर्श्य सर्वा दिशो बध्नीयात् ।

## ततः करशुद्धिः ।

मणिबंधे प्रकोष्ठे च कूर्परे हस्तसंधिषु । तत्पृष्ठपार्श्वयोश्चैव करशुद्धिरुदाहृता ॥ ओं यं । ओं यं इति मणिबंधयोः । ओं रं । ओं रं । इति प्रकोष्ठयोः ॥ ओं वं । ओं वं । इति कूर्परयोः ॥ ओं यं । ओं यं । इति हस्तसंधिषु ॥ ओं रं । ओं रं । इति हस्तपृष्ठयोः ॥ ओं वं । ओं वं । इति हस्तपार्श्वयोः ॥ इति करशुद्धिः ।

## ततो गुरुनमस्कारः ।

श्रीगुरुभ्यो नमः ॥ १ ॥ श्रीपरमगुरुभ्यो नमः ॥ २ ॥ श्रीमदानंदतीर्थभगवत्पादाचार्येभ्यो नमः ॥ ३ ॥ श्रीवेदव्यासाय नमः ॥ ४ ॥ श्रीभारत्यै नमः ॥ ५ ॥ श्रीसरस्वत्यै नमः ॥ ६ ॥ श्रीवायवे नमः ॥ ७ ॥ श्रीब्रह्मणे नमः ॥ ८ ॥ श्रीमहालक्ष्म्यै नमः ॥ ९ ॥ श्रीनारायणाय नमः ॥ १० ॥ एकादशस्थाने तत्तन्मंत्रदेवतायै नमः ॥ ११ ॥ श्रीवासुदेवाय नमः ॥ १२ ॥

## अथ पापपुरुषविसर्जनं ।

ओं इति प्रणवमुच्चार्य हृत्कमलस्थितं परमात्मानं सुषुम्नामार्गेण नीत्वा स्वमूर्ध्नि

---

(२) तदुक्तं तंत्रसारे—आदावेव जपे कुर्याच्छोषणं दहनं प्लुतिं । वाय्वग्नि-

स्थापयेत् । ततः पापपुरुषचिंतनं । वामकुक्षिं स्पृष्ट्वा । ब्रह्महत्याशिरस्कं च स्वर्णस्तेयभुजद्वयं । सुरापानहृदा युक्तं गुरुतल्पकटिद्वयं । तत्संयोगिपदद्वंद्वमंगप्रत्यंगपातकं । उपपातकरोमाणं रक्तश्मश्रुविलोचनं । खड्गचर्मधरं कृष्णं कुक्षौ पापं विचिंतयेत् । इति पापपुरुषं ध्यात्वा तं नाभिमानीय । नाभिं स्पृष्ट्वा । नाभौ षट्कोणमंडलमध्यस्थो नीलवर्णो वाय्वंतर्यामी वायुबीजवाच्यः श्री प्रद्युम्नो भगवान् मच्छरीरस्थं पापपुरुषं वायुबीजेन शोषयतु । ओं यं ओं । इति ६ षड्वारं जपित्वा तं शुष्कं भावयेत् । तं हृदयमानीय । हृदये त्रिकोणमंडलमध्यस्थो रक्तवर्णः अग्न्यंतर्यामी अग्निबीजवाच्यः श्रीसंकर्षणो भगवान् मच्छरीरस्थं पापपुरुषं अग्निना निर्दहतु । ओं रं ओं । इति १२ द्वादशवारं जपित्वा तं दग्धं भावयित्वा तद्भस्म वामनासारंध्रेण बहिर्निःसारयेत् । शिरसि वर्तुलमंडलमध्यस्थः श्वेतवर्णः वरुणांतर्यामी वरुणबीजवाच्यः श्रीवासुदेवो भगवान्मच्छरीरममृतवृष्ट्या वरुणेनाप्लावयतु । ओं वं ओं इति २४ चतुर्विंशतिवारं जपित्वा स्वशरीरं प्रक्षालितं भावयेत् । पुनः ओं इति प्रणवमुच्चार्य परमात्मानं स्वमूर्धांतः तेनैव मार्गेणानीय स्वहृदये स्थापयेत् ।

---

वारुणैर्बीजैर्ध्यात्वा तन्मंडले हरिं । अर्थः—आदौ = करशुद्धिगुरुनमस्कारयोरनंतरं प्राणायामात्पूर्वं । तन्मंडले = वाय्वग्निवरुणानां मंडलेषु । वाय्वग्निवारुणैर्बीजैः = यं रं वं इति बीजत्रयेण । क्रमेण शोषणं दहनं प्लुतिं = यं इति वायुबीजेन पापपुरुषस्य शोषणं । रं इति अग्निबीजेन भस्मीकरणं । वं इति वरुणबीजेन स्वशरीरस्य क्षालनं च कुर्यात् ।

# अथ तत्वन्यासः ।

श्रीगुरुभ्यो नमः । परमगुरुभ्यो नमः । ११ स्थाने शक्त्यादितत्वरूपिपुरुषादितत्वांतर्यामिश्रीनारायणाय नमः । १२ शस्थाने तु श्री वासुदेवाय नमः । ओं ❁ ओं नमो नारायणाय ❁ ओं । इति मंत्रं जपन् परमात्मानं ध्यायन् ३६ । २४ । १२ वारं वा प्राणायामं कुर्यात् । प्राणायाममुद्रया श्वासवायुं बहिर्निःसार्य वामनासारंध्रेण बाह्यवायुमंतः पूरयित्वा नासारंध्रद्वयमंगुलीभिर्बध्वा सुषुम्नायां विष्णुवायुस्मरणपूर्वकं

---

३. प्रथमं वैष्णवे मंत्रे तत्वानां न्यसनं पुरा । एकपंचाशद्वर्णानां न्यसनं च ततः परं । अर्थः—प्रणवादिवैष्णवमंत्रेषु तत्वन्यासः प्रथमं । ततः वर्णन्यासः । लक्ष्म्याद्यन्यदेवतामंत्रेषु प्रथमं वर्णन्यासस्ततस्तत्वन्यासः । समुच्चये तु विष्णुमंत्रवदेव ।

४. प्राणायामविवरणं—प्राणायामो रेचयित्वा पूरयित्वा च कुंभके । तारैस्त्रिद्वादशावृत्तैर्व्द्येकद्वादशकेन वा । तत्तन्मंत्रेण वा कार्यो गायत्र्या दशतारकैः । अर्थः—दक्षिणनासा रंध्रेणौदरं वायुं बहिर्गमयित्वा वामनासा रंध्रेण बाह्यवायुमंतः पूरयित्वा । कुंभकतया निश्चलं यथा तथा या स्थितिः स प्राणायामः । स प्राणायामः ध्यानस्यांगं । तत्र मंत्रमाह—तारैरिति । त्रिद्वादशावृत्तैः = ३६ षट्त्रिंशत्संख्याकैः । द्विद्वादशावृत्तैः = २४ चतुर्विंशति संख्याकैः । एकद्वादशकेन = १२ द्वादशसंख्याकैः । तारैः = प्रणवैः । तत्तन्मंत्रेण वा । गायत्र्या दशतारकैः = दशोंकारसहितगायत्रीमंत्रेण वा प्राणायामः ॥३॥

श्वासनिरोधं कुर्यात् [एष एव प्राणायामः] अंगदेवताध्यानं—वासुदेवादिकाः शुक्लरक्त-

कार्यः। तदा विष्णुवाय्वोः स्मरणं च कार्यं। दशोंकारसहितगायत्रीमंत्रस्तु—ॐ भूः ओं भुवः ओं स्वः ओं महः ओं जनः। ओं तपः। ओं सत्यं। ओं तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि। धियो यो नः प्रचोदयात्। ओमापो ज्योतीरसोऽमृतं ब्रह्म भूर्भुवः स्वरोम् इति।

५. ध्यानादिविषये किंचिद्वक्तव्यमस्ति—निदिध्यासना नाम उपासना। सा द्विविधा विष्णुशास्त्रावमर्शनरूपा आद्या। द्वितीया ध्यानरूपा। ध्यानस्यांगं प्राणायामः। ध्यानस्य पूर्वावस्था धारणा—तदुक्तं 'खंडस्मृतिर्धारणा स्यादखंडा ध्यानमुच्यते। अप्रयत्नात्समाधिश्च दर्शनं चिरयाऽनया'। इति। अर्थः—खंडा = विच्छिन्ना। कादाचित्केति यावत्। एकैकांगस्मृतिरिति वा। स्मृतिर्मानसापरोक्षज्ञानं। अखंडा = अविच्छिन्ना। स्वप्रयत्नानंतरमुत्पद्य बहुकालस्थायिनी। समग्रावयवविषयिणी या स्मृतिः ध्यानमित्युच्यते। नैरंतर्यं मनोवृत्तेर्ध्यानमित्युच्यते बुधैरिति भाष्यात्। ध्यानं च ज्ञानमेव॥ अप्रयत्नात् = स्वस्य ईषत्प्रयत्नात्। भगवता कृपया स्वयमेव ध्यातृध्यानविषयीभूयावस्थानं समाधिः। स समाधिर्द्विविधः। संप्रज्ञातः असंप्रज्ञातश्चेति। यस्मिन्बाह्यार्थस्यापि प्रत्यक्षं भवति स संप्रज्ञातसमाधिः। असंप्रज्ञातसमाधिस्तु परमात्मदर्शनादिना तृप्तस्य भेरीताडने चंदनलेपेऽपि बाह्यापरोक्षाभावः सुतरां यत्र सः। यथा—शमीकऋषेर्गले मृतसर्पप्रक्षेपेऽपि तज्ज्ञानाभावः किंतु भगवद्ध्यानमेव। तादृशी अवस्था।

६. ध्यानश्लोकार्थः—वासुदेवः शुक्लः। संकर्षणो रक्तः। प्रद्युम्नः पीतः। अनिरुद्धः

पीतासितोज्ज्वलाः। चक्रशंखगदाब्जेतः प्रथमो मुसली हली। सशंखचक्रस्त्वपरस्तृतीयः शार्ङ्गबाणवान्। सचक्रशंखस्तुर्यस्तु चक्रशंखासिचर्मवान्। ततः पंचांगन्यासः। ओं भूः अग्न्यात्मने अनिरुद्धाय हृदयाय नमः। इति अंगुष्ठवर्ज्यांगुलीभिर्हृदये न्यसेत्। ओं भुवः वाय्वात्मने प्रद्युम्नाय शिरसे स्वाहा। इति अंगुष्ठवर्ज्यांगुलीभिः शिरसि न्यसेत्। ओं स्वः सूर्यात्मने संकर्षणाय शिखायै वौषट्। इति अंगुष्ठनाडिकामुष्ट्या शिखायां न्यसेत्। ओं भूर्भुवःस्वः प्रजापत्यात्मने वासुदेवाय कवचाय हुं। इति हस्तद्वयेन सर्वांगुलीभिः शिर आरभ्य नाभिपर्यंतं व्यापकं। ओं सत्यं नारायणाय अस्त्राय फट्। इति नाराचमुद्रया अंगुष्ठतर्जनीभ्यां शब्दं कुर्वन् दिग्बंधनं कुर्यात्। उत्तरत्र सर्वत्र अंगन्यासे अंगुल्यादिन्यास-क्रमः एवमेव ज्ञेयः। ततः ऋष्यादिन्यासः। एतेषां तत्वमंत्राणां अंतर्यामी ऋषिः

---

असितः = नीलः। इति क्रमात् शुक्लादिवर्णैरुज्ज्वलाः = भ्राजमानाः। तेषु प्रथमः = वासुदेवः चक्रादियुक्तचतुर्बाहुः। अपरः = संकर्षणः। चक्रशंखहलमुसलवान्। तृतीयः = प्रद्युम्नः शंखचक्रशार्ङ्गबाणवान्। तुर्यस्तु = चतुर्थोऽनिरुद्धस्तु चक्रशंखासिचर्मवान्। ॥४॥

७. उत्तरत्र 'इति दिग्बंधः' इति स्थलेषु सर्वत्र नाराचमुद्रयेत्याद्यत्रोक्तप्रकारेण दिग्बंधनं कुर्यात्।

८. मंत्रद्रष्टा ऋषिः। तदुक्तं ऋग्भाष्ये—यः पश्यति स्वयं वाक्यं स ऋषिस्तस्य

शिरसि। दैवी गायत्री च्छंदः मुखे। शक्त्यादितत्वरूपी पुरुषादितत्वांतर्यामी श्रीनारायणो देवता हृदये। न्यासे विनियोगः। तत्वदेवताध्यानं—प्रधानोपमवर्णानि द्विभुजान्यप्यशेषतः। कृतांजलिपुटान्येव प्रधानं तं हरिं प्रति। शक्त्यादितत्वरूपिपुरुषादितत्वांतर्यामिश्रीनारायणप्रेरणया श्रीनारायणप्रीत्यर्थं तत्वन्यासं करिष्ये। ततो हरिसांनिध्यमोक्षज्ञानशक्त्यादिमहाफलप्रदः तत्वैर्न्यास आरंभणीयः। ओं

---

कीर्तितः। मुनिस्तु सर्वविद्यानां भगवान् पुरुषोत्तमः। इति। तंत्रसारेऽपि—ऋषिश्च देवतैकोहं तारादीनां विशेषतः। अर्थः—अहं = अहमिति भगवद्वचनं। हरिः। सर्वमंत्राणां एकः = मुख्यः। ऋषिः। देवता च एकोऽहं = अहमेव। तारादीनां = प्रणवादीनां महामंत्राणां विशेषतः = विशिष्य। अहमेव = अंतर्यामी ऋषिः॥

९. ध्यानश्लोकार्थः—अशेषतः = एकमप्यपरित्यज्य सर्वाणि तत्वानि। प्रधानोपमवर्णानि = प्रधानः मूलरूपी नारायणः। तदुपमवर्णानि उद्यदादित्यसदृशकांतिमंति। प्रधानं तं हरिं प्रति = हरेरभिमुखं। कृतांजलिपुटानि च॥

१०. तत्वान्युद्धरति—पुरुषोऽव्यक्तं च महानहंकारो मनस्तथा। दशेंद्रियाणि शब्दाद्या भूतेताः पंचविंशतिः॥ तत्वाख्याः कालमाये च नियतिर्मतिरेव च। विद्या कला प्रवृत्तिश्च द्वात्रिंशत्तत्वसंग्रहः। स्फूर्तिः संवित्प्रतिष्ठा च शक्तिरित्यपराणि च। महालक्ष्मीस्वरूपाणि ह्येकादश विदो विदुः। विष्णोरपि च रूपाणि तन्नाम्नैकादशैव

परायैशक्त्यात्मने श्रीलक्ष्मीनारायणाभ्यां नमः ॥ १ ॥ ओं पराय प्रतिष्ठात्मने श्रीलक्ष्मीनारा-

---

तु । अर्थः—पुरुषः = जीवतत्वं । पुरुषादिमनोंतानि तत्वानि पंच ५ । इंद्रियाणि ज्ञान-कर्मरूपाणि दश (१०) । शब्दाद्याः विषयाः पंच (५) । आकाशादिभूतानि पंच (५) । इति पंचविंशतिः तत्वाख्याः ॥ कालादिसप्तभिः (७) सह द्वात्रिंशत् । ततः स्फूर्त्या-दीनि अपराणि चत्वारि ४ । एवं च संभूय तत्वानि षट्त्रिंशत् (३६) । तेषु कालादि-शक्त्यंतान्येकादश तत्वानि महालक्ष्म्याः विष्णोश्च रूपाणि । तानि च कालादिनाम-वाच्यानि । तान्येकादश इतरेषां पुरुषादिपृथिव्यंतानां पंचविंशति (२५) तत्वानां नियामकानि । उद्देशे कालमायेति क्रमे उक्तेऽपि शक्त्यादीनां व्युत्क्रमेणैव न्यासः । ततः पंचविंशानां न्यासः ।

११. तत्वमंत्रोद्धारः—ध्येयः परात्मनोर्मध्ये तत्वनाम तदर्थयोः । जपे न्यासे नमोंऽतस्तु स्वाहांतो होमकर्मणि । अर्थः—तदर्थयोः = सः विष्णुः । अर्थः अभिधेयो ययोः । तयोः । परात्मनोः = परशब्दस्य आत्मन्शब्दस्य च मध्ये । तत्वनाम = तत्ववाचकं पुरुषादिपदं । ध्येयः = प्रयोक्तव्यं लिंगविपरिणामादिनार्थो ज्ञेयः । किंच केचन तत्वनामातदर्थयोरिति पठित्वा तानि तत्वानि अर्था न भवंतीत्यतदर्थौ । तयोः विष्णवर्थ-योरित्यर्थः सिद्ध्यतीति वर्णयंति । पुरुषादिनामान्यपि भगवतः एव । अयं मंत्रः जपे न्यासे च नमोंतः प्रयोक्तव्यः । होमकर्मणि तु स्वाहांत इति ध्येयः ॥ अत्र कश्चिद्विशेषः । पराय शक्त्यात्मने नम इत्याद्येव मंत्रः । लक्ष्मीनारायणाभ्यामित्यादि तु तत्वदेवतास्मरणार्थं ।

यणाभ्यां नमः ॥ २ ॥ ओं पराय संविदात्मने श्रीलक्ष्मीनारायणाभ्यां नमः ॥ ३ ॥ ओं पराय स्फूर्त्यात्मने श्रीलक्ष्मीनारायणाभ्यां नमः ॥ ४ ॥ ओं. पराय प्रवृत्यात्मने श्रीलक्ष्मीनारायणाभ्यां नमः ॥ ५ ॥ ओं पराय कलात्मने श्रीलक्ष्मीनारायणाभ्यां नमः ॥ ६ ॥ ओं पराय विद्यात्मने श्रीलक्ष्मीनारायणाभ्यां नमः ॥ ७ ॥ ओं पराय मत्यात्मने श्रीलक्ष्मीनारायणाभ्यां नमः ॥ ८ ॥ ओं पराय नियत्यात्मने श्रीलक्ष्मीनारायणाभ्यां नमः ॥ ९ ॥ ओं पराय मायात्मने श्रीलक्ष्मीनारायणाभ्यां नमः ॥ १० ॥ ओं पराय कालात्मने श्रीलक्ष्मीनारायणाभ्यां नमः ॥ ११ ॥ ओं पराय पुरुषात्मने ब्रह्मवायुभ्यां नमः ॥ १२ ॥ इति द्वादशभिर्मंत्रैः हृदये प्रदक्षिणं मालाकारेण देवतान्यसेत् ॥ * ॥

---

अत एव पराय शक्त्यात्मने इत्येकवचनं लक्ष्मीनारागाभ्यामित्यादि द्विवचनं च संगतं भवति। तथा पराय अहंकारात्मने गरुडशेषरुद्रेभ्यो नम इति वहुवचनं च संगतं भवति।

१२. सर्वाण्येतानि तत्वानि ब्रह्मा तु पुरुषः स्मृतः। महांश्चाव्यक्तनाम्नी तु ब्रह्माणी सप्रकीर्तिता। अर्थः—सर्वाण्येतानि = पूर्वोक्तानि। तत्वानि विष्णुस्वरूपाण्येव। पुरुषः = जीवतत्वं तु। ब्रह्मा = ब्रह्मवाय्वभिसन्यमानं। तथा महांश्च = महत्तत्वमपि। ब्रह्मवाय्वभिमन्यमानमित्यर्थः। अव्यक्तनाम्नी तु = अव्यक्ताख्यं तत्वं तु। ब्रह्माणी = सरस्वतीभारत्यभिमन्यमानमिति। संप्रकीर्तिता = संप्रकीर्त्यते।

ओं पराय अव्यक्तात्मने ब्रह्माणीभारतीभ्यां नमः । इति दक्षिणबाहौ ॥ १३ ॥ ओं पराय महदात्मने ब्रह्मवायुभ्यां नमः इति वामबाहौ ॥ १४ ॥ ओं पराय अहंकारात्मने[13] गरुडशेषरुद्रेभ्यो नमः इति दक्षिणोरौ ॥ १५ ॥ ओं पराय मनआत्मने स्कंदेंद्राभ्यां नमः । इति वामोरौ ॥ १६ ॥ ओं पराय श्रोत्रात्मने दिग्देवताभ्यो नमः ॥ १७ ॥ ओं पराय त्वगात्मने प्राणाय नमः ॥ १८ ॥ ओं पराय चक्षुरात्मने सूर्याय नमः ॥ १९ ॥ ओं पराय जिह्वात्मने वरुणाय नमः ॥ २० ॥ ओं पराय घ्राणात्मने अश्विभ्यां नमः ॥ २१ ॥ इति दक्षिणहस्तांगुष्ठादितत्कनिष्ठिकांतं न्यसेत् ॥ * ॥ ओं पराय वागात्मने वह्नये नमः ॥ २२ ॥ ओं पराय पाण्यात्मने दक्षाय

---

१३. अहंकारमनसोर्देवता आह—रुद्रोऽहंकार उद्दिष्टो स्कंदेंद्रौ मन उच्यते । अहंकारः शेषवींद्रावपि विद्वद्भिरीरितौ ॥

१४. पंचानां ज्ञानेंद्रियाणां देवता आह—दिग्वायुसूनुसूर्याश्च वरुणश्चाश्विनावपि ॥ वायुसूनुः = प्राणः । एतयोरर्थो मंत्रपठनादेव सुज्ञेयः ॥

१५. कर्मेंद्रियदेवता आह—वह्निदक्षाविंद्रसूनुर्मित्रश्चैव मनुस्तथा । इंद्रियाख्याः ॥ अर्थः—इंद्रसूनुः = जयंतः । मनुः = स्वायंभुवः । एते = दिग्देवतादयः । इंद्रियाख्याः = दशेंद्रियाभिमानिनः ।

नमः ॥ २३ ॥ ओं पराय पादात्मने जयंताय नमः ॥ २४ ॥ ओं पराय पाय्वात्मने मित्रायनमः ॥ २५ ॥ ओं पराय उपस्थात्मने मनवे नमः ॥ २६ ॥ इति वामहस्तांगुष्ठादितत्कनिष्ठिकांतं न्यसेत् ॥ * ॥ ओं पराय शब्दात्मने बृहस्पतिप्राणाभ्यां नमः ॥ २७ ॥ ओं पराय स्पर्शात्मने अपानाय नमः ॥ २८ ॥ ओं पराय रूपात्मने व्यानाय नमः ॥ २९ ॥ ओं पराय रसात्मने उदानाय नमः ॥ ३० ॥ ओं पराय गंधात्मने समानाय नमः ॥ ३१ ॥ इति दक्षिणपादांगुष्ठादितत्कनिष्ठिकांतं न्यसेत् ॥ * ॥ ओं पराय आकाशात्मने महागणपतये नमः ॥३२॥ ओं पराय वाय्वात्मने वायवे नमः ॥ ३३ ॥ ओं पराय तेजआत्मने वह्नये नमः ॥ ३४ ॥ ओं पराय अबात्मने वरुणाय नमः ॥ ३५ ॥ ओं पराय पृथिव्यात्मने

---

१६. अत्रत्यः प्राणः रुद्रपुत्रः ॥ १७. अन्ये तु सूनवो वायोः रुद्रस्यापि प्रकीर्तिताः। अर्थः—वायोः पुत्राः प्राणादयः पंच संति। रुद्रस्यापि प्राणादिनामानः पुत्राः पंच। तेषु वायोः अन्ये सूनवः त्वगभिमानिनं प्राणं विना। अन्ये = अपानाद्याश्चत्वारो वायुपुत्राः स्पर्शादीनां चतुर्णां विषयाणां। रुद्रसूनवस्तु शब्दादिपंचानामपि ॥ आकाशवायुवह्निजलपृथिवीनां भूतानां गणेशः मरीचिनामको भूतवायुः अग्निः वरुणः धरादेवी इति क्रमेण पंचानां देवतात्वेन शास्त्रेषु प्रसिद्धत्वात्तदनुक्तिः। मरीचिवायोः प्रवह इत्यपि नाम ॥

धर्र्यै नमः (शनैश्चरधराभ्यां नमः इति केषां चिन्मतं) इति वामपादांगुष्ठादितत्कनिष्ठिकांतं न्यसेत् ॥ ३६ ॥ इति तत्वन्यासः ॥

## अथ[११] मातृकान्यासः ।

श्रीगुरुभ्यो नमः । ११ स्थाने अजादिरूपिश्रीलक्ष्मीनारायणाय नमः । ओं ❁ ओं नमो नारायणाय ❁ ओं । इति मंत्रेण प्राणायामः । अंगदेवताध्यानं– वासुदेवादिकाः शुक्ररक्तपीतासितोज्ज्वलाः । चक्रशंखगदाब्जेतः प्रथमो मुसली हली ।

---

१८. अत्रेदमवधेयं—एतेषु भगवान्विष्णुः प्रधानतनुरेव च । अर्थः—एतेषु च = पुरुषादिपंचविंशतितत्वेष्वपि । प्रधानतनुः = सर्वोत्तमस्वरूपः । भगवान्विष्णुरेव । ब्रह्मवाय्वादिनियामकत्वेन तत्तच्छब्दवाच्यो विष्णुरेव ध्येय इत्यर्थः ॥

१९. मातृकामंत्रोद्धारः—यस्य कस्यापि मंत्रस्य न्यासः पंचाशदक्षरैः । वीर्यदः । अर्थः—यस्य कस्यापि मंत्रस्य = सर्वेषामपि मंत्राणामादावंते च । पंचाशदक्षरैः = उत्तरत्र 'सक्षकारान्न्यसेद्वर्णान्' इति वक्ष्यमाणरीत्या एकपंचाशद्वर्णैः । न्यासः = न्यसनं । तत्तद्वर्णवाच्यो भगवांस्तत्तत्स्थानेषु संनिहित इति ध्यानं कार्यं । न्यासफलमाह— वीर्यदः = अतिशयितजपफलप्रदः ।

२०. अर्थस्तत्वमंत्रे [४ । अंनके] गतः ।

सशंखचक्रस्त्वपरस्तृतीयः शार्ङ्गबाणवान् । सशंखचक्रस्तुर्यस्तु चक्रशंखासिचर्मवान् । अथ पंचांगैर्[21]न्यासः । ओं भूः अग्न्यात्मने अनिरुद्धाय हृदयाय नमः । ओं भुवः वाय्वात्मने प्रद्युम्नाय शिरसे स्वाहा । ओं स्वः सूर्यात्मने संकर्षणाय शिखायै वौषट् । ओं भूर्भुवः स्वः प्रजापत्यात्मने वासुदेवाय कवचाय हुं । ओं सत्यं नारायणाय अस्त्राय फट् इति दिग्बंधः । स्थानांगुल्यादिक्रमस्तत्त्वन्यासवत् । [४ । सांके] अथ ऋष्यादिन्यासः । एतेषां मातृकामंत्राणां अंतर्यामी ऋषिः शिरसि । दैवी गायत्री[22] च्छंदः मुखे । अजादिरूपी श्रीलक्ष्मीनारायणो देवता हृदये । न्यासे विनियोगः । ध्यानं—उद्यद्[23]भास्वत्समाभासश्चि-

---

२१. अंगन्यासः ऋष्यादिन्यासश्च वक्ष्यमाणप्रणवमंत्रवत् । "तारवह्निखिलं स्मृतं । पंचाशदक्षराणां च" । इत्युक्तत्वात् ।

२२. दैवी गायत्री = महालक्ष्म्यभिमन्यमाना । अन्या तु ब्रह्माण्यभिमन्यमाना इति ज्ञेयं । तदुक्तं—'छंदो मदीया गायत्री' इति ।

२३. ध्यानश्लोकार्थः—उद्यद्भास्वत्समाभासः = तत्कालोदितसूर्यकांतिसमकांतिमान् । चिदानंदैकदेहवान् = अप्राकृतज्ञानानंदमयदेहः । चक्रशंखेति = दक्षिणोर्ध्वादिबाहुषु क्रमेण चक्राद्यायुधवान् । अहमिति ब्रह्माणं प्रति भगवद्वचनं । वामपार्श्वस्था लक्ष्मीः । दक्षिणपार्श्वस्था भूः । इति विवेकः । स्वमूर्तिगणमध्यगः = स्वमूर्तिनां विश्वाद्यष्टमूर्तीनां कल्लोलकादीनां वा मध्ये स्थितः । विपः = गरुडः । नित्यनिःशेषशक्तिमान् =

अष्टौ दानंदैकदेहवान् । चक्रशंखगदापद्मधरो ध्येयोऽहमीश्वरः । लक्ष्मीधराभ्यामाश्लिष्टः स्वमूर्ति- महा
गणमध्यगः । ब्रह्मवायुशिवाहीशविपैः शक्रादिकैरपि । सेव्यमानोऽधिकं भक्त्या नित्यनिः मंत्राः
॥८॥ शेषशक्तिमान् । मूर्तयोऽष्टावपि ध्येयाश्चक्रशंखवराभयैः । युक्ताः प्रदीपवर्णाश्च सर्वाभरण-
भूषिताः । तादृग्रूपाश्च पंचाशज्ज्ञानमुद्राभयोद्यताः । टंकी दंडी च धन्वी च तत्तद्युक्तास्तु
वामतः । ध्यायेन्नृसिंहमुरुवृत्तरवित्रिणेत्रं जानुप्रसक्तकरयुग्ममथापराभ्यां । चक्रं दरं च

---

नित्या नाशरहिता । निः शेषा अखिलविषयिका शक्तिः तद्वान् । अष्टावपि मूर्तयः = विश्वाद्याः । प्रदीपवर्णाः = प्रदीपवद्वर्णो यासां ताः । पंचाशत् = अजादिळाळुकांता मूर्तयः तादृग्रूपाः = मूलमूर्तिसदृशाः । ज्ञानमुद्राभयोद्यताः = मूलरूपस्य गदापद्मस्थाने एतेषां ज्ञानमुद्राभयमुद्रे ज्ञेये । तत्राप्यपवादमाह । टंकीति । टंकी दंडी धन्वी इति तिस्रो मूर्तयः । वामतः = वामहस्ते । तत्तद्युक्ताः = अभयमुद्रास्थाने टंकिनः टंकः = पाषाणदारणाख्य आयुधविशेषः । दंडिनः दंडः । धन्विनः धनुः इति विशेषो ज्ञेयः ।

२४. श्रीनृसिंहध्यानश्लोकार्थः—उरुवृत्तरवित्रिणेत्रं । उरूणि विशालानि । वृत्तानि
वर्तुलानि । रविवद्दीप्तानि त्रीणि नेत्राणि यस्य तं । रविमंडलवदुरुवृत्तनेत्रत्रयमिति परनि- ॥८॥
पातो वा । जानुप्रसक्तकरयुग्मं=जान्वोः प्रसक्तं स्थापितं करयुग्मं करद्वयं यस्य स तथा । अथ अपराभ्यां = कराभ्यां । चक्रं शंखं च । दधतं = दधानं । प्रियया = रमया । समेतं = सहितं । तिग्मांशुकोट्यधिकतेजसं = सूर्यकोटिभ्योऽप्यधिकतेजोरूपं । अग्र्य-

दधतं प्रियया समेतं तिग्मांशुकोट्यधिकतेजसमग्र्यशक्तिं । अजादिरूपिश्रीलक्ष्मीनारायण-प्रेरणया अजादिरूपिश्रीलक्ष्मीनारायणप्रीत्यर्थं मातृकान्यासं करिष्ये ॥ ओं अं अजाय नमः । शिरसि ॥ १ ॥ ओं आं आनंदाय नमः । सर्वस्मिन्मुखे ॥ २ ॥ ओं इं इंद्राय नमः । दक्षिणनेत्रे ॥ ३ ॥ ओं ईं ईशाय नमः । वामनेत्रे ॥ ४ ॥ ओं उं उग्राय नमः । दक्षिणकर्णे ॥ ५ ॥ ओं ऊं ऊर्जाय नमः । वामकर्णे ॥ ६ ॥

---

शक्तिं = सर्वोत्कृष्टसामर्थ्यं । नृसिंहं = ना सिंह इव । पुरुषोत्तमं नृसिंहनामानं भगवंतं । ध्यायेत् ।

२५. न्यासस्थानोद्धारः—केऽभितो वक्त्रमक्षिकर्णेषु नासयोः । गंडयोरोष्ठयोर्दंतपंक्त्योर्मूर्धनि वाचि च । दोःपत्संधिषु साग्रेषु पार्श्वयोः पृष्ठगुह्ययोः । तुंदे हृदि च धातूनां सप्तके प्राणजीवयोः । सक्षकारान्न्यसेद्वर्णान्नृसिंहः क्षस्य देवता । अर्थः सुगमः ।

२६. अत्र अं नमः । आं नमः । इत्याद्येव मंत्रः । अजाय । आनंदाय इत्यादि तु तत्तन्मंत्रदेवतास्मरणार्थं । अजादिपदानामर्थस्तु—अजः = न जायते इति । जननरहित इत्यर्थः ॥ १ ॥ आनंदः = आनंदरूपः ॥ २ ॥ इंद्रः = परमैश्वर्यवान् ॥ ३ ॥ ईशः = ईं महालक्ष्मीं शास्तीति । लक्ष्मीपतिरित्यर्थः ॥ ४ ॥ उग्रः = उं रुद्रं ग्रसतीति । पापिनां क्रूरं वा ॥ ५ ॥ ऊर्जः = निरवधिकबलचेष्टावान् ॥ ६ ॥ ऋतुंभरः = ऋतूपलक्षितभूत-

ओं ॠं ॠतुंभराय [ऋतंभरायेति वा] नमः। दक्षिणनासापुटे ॥ ७॥ ओं ॠं ॠघाय नमः। वामनासापुटे ॥ ८ ॥ ओं ॡं ॡशाय नमः। दक्षिणगंडे ॥ ९ ॥ ओं ॡं ॡजये नमः। वामगंडे ॥ १० ॥ ओं एं एकात्मने नमः। ऊर्ध्वोष्ठे ॥ ११ ॥ ओं ऐं ऐराय नमः। अधरोष्ठे ॥ १२ ॥ ओं ओं ओजोभृते नमः। ऊर्ध्वदंतपंक्तौ ॥ १३ ॥ ओं औं औरसाय नमः। अधरदंतपंक्तौ ॥ १४ ॥ ओं अं अंताय नमः। मूर्ध्नि ॥ १५ ॥ ओं अः अर्धगर्भाय नमः। वाचि ॥ १६ ॥ * ॥ ओं कं कपिलाय

---

भविष्यद्वर्तमानकालं बिभर्तीति। ऋतंभर इति पाठे ऋतं = सत्यभूतं जगत्। तद्बिभर्तीति ॥ ७॥ ॠघः = ॠं दनुं घारयति दीपयति क्लेशयति वा तत्पुत्रहननेन ॥ ८ ॥ ॡशः = ॡर्देवमाता अदितिः। तस्याः शं सुखं यस्मात्सः। श्रीवामनः ॥ ९ ॥ ॡजिः = ॡं दितिं जयति अभिभवतीति ॡजः। तृतीयोऽतिशये ॡजिः ॥ १० ॥ एकात्मा = मुख्यस्वामी ॥ ११ ॥ ऐरः = आयं (ऐकारवाच्यं) रुद्रं रमयतीति। रुद्रस्य सदा रामनामजपितृत्वात् ॥ १२ ॥ ओजोभृत् = निरतिशयसामर्थ्यवान् ॥ १३ ॥ औरसः = औः ब्रह्मा। रसः वीर्यं अपत्यमित्यर्थः। यस्य सः। चतुर्मुखजनक इति यावत् ॥ १४ ॥ अंतः = प्रलयकाले सर्वं जगत् अंतयति नाशयतीति ॥ १५ ॥ अर्धगर्भः = आ ऋद्धाः अर्धाः ब्रह्मादयः। गर्भे यस्य सः ॥ १६ ॥ कपिलः = सखरूपत्वात्कः। पाल्यते जग-

नमः ॥ १७ ॥ ओं खं खपतये नमः ॥ १८ ॥ ओं गं गरुडासनाय नमः ॥ १९ ॥ ओं घं घर्माय नमः ॥ २० ॥ ओं ङं ङसाराय नमः ॥ २१ ॥ इति दक्षिणहस्तसंध्यग्रेषु न्यसेत् ॥ * ॥ ओं चं चार्वंगाय नमः ॥ २२ ॥ ओं छं छंदोगम्याय नमः ॥ २३ ॥ ओं जं जनार्दनाय नमः ॥ २४ ॥ ओं झं झाटितारये नमः ॥ २५ ॥ ओं ञं ञमाय नमः ॥ २६ ॥ इति वामहस्तसंध्यग्रेषु न्यसेत् ॥ * ॥ ओं टं टंकिने नमः ॥ २७ ॥ ओं ठं ठलकाय नमः ॥ २८ ॥ ओं डं डरकाय नमः ॥ २९ ॥ ओं ढं ढरिणे नमः

---

दनेनेति पिः । लीयते जगदस्मिन्निति लः । कश्चासौ पिश्चासौ लश्चेति ॥ १७ ॥ खपतिः = खानि इंद्रियाणि । तेषां पतिः प्रेरकः हृषीकेशः ॥ १८ ॥ गरुडासनः = गरुडवाहनः ॥ १९ ॥ घर्मः = शत्रुसंतापनः ॥ २० ॥ ङसारः = ङाः विषयाः । तेषु सारो वरः ॥ २१ ॥ चार्वंगः = सुंदरांगः ॥ २२ ॥ छंदोगम्यः = वेदप्रतिपाद्यः ॥ २३ ॥ जनार्दनः = न जायत इति जनः । नञः परनिपातः । अर्दयति संसारमिति अर्दनः । जनश्चासावर्दनश्च ॥ २४ ॥ झाटितारिः = झाटिताः द्राविताः अरयो येन सः ॥ २५ ॥ ञमः = ञः गायकः । तं वेदादिना स्वगुणगायकं । मानयति मोक्षदानेनेति ॥ २६ ॥ टंकी = टंकः पाषाणदारणरूपमायुधं । सोऽस्यास्तीति ॥ २७ ॥ ठलकः = ठः महेशः । लः इंद्रः । तयोः कं सुखं यस्मात्सः ॥ २८ ॥ डरकः = डः चंद्रमंडलं । रः अग्निः । तयोः कः प्रकाशो यस्मात् सः ॥ २९ ॥ ढरी = ढं निर्गुणं मुक्तसमुदायं रमयतीति ढरो ब्रह्मा । सोऽस्यास्ति पुत्र-

॥ ३० ॥ ओं णं णात्मने नमः ॥ ३१ ॥ इति दक्षिणपादसंध्यग्रेषु न्यसेत् ॥ * ॥
ओं तं ताराय नमः ॥ ३२ ॥ ओं थं थभाय नमः ॥ ३३ ॥ ओं दं दंडिने नमः
॥ ३४ ॥ ओं धं धन्विने नमः ॥ ३५ ॥ ओं नं नम्याय नमः ॥ ३६ ॥ इति
वामपादसंध्यग्रेषु न्यसेत् ॥ * ॥ ओं पं पराय नमः ॥ इति दक्षिणकुक्षौ ॥ ३७ ॥
ओं फं फलिने नमः इति वामकुक्षौ ॥ ३८ ॥ ओं बं बलिने नमः इति पृष्ठे ॥ ३९ ॥
ओं भं भगाय नमः इति गुह्ये ॥ ४० ॥ ओं मं मनवे नमः । इति तुंदे ॥ ४१ ॥
ओं यं यज्ञाय नमः । इति हृदये ॥ ४२ ॥ ओं रं रामाय नमः । इति त्वचि ॥ ४३ ॥

---

त्वेनेति यावत् ॥ ३० ॥ णात्मा = सुखस्वरूपी ॥ ३१ ॥ तारः = तारयति संसारादिति ॥ ३२ ॥ थभः = थं शिलोच्चयं गोवर्धनाख्यं बिभर्तीति ॥ ३३ ॥ दंडी = गोचारणार्थं करधृतवेणुयष्टिः श्रीकृष्णः ॥ ३४ ॥ धन्वी = उत्तमो धनुष्मान् । शार्ङ्गधन्वा ॥ ३५ ॥ नम्यः = सर्ववंद्यः ॥ ३६ ॥ परः = पिपर्ति इति । गुणपूर्ण इत्यर्थः ॥ ३७ ॥ फली = फलस्वामी फलदाता वा ॥ ३८ ॥ बली = निरवधिकबलवान् ॥ ३९ ॥ भगः = समग्रैश्वर्य-संपन्नः ॥ ४० ॥ मनुः = अवबोधरूपः ॥ ४१ ॥ यज्ञः = इज्यते पूज्यते सर्वैरिति ॥ ४२ ॥ रामः = रमत इति रः । न विद्यते मा परिमितिः यस्य सः अमः रश्चासौ अमश्चेति । यद्वा रमयति भक्तानिति वा रामः ॥ ४३ ॥ लक्ष्मीपतिः = सर्वजगज्जनन्या महालक्ष्म्या

ओं ळं लक्ष्मीपतये नमः। इति चर्मणि ॥ ४४ ॥ ओं वं वराय नमः। इति मांसे ॥ ४५ ॥ ओं शं शांतसंविदे नमः। इति रुधिरे ॥ ४६ ॥ ओं षं षड्गुणाय नमः। इति मेदसि ॥ ४७ ॥ ओं सं सारात्मने नमः। इति मज्जायां ॥ ४८ ॥ ओं हं हंसाय नमः। इति अस्थिसंधिषु ॥ ४९ ॥ ओं ळं ळालुकाय नमः। इति प्राणे ॥ ५० ॥ ओं क्षं लक्ष्मीनृसिंहाय नमः। इति जीवे ॥ ५१ ॥ इति मातृकान्यासः ॥

---

अपि पतिः ॥ ४४ ॥ वरः=सर्वैर्मोक्षार्थं व्रियत इति ॥ ४५ ॥ शांतसंवित्=शांता सुखरूपा। संवित् बुद्धिर्यस्य सः ॥ ४६ ॥ षड्गुणः = श्रीकाममाहात्म्यादि षड्गुणसंपन्नः ॥ ४७ ॥ सारात्मा = सारः अप्राकृतचिदानंदमयः। आत्मा देहो यस्य सः ॥ ४८ ॥ हंसः = हंति सर्वं जगत्प्रलयकाले इति (हन्) हा। यद्वा हंति जानातीति (हन्) हा। हनहिंसागत्योः। गत्यर्था धातवो ज्ञानार्थाः। सारत्वात् सः। (हन्)हा चासौ सश्च हंसः ॥ ४९ ॥ ळालुकः = ळाः मुक्ताः। आळू ब्रह्मेंद्रौ। ळाश्च आळू च ळाळवः। तेषां कं सुखं यस्मात् सः ॥ ५० ॥ नृसिंहः = ना सिंह इव। पुरुषोत्तम इति वा ॥ ५१ ॥

अष्टौ ।।११।।

अथ ब्राह्मण्यादिमहाफलप्रदः

महा मंत्राः

## संध्यागायत्रीमंत्रजपः ।

प्राणायामन्यासादिपूर्वकं गायत्रीजपः। जपोपसंहारः। संध्योपस्थानं । यस्यस्मृत्येति भगवति समर्पणं च ।

## अथ श्रीहंसै[२७]मंत्रः ॥

पूर्वदिनकृतश्वासरूपहंसमहामंत्रजपोपसंहारः। ओं ❁ हंसः सोऽहं स्वाहा

---

२७. हंसमंत्रोद्धारः—वियत्स इति युग्मार्णो विपरीतश्च सः स्मृतः। सः सर्गहीनो वेतश्च बिंदुहीनोत्तरस्तथा। अर्थः—वियत् आकाशबीजं हं। ततः सः इत्यक्षरं। इति युग्मार्णः = द्व्यक्षरः 'हंसः' इति प्रथमो मंत्रः। विपरीतः = व्युत्क्रमेणोच्चारितः। सः = हंसः सोऽहं इति द्वितीयो द्व्यक्षरो मंत्रः। सर्गहीनः = अकारविसर्गरहितः सः = स इत्यक्षरं। स् इति भवति। सः (स्) वेतः = वाकारेण युक्तः स्वा इत्येकार्णः। ।।११।। बिंदुहीनोत्तरः = विसर्गरहितः [आकारसहितश्च] उत्तरवर्णो हः हा इति। तथात्र स्वा + हा = 'स्वाहा' इति द्व्यक्षरस्तृतीयो मंत्रः। एतन्मंत्रत्रयात्मक एको मालामंत्रः। बहुमंत्रघटितमंत्रो मालामंत्रः।

⊛ ओं । इति मालामंत्रेण प्राणायामः । षडंगैर्न्यासः । ओं हंसः हृदयाय नमः । ओं सोऽहं शिरसे स्वाहा । ओं स्वाहा शिखायै वौषट् । ओं हंसः कवचाय हुं । ओं सोऽहं नेत्राभ्यां वषट् । ओं स्वाहा अस्त्राय फट् । इति दिग्बंधः । अस्य श्रीमंत्रत्रयमालारूपषडक्षरहंसमहामंत्रस्य ब्रह्मा ऋषिः शिरसि । गायत्री च्छंदः मुखे । हंसरूपी श्रीलक्ष्मीनारायणो देवता हृदये । जपोपसंहारे विनियोगः । ध्यानं- ध्यायेद्रवींदुकरमिंदुसहस्रलक्षकांतिं प्रियासहितमास्थितमिंदुबिंबे । शंखारिदोर्द्वयमुदर्कमहें- दुबिंबात्संसिच्यमानममृतेन रमाधिनाथं । श्रीमुख्यप्राणांतर्गतलक्ष्मीनारायणप्रेरणया

---

२८. तैरेव तु द्विरावृत्तैरंगमेषां प्रकीर्तितं । अर्थः—द्विरावृत्तैः = द्विवारमुच्चारितैः । तैरेव तु = मंत्रैः मंत्रत्रयेण । एषां = मंत्राणां मालामंत्रस्य । अंगं = षडंगं प्रकीर्तितं ॥

२९. ध्यानश्लोकार्थः—रवींदुकरं=ऊर्ध्वहस्तद्वये सूर्यचंद्रयुक्तं । शंखारिदोर्द्वयं = अधोहस्तद्वये शंखचक्रधरं । इंदुसहस्रलक्षकांतिं = इंदूनां सहस्रं लक्षं वा इंदुसहस्रलक्षं । अधिकार्यपेक्षया सहस्रलक्षेति । तस्य कांतिरिव कांतिर्यस्य तं । इंदुबिंबे = चंद्रमंडले । प्रियासहितं = महालक्ष्म्या सह स्थितं । उदर्कमहेंदुबिंबात्=विंशत्सहस्रयोजनविस्तृतत्वेन उदर्कात् सूर्यादुत्कृष्टात् । अर्कादुपरिगतत्वाद्वा । महेंदुबिंबात् = महाचंद्रमंडलैकदेशात् । निःसृतेन अमृतेन । संसिच्यमानं=अभिषिच्यमानं । रमाधिनाथं = लक्ष्मीपतिं ध्यायेत् ॥

अष्टौ लक्ष्मीनारायणप्रीत्यर्थं पूर्वेद्युः प्रातः सूर्योदयमारभ्य अद्य प्रातः सूर्योदयपर्यंतं मद्देहे स्थित्वा मुख्यप्राणेन कृतेन मुख्यप्राणप्रेरितेन मया कृतेन च षट्शताधिकैकविंशत्सहस्र २१६०० ॥१२॥ संख्याकश्वासरूपहंसमहामंत्रजपेन भगवान् मुख्यप्राणपतिः हंसरूपी लक्ष्मीनारायणः प्रीयतां। इति समर्प्य। मुख्यप्राणेन मद्देहे मंत्रत्रयजपः सदा। अनुग्रहाय मे विष्णुप्रीतये क्रियते हि सः। एकविंशत्सहस्रात्मा सषट्शतमहर्निशं। तत्सर्वं विष्णुपूजोऽस्तु प्रीयतां प्राणमापतिः। इति पठेत्। इति पूर्वदिनकृतश्वासमंत्रजपोपसंहारः।

महा मंत्राः

---

३०. त्रय एते महामंत्राः। अर्थः—एते त्रयः = हंसः सोऽहं स्वाहा इति त्रयः। महामंत्राः = महापुरुषार्थप्रदत्वात् महामंत्राः।

३१. श्वासरूपो जपो नित्यमुभयोर्विद्वदज्ञयोः। अर्पणीयो हरौ नित्यं प्रातर्योगो महानयं। अर्थः—विद्वदज्ञयोरुभयोः जपः अस्तीति शेषः। ज्ञान्यज्ञानिरूपोभयविधैः सर्वैरपि जनैः। श्वासरूपो जपः = स्वप्रयत्नं विना स्वत एव भवन् श्वासात्मको जपः क्रियत एवेति यावत्। तथापि अयं हरौ = लक्ष्मीनारायणे। अर्पणीयः = समर्पणीयः। ॥१२॥ तत्र ज्ञानी समर्पयति। तेन तस्य उक्तं सर्वमपि फलं भवति। अज्ञानी तु न समर्पयति। तस्मात्तस्य फलं न भवति। अयं महान् योगः = महामंत्रः। प्रातर्योगः = प्रातः प्रथमं पूर्वकृतं समर्प्य अनुपदं आरंभणीयश्च। अतोऽस्य मंत्रस्य प्रातर्योग इति नाम। उक्तं च ऋग्भाष्ये। "प्रातर्योगेन गम्यत" इति। तत्र प्रातर्योगेन = हंसमंत्रेणेति टीकोक्तेः।

अथ तदैव पुनः धर्मार्थकाममोक्षकल्पवृक्षः[32] विष्णुप्रीतिकरः तत्वज्ञानप्रदः अशेषदोषपरिहारकः अष्टैश्वर्यप्रदः हंसमंत्रजपः आरंभणीयः ॥

## श्रीहंसमहामंत्रजपः ।

श्रीगुरुभ्यो नमः । ११ स्थाने हंसरूपिश्रीलक्ष्मीनारायणाय नमः । ओं ❀ हंसः[33] सोऽहं स्वाहा ❀ ओं । इति मंत्रेण ३६।२४।१२ वारं वा । प्राणायामः । ततः षडंगन्यासः । ओं हंसः हृदयाय नमः । ओं सोऽहं शिरसे स्वाहा । ओं स्वाहा शिखायै वौषट् । ओं हंसः कवचाय हुं । ओं सोऽहं नेत्राभ्यां वषट् । ओं स्वाहा अस्त्राय फट् । इति दिग्बंधः । अस्य श्रीमंत्रत्रयमालारूपषडक्षरहंसमहामंत्रस्य ब्रह्मा ऋषिः शिरसि । गायत्री च्छंदः मुखे । श्रीहंसरूपी श्रीलक्ष्मीनारायणो देवता हृदये । श्वासरूपहंसमहामंत्रजपे विनियोगः । ध्यानं—ध्यायेद्रवींदुकरमिंदुसहस्रलक्षकांतिं[34]

---

३२. अशेषदोषदहनः तत्वज्ञानप्रदायकः । अष्टैश्वर्यप्रदश्चैव कृतादौ समुपासतां । अर्थः—श्वासरूपो जप इति शेषः । अर्थविस्तरस्तु द्वितीयतरंगे ।

३३. हंसमंत्रार्थः—हंसः = दोषरहितो गुणपरिपूर्णश्च । सोऽहं = परोक्षः सर्वैरपि हातुमशक्यश्च । स्वाहा = सर्वैः सुष्ठ्वाहूयमानः ॥

३४. ध्यानश्लोकार्थो गतः [ १२ । अनंके]

अष्टौ प्रियासहितमास्थितमिंदुबिंबे । शंखारिदोर्द्वयमुदर्कमहेंदुबिंबात्संसिच्यमानममृतेन रमाधिनाथं । महा
श्रीमुख्यप्राणांतर्गतश्रीलक्ष्मीनारायणप्रेरणया श्रीलक्ष्मीनारायणप्रीत्यर्थं अद्य प्रातः सूर्योदय- मंत्राः
॥१३॥ मारभ्य श्वः प्रातः सूर्योदयपर्यंतं मुख्यप्राणः मद्देहे स्थित्वा षट्शताधिकैकविंशत्सहस्र (२१६००) संख्याकश्वासरूपहंसमहामंत्रजपं करोति तत्प्रेरितोऽहं च करोमि । इति संकल्प्य । यत्प्राण्याद्यदपान्याच्च ताभ्यां परमपूरुषं । उपास्ये मुख्ययोगेन स हंसः प्रीयतां हरिः । इति पठेत् ॥

अथ विष्णुप्रीतिकराः मोक्षादिमहाफलप्रदाः सर्वमंत्रमूलभूताः अष्टौ महामंत्राः ।

## अथ तत्र श्रीप्रणवमहामंत्रः ॥ १ ॥

श्रीगुरुभ्यो नमः । ११ स्थाने परमात्मने नमः । ओं ❀ ओं ❀ ओं ।

---

३५. अहमेकोऽखिलगुणो वाचकः प्रणवो मम । अकाराद्यतिशांतांतः सोयमष्टा- ॥१३॥
क्षरो मतः । अर्थः—यतः अहमेव अखिलगुणपूर्णः । ततः प्रणवो मम वाचक इत्यस्ति । अहमिति ब्रह्माणं प्रति भगवद्वचनं । प्रणवे अष्टौ अक्षराणि संति । तेषु प्रथमः अकारः अंते अतिशांतः । उकारः मकारः नादः बिंदुः घोषः शांतश्च मध्ये ।

इति मंत्रेण प्राणायामः । अंगदेवताध्यानं—वासुदेवा[३६]दिकाः शुक्ररक्तपीतासितोज्ज्वलाः । चक्रशंखगदाब्जेतः प्रथमो मुसली हली । सशंखचक्रस्त्वपरस्तृतीयः शार्ङ्गबाणवान् । सचक्रशंखस्तुर्यस्तु चक्रशंखासिचर्मवान् । ततः पंचांगन्यासः । ओं भूः अ[३७]ग्न्यात्मने अनिरुद्धाय हृदयाय नमः । ओं भुवः वाय्वात्मने प्रद्युम्नाय शिरसे स्वाहा । ओं स्वः सूर्यात्मने संकर्षणाय शिखायै वौषट् । ओं भूर्भुवःस्वः प्रजापत्यात्मने कवचाय हुं । ओं सत्यं नारायणाय अस्त्राय फट् । इति दिग्बंधः । वर्णदेवताध्यानं—मूर्तयो[३८]ऽष्टावपि ध्येयाश्चक्रशंखवराभयैः । युक्ताः प्रदीपवर्णाश्च सर्वाभरणभूषिताः । अथ वर्णन्यासः[३९] ।

---

३६. ध्यानश्लोकार्थः तत्वमंत्रे गतः [४ । अनंके]

३७. अंगन्यासोद्धारः—समासव्यासयोगेन व्याहृतीनां चतुष्टयं । सत्यं चांगानि तारस्य । अर्थः—व्याहृतीनां व्यासयोगेन = पृथक्करणरूपोपायेन । समासेन = समस्तेन मिलितेन । चतुष्टयं = भूः । भुवः । स्वः । भूर्भुवःस्वः । इति मंत्रचतुष्टयेन न्यास-चतुष्टयं । सत्यं इति मंत्रेण पंचमं । तारस्य = तारयति भक्ताननिष्टनिचयादिति तार ओंकारः । तस्य अंगानि = पंचांगानि ।

३८. मूर्तयोऽष्टावित्यस्यार्थः मातृकान्यासे [८ । सांके] गतः ।

३९. वर्णन्यासस्त्रिविधः—सृष्टिन्यासः स्थितिन्यासः लयन्यासश्चेति । शिर आरभ्य

மறி உறங்கிவிட்டாள். அப்பொழுது மணிமேகலா தெய்வம் தனது மந்திரத்தால் மணிமேகலையை மயங்கச்செய்து, அவளைத்தழுவி யெடுத்துக்கொண்டு வான்வழியே சென்று சக்கர வாளக் கோட்டத்திற்குத் தென்பால் உள்ள மணிபல்லவம் என்னும் ஒரு சிறு தீவில் வைத்து விட்டுச் சென்றது.

### மணிமேகலா தெய்வம் உதயகுமரனுக்கு அறிவு புகட்டுதல்.

மணிமேகலா தெய்வம் மணிமேகலையை மணிபல்லவத்தில் வைத்துவிட்டுப் "பொழுது விடிந்தபின் எப்படியாவது மணிமேகலையைக் கைப்பற்றிக் கொள்வேன்" என்று நினைத்துத் தூக்கமின்றிப் படுக்கையிற் புரண்டு கொண்டிருக்கும், உதயகுமரன் முன் தோன்றியது. தோன்றி "ஓ அரசகுமாரனே! அரசன் செங்கோல் மாறுபடுமாயின், கோள்களின் நிலைமாறுபடும். கோள்களின் நிலைமாறுபடுமாயின், மழைவளங்குறையும், மழைவளங் குறையுமாயின் உலகத் துயிர்கள் வாழா. உலகத்துயிர்களும் அரசனுடைய உயிர் என்று சொல்லக் கூடிய தகுதியில்லாமற் போய்விடும். ஆகையால் தவநெறியை மேற்கொண்ட மணிமேகலையின் பாலுள்ள காதலை இனி நீ விட்டு விடுவாயாக" என்று கூறிற்று.

### மணிமேகலா தெய்வம் சுதமதிக்கு மணிமேகலையின் செய்தி கூறுதல்.

பின்பு மணிமேகலா தெய்வம் உவவனத்தை அடைந்து, அங்குத் தூங்குகின்ற சுதமதியை எழுப்பி "நான் மணிமேகலா தெய்வம். இந்நகரில் நடைபெறும் இந்திரவிழவைக் காணும் பொருட்டு வந்தேன். நீ சிறிதும் அஞ்சவேண்டாம். மணிமேகலைக்குப் பௌத்தமத நெறியிற் செல்லக்கூடிய நற்காலம் உண்டாயிற்று. ஆதலால் அவளைத் தூக்கிச்சென்று மணிபல்லவத் தீவில் வைத்திருக்கின்றேன். அவள் தனது முற்பிறப்

ध्यानं—ॐ[42]द्यद्भास्वत्समाभासश्चिदानंदैकदेहवान्। चक्रशंखगदापद्मधरो ध्येयोऽहमीश्वरः। लक्ष्मीधराभ्यामाश्लिष्टः स्वमूर्तिगणमध्यगः। ब्रह्मवायुशिवाहीशविपैः शक्रादिकैरपि। सेव्यमानोऽधिकं भक्त्या नित्यनिःशेषशक्तिमान्। मूर्तयोऽष्टौ[43]वपि ध्येयाश्चक्रशंखवराभयैः। युक्ताः प्रदीपवर्णाश्च सर्वाभरणभूषिताः। श्रीपरमात्मप्रेरणया श्रीपरमात्मप्रीत्यर्थं प्रणवमहामंत्रजपं करिष्ये। ओं ❁[44] ओं ❁ ओं। इति मंत्रजपः। गृहिणां दशवारमेव एतन्मंत्रजपेऽधिकारः। पुनर्मंत्रोपसंहारार्थं प्राणायामः अंगदेवताध्यानं पंचांगन्यासः वर्णदेवताध्यानं वर्णन्यासः ऋष्यादिन्यासः मंत्रदेवताध्यानं च एतन्मंत्रादावुक्तप्रकारेण कार्यं।

---

४२. ध्यानश्लोकार्थस्तु मातृकान्यासे गतः [८। अनंके]

४३. अर्थः मातृकामंत्रे गतः [८। सांके]

४४. प्रणवार्थः—ओं = देशतः कालतो गुणतश्च ओतत्वादों। सर्वस्वामित्वेन सर्वत्र प्रसिद्धत्वाद्वा। ओमशेषगुणाधार इति नारायणोऽप्यसौ। सर्वभिन्नत्वात् निर्दोषत्वाद्वा अः। सर्वोत्कृष्टत्वात् उः। सर्ववेदादिवेद्यत्वाज्ज्ञानरूपत्वाद्वा मः इति ओंकारस्य वर्णत्रयार्थो ज्ञेयः। निर्दोषत्वेन सर्वोत्कृष्टत्वेन च वेदप्रतिपाद्य इत्यर्थः।

अष्टौ ॥१५॥

श्रीपरमात्मप्रेरणया श्रीपरमात्मप्रीत्यर्थं प्रणवमहामंत्रजपः संपूर्णः । ओं ❀ ओं ❀ ओं ।
इति मंत्रेण परमात्मानं [45]तर्पयामि । इति प्रणवमहामंत्रः ॥ १ ॥

महा मंत्राः

## अथ [46]नारायणाष्टाक्षरमहामंत्रः ।

[अयमेव मूलमंत्रः]

श्रीगुरुभ्यो नमः । एकादशस्थाने श्रीनारायणाय नमः । ओं ❀ [47]ओं नमो

---

४५. जले मंत्रदेवतामावाह्य संपूज्य च तेन जलेनार्घ्यं दद्यात् । जपांतेऽर्घ्यमिति बहुमतं । आदाविति केचित् ।

४६. नारायणाष्टाक्षरमंत्रोद्धारः — नारायणाष्टाक्षरश्च ताराष्टाक्षरभेदवान् । अर्थः — नारायणाष्टाक्षरश्च । ताराष्टाक्षरभेदवान् = तारस्य ओंकारस्य यान्यष्टाक्षराणि अकार-उकार-मकार-नाद-बिंदु-घोष-शांत-अतिशांताख्यानि तेभ्यः नारायणाष्टारः । भेदवान्= संजातभेदः उत्पन्न इत्यर्थः । ॥१५॥

४७. आद्यंतयोरोंकारौ न मंत्रावयवौ । किंतु 'स्रवत्यनोंकृतं ब्रह्म परस्ताच्च विशीर्यत ' इति संपुटस्थानीयौ ।

றாய்! முன்னே உனது தங்கையாக இருந்த இலக்குமி என்பவள் இப்பொழுது மணிமேகலையாகப் பிறந்தாள். அம் மணிமேகலை தனது பழம் பிறப்புடன் உனது பழம் பிறப்பையும் உணர்ந்து கொண்டு இன்று ஏழாம் நாள் இங்குவருவாள். ஆதலால் நீ அஞ்சற்க" வென்று கூறிற்று.

### காலைக்காட்சி.

பிறகு, இரவில் காவல் புரிந்தவர்கள் தூங்கவும், உறங்குகின்ற ஆடவரும் பெண்டிரும் விழித்தெழவும், வலம்புரிச் சங்குகள் முழங்கவும், புள்ளர் கூட்டம் பொற்போர் புரியவும், யானைகள் பேரொலி செய்யவும், கோழிகள் கூவவும், குதிரைப் பந்தியில் உள்ள பரிகள் ஆடவும், மரக்கிளைகளிலுள்ள பறவைகள் பலவும் ஒலிக்கவும், சோலைகளிற் பறவைகளின் ஒலி முழங்கவும், பெண்கள் கைகளில் உள்ள வளையல்கள் ஓசையிடவும், தெய்வங்களுக்குரிய பலிபீடங்கள் பூப்பலி கொள்ளவும், அணிகலன்கள் விற்கப்படுகின்ற கடைகள் மலரால் செய்யப்படும் அர்ச்சனைகளைக் கொள்ளவும், தோற்கருவிகளை வாசிக்கின்ற இடங்களில் வாத்தியங்கள் முழங்கவும், கொடையாளர்களின் வாயில்களில் பல பண்டங்கள் நிறைந்திருக்கவும், கரிய இருளையோட்டிக் கதிரவன் கீழ்த்திசையிலிருந்து கிளரொளி துலங்க வந்து சேர்ந்தான்.

இத்தகைய காலைப்போதில் உலக அறவியைவிட்டுச் சுதமதி, அம்பேறுண்ட மயில்போல வருந்தி, வீதியின் வழியே சென்று மாதவியை அடைந்து, சென்ற இரவில் நடந்த நிகழ்ச்சிகளை எல்லாம் ஒன்றுவிடாமல் அவளுக்குக்கூறினாள். மாதவியும் தன்னிடத்தில் உள்ள உயிர் மணியை இழந்த நாகத்தைப்போலத் தன் மகள் வாராமைக்காகப் பெரிதும் துயரமடைந்து உயிரிழந்த உடலைப்போல இருந்தாள்.

ओं वीरोल्काय मध्यमाभ्यां नमः ॥ ३ ॥ ओं द्युल्काय अनामिकाभ्यां नमः ॥ ४ ॥ ओं सहस्रोल्काय कनिष्ठिकाभ्यां नमः ॥ ५ ॥ ततः पंचांगन्यासः । ओं क्रुद्धोल्काय हृदयाय नमः । ओं महोल्काय शिरसे स्वाहा । ओं वीरोल्काय शिखायै वौषट् । ओं द्युल्काय कवचाय हुं । ओं सहस्रोल्काय अस्त्राय फट् । इति दिग्बंधः । वर्णदेवताध्यानं । मूर्तयोऽष्टावपि ध्येयाश्चक्रशंखवराभयैः । युक्ताः

---

यस्मात्सः । (३) वीरोल्कः = वीराणां ऋजूनां उं उत्कृष्टं । लं अमृतं । कायति ददामीति प्रतिजानीत इति वीरोल्कः । लकारस्त्वमृते स्मृत इति धनंजयः । (४) द्युल्कः = द्युलोकोपलक्षितानां चतुर्दशभुवनानामपि उल्केव प्रकाशकः ॥ अत्र उकारस्य दीर्घाभावश्छांदसः । (५) सहस्रोल्कः = सहस्रसंख्याकाः उल्कोपमाः कांतिविशेषा यस्येति ॥

५०. मूर्तय इति श्लोकार्थः पूर्वं गतः । ता अष्टौ मूर्तयस्तु स विश्वतैजसप्राज्ञतुरीयात्मांतरात्मनां । परमात्मज्ञानात्मयुजां मद्रूपाणां च वाचकः । अर्थः—सः अष्टाक्षरात्मकः प्रणवः । स्वावयवैः अकारोकाराद्यष्टवर्णैः विश्वतैजसादीनां अष्टानां मद्रूपाणां च वाचकः । नकेवलंममेति चार्थः । यद्वाकृष्णो रामो नृसिंहश्च वराहो विष्णुरेव च । परंज्योतिः परंब्रह्म वासुदेव इति क्रमात् । अकारादेस्तथा शांतातिशांतस्य देवता इति पक्षांतरसमुच्चयार्थो वा । इदं भगवद्वचनं । ज्ञानात्मयुजां = ज्ञानात्मसंज्ञकानां ।

॥१६॥

प्रदीपवर्णाश्च सर्वाभरणभूषिताः । ततो वर्णांगन्यासः । ओं ओं विश्वाय नमः शिरसि मध्यमांगुल्या । ओं नं तैजसाय नमः नेत्रयोः तर्जनीमध्यमाभ्यां । ओं मों प्राज्ञाय नमः नासयोः अंगुष्ठानामिकाभ्यां । ओं नां तुर्याय नमः मुखे अंगुष्ठतर्जनीभ्यां । ओं रां आत्मने नमः पादयोः पंचांगुलीभिः । ओं यं अंतरात्मने नमः जान्वोः पंचांगुलीभिः । ओं णां परमात्मने नमः नाभौ अंगुष्ठवर्जसर्वांगुलीभिः । ओं यं ज्ञानात्मने नमः हृदये अंगुष्ठानामिकाभ्यां । ततो वर्णांगुलिन्यासः । ओं ओं विश्वाय नमः । ओं नं तैजसाय नमः । ओं मों प्राज्ञाय नमः । ओं नां तुर्याय नमः । इति दक्षिणहस्ततर्जन्यादि-तत्कनिष्ठिकांतं न्यसेत् । ओं रां आत्मने नमः । ओं यं अंतरात्मने नमः । ओं णां परमात्मने नमः । ओं ज्ञानात्मयंने नमः । इति वामहस्ततर्जन्यादितत्कनिष्ठिकांतं न्यसेत् । ततो ऋष्यादिन्यासः । अस्य श्रीनारायणाष्टाक्षरमहामंत्रस्य अंतर्यामी ऋषिः शिरसि । दैवी गायत्री च्छंदः मुखे । श्रीनारायणो देवता हृदये । श्रीनारायण-

---

५१. वर्णन्यासस्थानान्याह—पज्जानुनाभिहृदयवाङ्नासानेत्रकेषु च । अष्टाक्षराणां न्यासः स्यात् । अर्थः—पत्=पादः । कं=शिरः । पज्जान्वित्युक्तो न्यासः लयन्यासः । अस्मिन्पुस्तके तु स्थितिन्यास एव लिखितः ।

५२. ऋषिश्च देवतैकोऽहं इत्यादिप्रणवमंत्रे [५ । निरंके] गतः.

प्रेरणया श्रीनारायणप्रीत्यर्थं जपे विनियोगः । मंत्रदेवताध्यानं—उँ[५३]द्यद्भास्वत्समाभासश्चिदानंदैकदेहवान् । चक्रशंखगदापद्मधरो ध्येयोऽहमीश्वरः । लक्ष्मीधराभ्यामाश्लिष्टः स्वमूर्तिगणमध्यगः । ब्रह्मवायुशिवाहीशविपैः शक्रादिकैरपि । सेव्यमानोऽधिकं भक्त्या नित्यनिःशेषशक्तिमान् । मू[५४]र्तयोऽष्टावपि ध्येयाश्चक्रशंखवराभयैः । युक्ताः प्रदीपवर्णाश्च सर्वाभरणभूषिताः । श्रीनारायणप्रेरणया श्रीनारायणप्रीत्यर्थं श्रीनारायणाष्टाक्षरमहामंत्रजपं करिष्ये । ओं ⊛ ओं नमो नारा[५५]यणाय ⊛ ओं । इति गायत्र्यां[५६]



---

५३. अर्थो मातृकामंत्रे द्रष्टव्यः [८। निरंके]

५४. एतस्यार्थः पूर्वं गतः [८। सांके]

५५. मंत्रार्थः—सत् चित् आनंदः आत्मा इति गुणचतुष्टयमपि नारायणशब्दार्थः। तथाहि—अदोषाश्रयत्वात् सर्वचेतनापेक्षितज्ञानानंदाश्रयत्वात् सर्वचेतनसंघस्वामित्वेनायनाच्च नारायणः। तस्मै तत्प्रीत्यर्थं। तदुद्देशेनेति यावत्। नमः = तनुमनआदीनां भगवत्प्रवणत्वमस्त्विति॥ ओंकारार्थस्तु प्रणवमंत्रे[ १५। अनंके]द्रष्टव्यः। विशेषार्थश्च सुधातत्वप्रकाशिकासंबंधदीपिकादिग्रंथेषु द्रष्टव्यः।

५६. संध्यागायत्रीजपे यावंति अक्षराणि भवंति तावद्भिरक्षरैस्तत्तन्मंत्रेष्वपि भाव्यं। एवमुत्तरमंत्रेष्वपि ज्ञेयं।

त्रिगुणो मंत्रजपः कार्यः। ततः मंत्रजपोपसंहारार्थं क्रुद्धोल्कादिध्यानं पंचांगुलिन्यासः पंचांगन्यासः वर्णदेवताध्यानं वर्णांगन्यासः वर्णांगुलिन्यासः ऋष्यादिन्यासः मंत्रदेवताध्यानं च। एतत्सर्वं मंत्रादावुक्तप्रकारेण ज्ञेयं। श्रीनारायणप्रेरणया श्रीनारायणप्रीत्यर्थं श्रीनारायणाष्टाक्षरमहामंत्रजपः संपूर्णः। ओं ❀ ओं नमो नारायणाय ❀ ओं। इति मंत्रेण श्रीनारायणं तर्पयामि इति तर्पणं ॥ इति नारायणाष्टाक्षरमहामंत्रजपः॥२॥

## अथ अष्टाक्षरव्याहृतिमहामंत्रः ॥ ३ ॥

श्रीगुरुभ्यो नमः। ११ स्थाने हरये नमः। ॐ ❀ भूः भुवः स्वः भूर्भुवःस्वः ❀ ॐ। इति मंत्रेण प्राणायामः। अंगदेवताध्यानं। वासुदेवादिकाः शुक्लरक्तपीताऽसितो-

---

५७. व्याहृतिमंत्रोद्धारः—आद्यैस्तारचतुर्वर्णैर्भिन्ना व्याहृतयः क्रमात्। अर्थः—तारस्य आद्यानि यानि चतुर्वर्णानि अकार-उकार-मकार-नादाख्यानि। तेभ्यः चतस्रो व्याहृतय उत्पन्नाः। व्याहृतिचतुष्टयप्रतिपाद्यदेवता आह—अनिरुद्धादिकास्तासां देवता व्युत्क्रमेण तु। अर्थः—अनिरुद्धादिकाः = अनिरुद्धप्रद्युम्नसंकर्षणवासुदेवाः। तासां = व्याहृतीनां देवताः संन्यासिनां। गृहिणां तु व्युत्क्रमेण = विपरीतक्रमेण वासुदेव-संकर्षणप्रद्युम्नानिरुद्धा इति व्याहृतिदेवता भवंति।

५८. ध्यानश्लोकार्थो गतः पूर्वं [४। निरंके]।

द्वास- ज्ज्वलाः। चक्रशंखगदाब्जेतः प्रथमो मुसली हली। सशंखचक्रस्त्वपरः तृतीयः शार्ङ्गबाणवान्। प्रति-
सशंखचक्रस्तुर्यस्तु चक्रशंखासिचर्मवान्। पंचांगन्यासः। ओं ओं नारायणाय हृदयाय नमः।
॥१८॥ ओं भूः वासुदेवाय शिरसे स्वाहा। ओं भुवः संकर्षणाय शिखायै वौषट्। ओं स्वः प्रद्युम्नाय मंत्राः
कवचाय हुं। ओं भूर्भुवःस्वः अनिरुद्धाय अस्त्राय फट्। इति दिग्बंधः। ततो वर्णन्यासस्थानीयो न्यासः। ओं भूः वासुदेवाय नमः शिरसि। ओं भुवः संकर्षणाय नमः नाभौ। ओं स्वः प्रद्युम्नाय नमः हृदये। ओं भूर्भुवःस्वः अनिरुद्धाय नमः। शिरआरभ्य नाभिपर्यंतं सर्वांगे[व्याहृतिचतुष्टयेन हस्तद्वयतर्जन्यादितत्कनिष्ठिकांतं चतुरंगुलिन्यासोऽपि] अस्य श्रीअष्टाक्षरव्याहृतिमहामंत्रस्य ब्रह्मा[६१] ऋषिः शिरसि। गायत्री च्छंदः मुखे।

---

५९. पंचांगन्यासमंत्रानाह—तारेण व्याहृतीभिश्च ज्ञेयान्यंगानि पंच च। अर्थः—तारेण = प्रणवेन। चतुर्भिर्व्याहृतिभिश्चेति पंचभिर्मंत्रैः पंचांगानि ज्ञेयानि। प्रथमांगस्य देवता तु नारायणः। इतरेषां चतुर्णां वासुदेवादयश्चत्वारः। ॥१८॥

[६०. अंगुलिन्यासो यथा—ओं भूः वासुदेवाय तर्जनीभ्यां नमः :। ओं। भुवः संकर्षणाय मध्यमाभ्यां नमः। ओं स्वः प्रद्युम्नाय अनामिकाभ्यां नमः। ओं भूर्भुवः स्वः अनिरुद्धाय कनिष्ठिकाभ्यां नमः। इति ॥]

६१. ऋष्यादिमंत्रोद्धारः—व्याहृतीनां प्रजापतिः। मुनिश्च्छंदस्तु गायत्री देवता

श्रीहरिर्देवता हृदये। जपे विनियोगः। मंत्रदेवताध्यानं। उ[६२]द्यदादित्यवर्णश्च ज्ञानमुद्राभयोद्यतः। लक्ष्मीधराभ्यामाश्लिष्टः स्वमूर्तिगणमध्यगः। ब्रह्मवायुशिवाहीशविपैः शक्रादिकैरपि। सेव्यमानोऽधिकं भक्त्या नित्यनिःशेषशक्तिमान्। श्रीहरिप्रेरणया श्रीहरिप्रीत्यर्थं अष्टाक्षरव्याहृतिमहामंत्रजपं करिष्ये। ॐ ❀ भू[६३]ः भुवः स्वः भूर्भुवःस्वः ❀ ॐ। इति मंत्रजपः। पुनर्मंत्रोपसंहारार्थं प्राणायामः अंगदेवताध्यानं वर्णांगन्यासः [अंगुलिन्यासः] ऋष्यादिन्यासः मंत्रदेवताध्यानं च। श्रीहरिप्रेरणया श्रीहरिप्रीत्यर्थं अष्टाक्षरव्याहृतिमहामंत्रजपः संपूर्णः। ॐ ❀ भूः भुवः स्वः भूर्भुवःस्वः ❀ ॐ। इति मंत्रमुक्त्वा श्रीहरिं तर्पयामि। इति अष्टाक्षरव्याहृतिमहामंत्रः॥ २॥

---

भगवान्हरिः। अर्थः—विशिष्टस्य मंत्रस्य हरिर्देवता। व्यस्तानां भूरादीनां अनिरुद्धादिकाः वासुदेवादिका वा देवता इति पूर्वमुक्ताः।

६२. ध्यानश्लोकार्थः—उद्यदादित्यवर्णः = तत्कालोदितसूर्यवर्णः। ज्ञानमुद्राऽभयमुद्रायुक्तभुजद्वयोपेतः। लक्ष्मीधराभ्यामित्यस्यार्थः पूर्वं [८। निरंके] गतः।

६३. मंत्रार्थः—पूर्णत्वाद्भूः। भू बहौ। बहुः पूर्णतायां। भूत्याः महालक्ष्म्याः वरत्वाद्भुवः। अनंतसुखरूपत्वात्स्वः। तदुक्तं—पूर्णो भूतिवरोऽनंतसुखो यद्व्याहृतीरित इति।

# अथ श्रीवासुदेवद्वादशाक्षरमहामंत्रः ॥ ४ ॥

श्रीगुरुभ्यो नमः। ११ स्थाने श्रीवासुदेवाय नमः। ॐ ⊛ ॐ नमो भगवते वासुदेवाय ⊛ ॐ। इति मंत्रेण प्राणायामः। अंगदेवताध्यानं। वासुदेवादिकाः शुक्लरक्तपीतासितोज्ज्वलाः। चक्रशंखगदाब्जेतः प्रथमो मुसली हली। सशंखचक्रस्त्वपरः तृतीयः शार्ङ्गबाणवान्। सशंखचक्रस्तुर्यस्तु चक्रशंखासिचर्मवान्। पंचांगन्यासः। ओं ओं वासुदेवाय हृदयाय नमः। ओं नमः संकर्षणाय शिरसे स्वाहा। ओं भगवते

---

६४. मंत्रोद्धारः—नारायणाष्टाक्षराच्च व्याहृतिभ्यस्तथैव च। विभेदो द्वादशार्णानां केशवाद्याश्च देवताः। अर्थः—नारायणाष्टाक्षरमंत्रस्याष्टवर्णेभ्यः व्याहृतिमंत्रस्थचतुर्वर्णेभ्यश्चेति द्वादशवर्णेभ्यः द्वादशाक्षरस्थद्वादशवर्णानां। विभेदः = अभिव्यक्तिः। तासां देवताः केशवादिदामोदरांता द्वादश।

६५. अर्थः—तत्वन्यासे गतः [४। निरंके] ॥१९॥

६६. पदैर्व्यस्तैः समस्तैश्च ज्ञेयान्यंगानि पंच च। अष्टाक्षराणां स्थानेषु बाह्वोरूर्वोश्च विन्यसेत्। अर्थः—व्यस्तैः पदैः = ओं। नमः। भगवते। वासुदेवाय। इति चतुर्भिः पृथक्पृथक्पदैः चत्वार्यंगानि। समस्तैश्च = मिलितैः पदैः समस्तमंत्रेण पंचममंगं चेति

प्रद्युम्नाय शिखायै वौषट्। ओं वासुदेवाय अनिरुद्धाय कवचाय हुं। ओं ओं नमो भगवते वासुदेवाय नारायणाय अस्त्राय फट्। इति दिग्बंधः। वर्णदेवताध्यानं। शंखचक्रगदाब्जेतः केशवः सूर्यसंनिभः ॥ १ ॥ नारायणः साब्जगदाचक्रशंखो रविप्रभः ॥ २ ॥ माधवश्चक्रशंखाब्जगदेतो रविसप्रभः ॥ ३ ॥ गदाब्जशंखचक्रेतो गोविंदो भास्करद्युतिः ॥ ४ ॥ कंजकंबुचक्रगदायुतो विष्णू रविप्रभः ॥ ५ ॥ सशंखाब्जगदाचक्रः सूर्याभो मधुसूदनः ॥ ६ ॥ त्रिविक्रमो गदाचक्रशंखपद्मी रविद्युतिः ॥ ७ ॥

---

पंचांगानि ज्ञेयानि। वर्णन्यासस्थानानि तु अष्टाक्षराणां स्थानेषु = पञ्चान्विति [१७। निरंके] उक्तेषु अष्टसु। बाहुद्वये ऊरुद्वये चेति द्वादशस्थानेषु विन्यसेत्॥

केशवशब्दार्थः—१. कश्च ईशश्च केशौ ब्रह्मरुद्रौ। सृष्ट्यादिना तौ वर्तयतीति। हिरण्यगर्भः कः प्रोक्तः ईशः शंकर एव च। सृष्ट्यादिना वर्तयति तौ यतः केशवो भवान्॥ २. नारायणः = अस्यार्थः अष्टाक्षरमंत्रे [१७। सांके] द्रष्टव्यः॥ ३. माधवः=मायाः महालक्ष्म्याः धवः पतिः। मधुकुले जातत्वाद्वा॥ ४. गाः वेदवाचः। प्रतिपादकत्वेन विंदते लभत इति गोविंदः।

५. सर्वत्र व्याप्तत्वात्सर्वेषु प्रविष्टत्वाद्वा विष्णुः। रोदसी व्याप्य कान्तिरभ्यधिका स्थिताऽस्येति वा॥ ६. मधुनामकमसुरं सूदितवानिति मधुसूदनः॥ ७. त्रिषु लोकेषु त्रिविधेषु जीवराशिषु वा विक्रमो यस्य। त्रयः विक्रमाः पादविक्षेपाः बलेर्भूहरणार्थं

वामनोऽरिगदापद्मशंखी प्रोद्यद्रविप्रभः ॥ ८ ॥ श्रीधरोऽरिगदाकंबुपद्मी प्रोद्यद्रविप्रभः ॥ ९ ॥ सारिपद्मः शंखगदी हृषीकेशोऽर्कसंनिभः ॥ १० ॥ पद्मनाभः साब्जचक्रगदाशंखो रविद्युतिः ॥ ११ ॥ दामोदरः शंखगदाचक्रपद्मी रविप्रभः ॥ १२ ॥ वर्णन्यासः। ओं ओं केशवाय नमः शिरसि । ओं नं नारायणाय नमः नेत्रयोः। ओं मं माधवाय नमः नासयोः। ओं भं गोविंदाय नमः मुखे। ओं गं विष्णवे नमः पादयोः। ओं वं मधुसूदनाय नमः जान्वोः। ओं तें त्रिविक्रमाय नमः नाभौ। ओं वां वामनाय नमः हृदये। ओं तुं श्रीधराय नमः दक्षिणबाहौ। ओं दें हृषीकेशाय नमः

---

यस्येति वा त्रिविक्रमः। ८. वामत्वेन मंगलत्वेन स्वयं नयति प्रवर्तते। वामं सौंदर्यं नयति भक्तानां प्रापयतीति वा। वामान् सौंदर्यप्रधानान् लक्ष्म्यादिस्त्रीजनान् नयतीति वा वामनः। ९. श्रियं महालक्ष्मीं वक्षसि धरतीति श्रीधरः। १०. हृषीकेशः सर्वेंद्रियप्रेरकः। हृषी हृष्यः हृष्टाः केशाः अस्येति। अनेन तत्केशानामपि चेतनत्वमुक्तं भवति। हृषीकाणां सर्वेन्द्रियाणां तदभिमानिदेवतानां च प्रेरकत्वेन हृषीकेशः अग्नीषोमाद्यंतर्यामितया जगद्धर्षणादेर्वा। ११. पद्मनाभः = पद्मं नाभौ यस्य सः। १२. दामोदरः = दाम उदरे यस्य सः। यशोदया दाम्ना उदरे बद्धत्वात्।

६७. अष्टाक्षराणां स्थानेषु बाह्वोरूर्वोश्च विन्यसेत्। अर्थः—स्पष्टः।

वामबाहौ । ओं वां पद्मनाभाय नमः दक्षिणोरौ । ओं यं दामोदराय नमः वामोरौ [एभि-[६८]र्द्वादशमंत्रैः अंगुलिन्यासमपि केचन इच्छंति ।] अस्य श्रीवासुदेवद्वादशाक्षरमहामंत्रस्य अंत-[६९]र्यामी ऋषिः शिरसि । जगती[७०] च्छंदः मुखे । श्रीवासुदेवो देवता हृदये । जपे विनियोगः । मंत्रदेवताध्यानं—अच्छैत्वर्णो[७१]ऽभयवरकरो ध्येयोऽमितद्युतिः । लक्ष्मीधराभ्यामाश्लिष्टः स्वमूर्तिगणमध्यगः । ब्रह्मवायुशिवाहीशविपैः शक्रादिकैरपि । सेव्यमानोऽधिकं भक्त्या नित्यनिःशेषशक्तिमान् । मुख्यप्राणांतर्गतश्रीवासुदेवप्रेरणया श्रीवासुदेवप्रीत्यर्थं श्रीवासु-देवद्वादशाक्षरमहामंत्रजपं करिष्ये । ॐ ❁ ॐ नमो[७२] भगवते वासुदेवाय ❁ ॐ ।

---

[६८. अंगुलिन्यासप्रकारस्तु—ओं ओं केशवाय नमः । ओं नं नारायणाय नमः । ओं मं माधवाय नमः । इति हस्तद्वयतर्जन्योस्त्रिषु पर्वसु ॥ ओं भं गोविंदाय नमः । ओं गं विष्णवे नमः । ओं वं मधुसूदनाय नमः । इति मध्यमांगुल्योस्त्रिषु पर्वसु ॥ ओं तें त्रिविक्रमाय नमः । ओं वां वामनाय नमः । ओं सुं श्रीधराय नमः । इति अनामिकयोः पर्वत्रये ॥ ओं दें हृषीकेशाय नमः । ओं वां पद्मनाभाय नमः । ओं यं दामोदराय नमः ॥ इति हस्तद्वयकनिष्ठिकयोः पर्वसु ।] ६९. अन्यत्तारवत्स्मृतं ७०. द्वादशार्णस्य जगती च्छंदः ॥

७१. उद्यदादित्य इत्यादिस्थाने अच्छवर्ण इत्यादिज्ञेयं ।

७२. मंत्रार्थः—ओं = देशतः कालतो गुणतश्च व्याप्ताय । भगवते = षड्गुणो-

द्वास- इति गायत्र्या द्विगुणो मंत्रजपः। मंत्रोपसंहारार्थं पूर्ववत्प्राणायामः अंगदेवताध्यानं पंचांगन्यासः वर्णदेवताध्यानं वर्णन्यासः [वर्णांगुलिन्यासः] ऋष्यादिन्यासः मंत्रदेवताध्यानं च। श्रीमुख्यप्राणांतर्गतश्रीवासुदेवप्रेरणया श्रीवासुदेवप्रीत्यर्थं श्रीवासुदेवद्वादशाक्षरमहामंत्रजपः संपूर्णः। ॐ ❁ ॐ नमो भगवते वासुदेवाय ❁ ॐ। इति मंत्रमुक्त्वा श्रीवासुदेवं तर्पयामि। इति श्रीवासुदेवद्वादशाक्षरमहामंत्रः॥ ४॥ प्रति- मंत्राः

॥२१॥

## अथ ब्रह्मगायँत्रीमहामंत्रः॥ ५॥

श्रीगुरुभ्यो नमः। ११ स्थाने सवितृनामकलक्ष्मीनारायणाय नमः।

---

पलक्षितानंतकल्याणगुणपरिपूर्णाय। वासुदेवाय = वस्ते आच्छादयति सर्वमिति वासुः। वसतेरुण्। क्रीडादिगुणवत्त्वाद्देवः। वासुश्चासौ देवश्च। तस्मै नमः। छादयामि जगद्विश्वं भूत्वा सूर्य इवांशुभिः। सर्वभूताधिवासश्च वासुदेवस्ततोऽस्म्यहमिति गीताभाष्योदाहृतमोक्षधर्मवचनं। ॥२१॥

७२. मंत्रोद्धारः—नारायणाष्टाक्षराच्च व्याहृतित्रिगुणात्पुनः। वेदमाता च गायत्री द्विगुणा द्वादशाक्षरात्। अर्थः—नारायणाष्टाक्षरात् = मूलमंत्रस्थाष्टाक्षरेभ्यः अष्टौ अक्षराणि। व्याहृतित्रिगुणात् = त्रिगुणितव्याहृत्यक्षरेभ्यः द्वादश। पुनरेकवारमुच्चारि-

ॐ ❁ तत्स॑वि॒तुर्वरे॑ण्यं॒ भर्गो॑ दे॒वस्य॑ धीमहि। धियो॒ यो नः॑ प्रचो॒-दया॑त् ❁ ॐ। इति मंत्रेण। ॐ ❁ ॐ नमो नारायणाय ❁ ॐ। इति मंत्रेण वा प्राणायामः। अंगदेवताध्यानं—वासुदेवादिकाः शुक्लरक्तपीतासितोज्ज्वलाः। चक्रशंखगदाब्जेतः प्रथमो मुसली हली। सशंखचक्रस्त्वपरस्तृतीयः शार्ङ्गबाण-वान्। सचक्रशंखस्तुर्यस्तु चक्रशंखासिचर्मवान्। पंचांगैर्न्यासः। ओं ओं नारायणाय हृदयाय नमः। ओं भूः वासुदेवाय शिरसे स्वाहा। ओं भुवः संकर्षणाय शिखायै वौषट्। ओं स्वः प्रद्युम्नाय कवचाय हुं। ओं भूर्भुवः स्वः अनिरुद्धाय अस्त्राय फट्। इति दिग्बंधः। वर्णदेवताध्यानं—शंखचक्रगदाब्जेतः केशवः सूर्यसंनिभः [२०। अनंके] इत्यारभ्य

---

तव्याहृत्यक्षरेभ्यः चत्वारि। एवं च अष्टाक्षरव्याहृतिमंत्रसंबंधिभ्यः चतुर्विंशत्यक्षरेभ्यः गायत्र्याश्चतुर्विंशत्यक्षराणामभिव्यक्तिः। च = वा = अथवा द्विगुणात् द्वादशाक्षरात् = द्विरुच्चारितवासुदेवमंत्राक्षरेभ्यो वा। इयं गायत्री वेदमाता। ब्राह्मण्यसंपादयित्री। इयं गायत्री व्याहृतिरहिता। ७४. वासुदेवादिका इत्यस्यार्थः— [४। निरंके पत्रे] द्रष्टव्यः।

७५. सताराश्च व्याहृतयो गायत्र्यंगानि पंच च। अर्थः—गायत्र्याः पंचांगानि तारेण व्याहृतिभिश्च कार्याणीत्यर्थः।

द्वादश- चक्रपद्मी रविप्रभः । इत्यंतं पठेत् । ततः—शंखाब्जारिगदी सूर्यप्रभः संकर्षणो विभुः प्रति-
॥२२॥ ॥ १३ ॥ शंखचक्री कंजगदी वासुदेवो रविप्रभः ॥ १४ ॥ प्रद्युम्नो रविभाः मंत्राः
शंखगदाब्जारिधरो विभुः ॥ १५ ॥ अनिरुद्धो गदाशंखपद्मचक्री रविप्रभः ॥ १६ ॥
पद्मशंखगदाचक्री सूर्याभः पुरुषोत्तमः ॥ १७ ॥ रविप्रभो गदाशंखचक्राब्जेतो ह्यधोक्षजः
॥ १८ ॥ नृहरिः सूर्यभाः पद्मगदाशंखारिसंयुतः ॥ १९ ॥ सूर्याभोऽच्युतनामाऽब्ज-
चक्रशंखगदायुतः ॥ २० ॥ जनार्दनश्चक्रशंखगदाब्जेतो रविद्युतिः ॥ २१ ॥ उद्यदर्क-
निभोपेंद्रो गदाचक्राब्जशंखयुक् ॥ २२ ॥ सारिपद्मगदाशंखो हरिः प्रोद्य-

---

१३. संकर्षणः = संहारसमये युगपत्प्रजाः सम्यक्कर्षतीति । १४. वासुदेवः = अर्थः द्वादशाक्षरमंत्रे [२१ । निरंके] द्रष्टव्यः । १५. प्रद्युम्नः = प्रकृष्टं द्युम्नं द्रविणं यस्य सः यस्मात्स इति वा ।

१६. अनिरुद्धः—न केनापि रुद्धः । १७. पुरुषोत्तमः = क्षराक्षरपुरुषाभ्यामुत्तमः । ब्रह्मादितृणांताः क्षरः । महालक्ष्मीरक्षरा ताभ्यामुत्तम इत्यर्थः । १८. अधोक्षजः = अक्षजं ज्ञानमधःकृतं येन सः इति । १९. नृहरिः = मनुष्यवर्त्सिहवच्चाकारवान् । पुरुषोत्तम इति ॥२२॥
वा २०. अच्युतः = सर्वगुणैश्च्युतिहीनः । २१. जनार्दनः = न जायत इति जनः । नञ उत्तरनिपातः । अर्दयति संसारमित्यर्दनः । जनश्चासावर्दनश्च । २२. उपेंद्रः = इंद्रेभ्यः

द्रविप्रभः ॥ २३ ॥ उद्यदर्कनिभः कृष्णो गदापद्मारिशंखभृत् ॥ २४ ॥ अथ वर्णन्यासः । ओं तं केशवाय नमः ॥ १ ॥ ओं त्सं नारायणाय नमः ॥ २ ॥ ओं विं माधवाय नमः ॥ ३ ॥ ओं तुं गोविंदाय नमः ॥ ४ ॥ ओं वें विष्णवे नमः ॥ ५ ॥ इति दक्षिणहस्तसंध्यग्रेषु ॥ * ॥ ओं रें मधुसूदनाय नमः ॥ ६ ॥ ओं णं त्रिविक्रमाय नमः ॥ ७ ॥ ओं यं वामनाय नमः ॥ ८ ॥ ओं भं श्रीधराय नमः

---

ईश्वरेभ्यो ब्रह्मादिभ्योऽपि उपरि विद्यमानः ॥ वामनावतारे इंद्रानुजत्वाद्वा । २३. हरिः = हरति संसारं स्वभक्तानां । विशेषो व्याहृतिमंत्रे द्रष्टव्यः ।

२४. कृष्णः = सुखज्ञानबलचेष्टारूपी । सकललोकस्य नियमनादिना कर्षणाद्वा ॥ केशवादिचतुर्विंशतिमूर्तीनामायुधज्ञानार्थं श्रीवादिराजतीर्थकृतध्यानश्लोका लिख्यंते ॥ अधरं दक्षिणं हस्तमारभ्यैव प्रदक्षिणं । मूर्तिभेदान्हरेर्वक्ष्ये भवबंधविमुक्तये ॥ श्रीमत्पंकजशंखचक्रगदया संभूषिते केशवे (१) शंखांभोजगदासुदर्शनधरे नारायणे सर्वदा (२) ॥ भक्तिर्मेऽस्तु गदारिशंखजलजैर्युक्ते दृढा माधवे (३) गोविंदे वरचक्रधारिणि गदाफुल्लाब्जशंखांकिते (४) ॥ कौमोदक्यरविंदशंखविलसच्चक्रश्च विष्णुर्मुदा (५) चक्रांको मधुसूदनो दधदसौ शंखाब्जकौमोदकीः (६) ॥ नित्यं पद्मगदारिशंखसहितश्चित्ते मम त्रिक्रमो (७) युक्तस्तिष्ठतु शंखचक्रगदया पद्मी सदा वामनः (८) ॥ वंदे श्रीधर-

द्वास- ||९|| ओं गौं हृषीकेशाय नमः ||१०|| इति वामहस्तसंध्यग्रेषु || * || ओं दें पद्मनाभाय प्रति-
||२३|| नमः || ११ || ओं वं दामोदराय नमः || १२ || ओं स्यं संकर्षणाय नमः || १३ || मंत्राः
ओं धीं वासुदेवाय नमः || १४ || ओं मं प्रद्युम्नाय नमः || १५ || इति दक्षिण
पादसंध्यग्रेषु || * || ओं हिं अनिरुद्धाय नमः || १६ || ओं धिं पुरुषोत्तमाय
नमः || १७ || ओं यों अधोक्षजाय नमः || १८ || ओं यों नारसिंहाय नमः
|| १९ || ओं नं अच्युताय नमः || २० || इति वामपादसंध्यग्रेषु || * ||

---

मब्जचक्रगदया शंखेन चालंकृतं (९) नित्यं पाहि गदारिपंकजदरान्बिभ्रद्धृषीकेश
मां (१०) || शंखाब्जारिगदाधराद्य कुरु मे श्रीपद्मनाभाभयं (११) श्री दामोदर मब्जशंख-
गदिनं सारिं प्रपन्नोऽस्म्यहं (१२) || कौमोदक्युरुशंखपद्मसदरिः संकर्षणः शर्मदो
भूयात् (१३) सोग्र्यगदादरारिकमली श्रीवासुदेवोऽस्तु मे (१४) || प्रद्युम्नश्च रथांगकंबुगदया
युक्तोऽब्जपाणिर्मुदे (१५) चक्री चोरुगदी सशंखकमलो देवोऽनिरुद्धोऽस्तु मे (१६) ||
देवेशः पुरुषोत्तमोऽरिकमलः शंखी गदी चिद्वपु (१७) बिभ्रत्पद्मगदोरुशंखमरिणा साकं ||२३||
सदाऽधोक्षजः (१८) || चक्रांभोजगदादरांकितचतुर्बाहुर्नृसिंहः सुखं दद्यात् (१९)
अद्यममाच्युतः पृथुगदापद्मारिशंखी परं (२०) || साब्जारिः स जनार्दनोऽस्तु सदयः

ओं प्रं जनार्दनाय नमः शिरसि ॥ २१ ॥ ओं चों उपेंद्राय नमः मुखे ॥ २२ ॥ ओं दं हरये नमः नाभौ ॥ २३ ॥ ओं यां कृष्णाय नमः हृदये ॥ २४ ॥ अथ ऋष्यादिन्यासः । अस्य श्री ब्रह्मगायत्रीमहामंत्रस्य ब्रह्मा ऋषिः शिरसि। गायत्री च्छंदः मुखे । सवितृनामकलक्ष्मीनारायणो देवता हृदये। जपे विनियोगः । मंत्रदेवताध्यानं—प्रोद्यदादित्यवर्णश्च सूर्यमंडलमध्यगः। चक्रशंखधरोंकस्थदोर्द्वयो ध्येय एव च। सवितृनामकलक्ष्मीनारायणप्रेरणया

---

शंखी गदी मे सदा (२१) मूर्ध्नोपेंद्रमहं नतोऽस्मि सदरं युक्तं गदाद्यैर्भुजैः (२२) ॥ वंदे शंखसुदर्शनांबुजगदापाणिं हरिं मुक्तये (२३) कृष्णं शंखगदाब्जचक्रिणमहं भक्त्या समभ्यर्चये (२४) ॥

७६. विश्वामित्रस्तु संध्यार्थे तदन्यत्र प्रजापतिः। अर्थः—संध्याप्रयुक्तगायत्र्या विश्वामित्र ऋषिः। तदन्यत्र = संध्याभिन्ने महामंत्रे प्रजापतिः = ब्रह्मा ऋषिः।

७७. मुनिर्देवश्च सवितृनामा स्रष्टृत्वतो हरिः। अर्थः-मुनिरित्यस्य पूर्वपादेनान्वयः। अस्य मंत्रस्य स्रष्टृत्वगुणवत्त्वात् सवितृनामा हरिर्देवता।

७८. ध्यानश्लोकार्थः—उपरितनभुजाभ्यांचक्रशंखधरः। अंकस्थितं दोर्द्वयं यस्य सः। उत्तानपाणिद्वय इत्यर्थः। सूर्यमंडलमध्यग एवेति संबंधः।

द्वास- लक्ष्मीनारायणप्रीत्यर्थं ब्रह्मगायत्रीमहामंत्रजपं करिष्ये। ॐ ❀ तँत्सँवितुर्वे- प्रति-
॥२४॥ रेण्यं भर्गो देवस्य धीमहि। धियो यो नः प्रचोदयात् ॐ। मंत्राः
इति व्याहृतिरहितगायत्रीमहामंत्रजपः ॥ * ॥ पुनरुपसंहारार्थं मंत्रेण प्राणायामः। अंगदेवताध्यानं पंचांगन्यासः वर्णदेवताध्यानं वर्णन्यासः ऋष्यादिन्यासः मंत्रदेवताध्यानं च। सवितृनामकलक्ष्मीनारायणप्रेरणया लक्ष्मीनारायणप्रीत्यर्थं ब्रह्मगायत्रीमंत्रजपः संपूर्णः। ॐ ❀ तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि। धियो यो नः प्रचोदयात् ❀ ॐ। इति मंत्रमुच्चार्य सवितृनामकलक्ष्मीनारायणं तर्पयामि। इति ब्रह्मगायत्रीमहामंत्रः ॥ ५ ॥

---

७९. गायत्र्यर्थः—यः=सवित्रंतर्गतः सवितृनामा परमात्मा। नः धियः = प्रथमा द्वितीयार्थे बुद्धीः। प्रचोदयात् = प्रेरयेत्। तस्य सवितुः=जगदुत्पादकस्य। देवस्य=क्रीडादिगुणविशिष्टस्य। तत् = देशकालगुणैर्व्याप्तं। वरेण्यं = गुणोत्कर्षाद्वरणीयं। भर्गः = भारतिज्ञानरूपं प्रकाशसुखज्ञानरूपं। भा दीप्तौ रमुक्रीडायां गम्लृ गतौ इत्येतेभ्यो डप्रत्यये भर्ग इति रूपसिद्धिः। एतादृशं भगवद्रूपं। धीमहि = ध्यायेम। वयमिति शेषः। उक्तं च ऋग्भाष्ये—गुणैस्ततः प्रसविता वरणीयो गुणोन्नतेः। भारतिज्ञानरूपत्वाद्भर्गो ध्येयोऽखिलैर्जनैः। प्रेरकोऽशेषबद्धीनां स गायत्र्यर्थ ईरितः। इति। ॥२४॥

## अथ मातृकामालामहामंत्रः ॥ ६ ॥

श्रीगुरुभ्यो नमः । ११ स्थाने अजादिरूपिश्रीनारायणाय नमः । ॐ ❁ ॐ नमो नारायणाय ❁ ॐ । इति मंत्रेण प्राणायामः। यद्वा ॐ भू : । ॐ भुवः । ॐ स्वः । ॐ महः । ॐ जनः । ॐ तपः । ॐ सत्यं । ॐ तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि । धियो यो नः प्रचोदयात् ❁ ओं । इति दशतारकयुतगायत्र्या प्राणायामः । अंगदेवताध्यानं । वासुदेवादिकाः शुक्लरक्तपीतासितोज्ज्वलाः । चक्रशंखगदाब्जेतः प्रथमो मुसली हली । सशंखचक्रस्त्वपरस्तृतीयः शार्ङ्गबाणवान् । सशंखचक्रस्तुर्यस्तु चक्रशंखासिचर्मवान् । पंचांगन्यासः । ओं भूः अग्न्यात्मने अनिरुद्धाय हृदयाय नमः । ओं भुवः वाय्वात्मने प्रद्युम्नाय शिरसे स्वाहा । ओं स्वः

---

८०. मंत्रोद्धार :—तारवन्निखिलं स्मृतं । पंचाशदक्षराणां च पुंसूक्तस्यापि सर्वशः। अर्थः—पंचाशदक्षराणां = न्यासमंत्रस्य जप्यमंत्रस्य च । निखिलं = ऋषिच्छंदोदेवतादि सर्वं । तारवत् = प्रणवमंत्रस्यैव स्मृतं । तथा सर्वशः पुंसूक्तस्यापि [छंदोवर्ज्यं] ज्ञेयं ।

८१. ध्यानश्लोकार्थः तत्वमंत्रे [४ । अंनके] गतः ।

अष्टौ ॥२५॥ मूर्धात्मने संकर्षणाय शिखायै वौषट् । ओं भूर्भुवःस्वः प्रजापत्यात्मने वासुदेवाय कवचाय हुं । ओं सत्यं नारायणाय अस्त्राय फट् । इति दिग्बंधः । वर्णदेवताध्यानं । उद्यद्भास्वत्समाभासश्चिदानंदैकदेहवान् । चक्रशंखगदापद्मधरो ध्येयोऽहमीश्वरः । लक्ष्मी- महा- मंत्राः
धराभ्यामाश्लिष्टः स्वमूर्तिगणमध्यगः । ब्रह्मवायुशिवाहीशविपैः शक्रादिकैरपि । सेव्यमानोऽधिकं भक्त्या नित्यनिःशेषशक्तिमान् । तादृग्रूपाश्च पंचाशज्ज्ञानमुद्राऽभयो- द्यताः । टंकी दंडी च धन्वी च तत्तद्युक्तास्तु वामतः । ध्यायेन्नृसिंहमुरुवृत्तरवित्रिणेत्रं जानुप्रसक्तकरयुग्ममथापराभ्यां । चक्रं दरं च दधतं प्रियया समेतं तिग्मांशुकोट्यधिक- तेजसमव्ययशक्ति । ततो वर्णन्यासः । ओं अं अजाय नमः शिरसि [९ अनंकमारभ्य-११ अनंके ओं क्षं लक्ष्मीनरसिंहाय नमः जीवे इत्यंतं वर्णन्यासः] ततो ऋष्यादिन्यासः । अस्य श्रीमातृकामालामहामंत्रस्य । अंतर्यामी ऋषिः शिरसि । दैवी गायत्री च्छंदः मुखे । अजादिरूपी श्रीनारायणो देवता हृदये । जपे विनियोगः । मंत्रदेवताध्यानं—
उद्यद्भास्वत्समाभासश्चिदानंदैकदेहवान् इत्यारभ्य तिग्मांशुकोट्यधिकतेजसमव्ययशक्तिमि- ॥२५॥
त्यन्तमुपरितनवत् । अजादिरूपिश्रीनारायणप्रेरणया श्रीनारायणप्रीत्यर्थं मातृकामाला-

---

८२. उद्यद्भास्वदित्यस्यार्थः मातृकामंत्रे [८। अनंके] गतः ।

मंत्रजपं करिष्ये । ॐ अं अजाय नमः इत्यारभ्य ॐ क्षं लक्ष्मीनृसिंहाय नमः। इत्यंतमेको मालामंत्रः। यथाशक्ति मंत्रावृत्तिः कार्या। पुनर्मंत्रोपसंहारार्थं प्राणायामः अंगदेवताध्यानं अंगन्यासः वर्णदेवताध्यानं वर्णन्यासः ऋष्यादिन्यासः मंत्रदेवताध्यानं च। अजादिरूपिश्रीनारायणप्रेरणया श्रीनारायणप्रीत्यर्थं मातृकामालामंत्रजपः संपूर्णः। ओं अं अजाय नमः अजं तर्पयामि। इत्यादि प्रतिमंत्रं तर्पणं । इति मातृकामालामहामंत्रः ॥ ६ ॥

## अथ पुरुषसूक्तमहामंत्रः ॥ ७ ॥

श्रीगुरुभ्यो नमः। ११ स्थाने पुरुषरूपिश्रीनारायणाय नमः। ॐ ❀ ॐ

---

८३. [इदं सूक्तं ऋग्वेदे ८। ४। १७] सूक्तमंत्रोद्धारः—तन्त्रेदः पौरुषं सूक्तं वेदाः पुरुषसूक्तगाः । अर्थः—पौरुषं = पुरुषप्रतिपादकं । सूक्तं तन्त्रेदः = गायत्र्या अभिव्यक्तं। तथाच गायत्र्या एकैकस्मात्पादात्पुरुषसूक्तस्यैकैको वर्गोऽभिव्यक्तः। वेदाः = ऋग्यजुःसामाख्याः । पुरुषसूक्तगाः = पुरुषसूक्तादुद्गताः। तथाच एकैकवर्गादेकैको वेदोऽभिव्यक्त इत्यर्थः।

अष्टौ नमो नारायणाय ❀ ॐ । इति मंत्रेण प्राणायामः। अंगदेवताध्यानं। वासुदेवादिकाः[८४] महा-
॥२६॥ शुक्लरक्तपीतासितोज्ज्वलाः। चक्रशंखगदाब्जेतः प्रथमो मुसली हली। सशंखचक्रस्त्वपरस्तृतीयः मंत्राः
शार्ङ्गबाणवान्। सचक्रशंखस्तुर्यस्तु चक्रशंखासिचर्मवान्। पंचांगन्यासः। ओं भूः अग्न्यात्मने अनिरुद्धाय हृदयाय नमः । ओं भुवः वाय्वात्मने प्रद्युम्नाय शिरसे स्वाहा । ओं स्वः सूर्यात्मने संकर्षणाय शिखायै वौषट् । ओं भूर्भुवः स्वः प्रजापत्यात्मने वासुदेवाय कवचाय हुं । ओं सत्यं नारायणाय अस्त्राय फट् । इति दिग्बंधः। अस्य श्रीपुरुषसूक्तमहामंत्रस्य[८५] अंतर्यामी ऋषिः शिरसि । पंचदश-ऋचोनुष्टुभः[८६] अंत्या त्रिष्टुप् छंदः मुखे। [याजुषपक्षे अंत्यास्तिस्रस्त्रिष्टुभः] पुरुषरूपी श्रीनारा-

---

८४. ध्यानश्लोकार्थः तत्वमंत्रे [४। अंनके] गतः।

८५. तारवन्निखिलं स्मृतं। पंचाशदक्षराणां च पुंसूक्तस्यापि सर्वशः। अर्थः-- पुरुषसूक्तस्य बहुविधच्छन्दोबद्धत्वात् तद्वर्ज्यं सर्वमपि प्रणवमन्त्रवदिति स्मृतं = स्मर्यते कथ्यत इत्यर्थः॥ ॥२६॥

८६. अनुष्टुभश्च त्रिष्टुप् च छंदोऽस्य त्रिष्टुभोऽपि वा। अर्थः-अस्य = पुरुषसूक्तस्य। आद्यानां पंचदशानां ऋचां अनुष्टुभः छंदांसि। यज्ञेन यज्ञमिति षोडश्या ऋचः त्रिष्टुप् च। अत एव अनुष्टुभ इति बहुवचनं त्रिष्टुबिति एकवचनं च। यजुर्वेदे यज्ञेन यज्ञमिति

यणो देवता हृदये। जपे विनियोगः। मंत्रदेवताध्यानं। उद्यद्भास्वत्समाभा-
सश्चिदानंदैकदेहवान्। चक्रशंखगदापद्मधरो ध्येयोऽहमीश्वरः। लक्ष्मीधराभ्यामा-
श्लिष्टः स्वमूर्तिगणमध्यगः। ब्रह्मवायुशिवाहीशविपैः शक्रादिकैरपि। सेव्यमानोऽधिकं
भक्त्या नित्यनिःशेषशक्तिमान्। पुरुषरूपिश्रीनारायणप्रेरणया पुरुषरूपिश्रीनारायण-
प्रीत्यर्थं पुरुषसूक्तमहामंत्रजपं करिष्ये। ओं * सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्।
स भूमिं विश्वतो वृत्वाऽत्यतिष्ठद्दशांगुलम्॥ १॥ पुरुषएवेदं सर्वं यद्भूतं यच्च भव्यं।

---

ऋचोऽनंतरं ऋग्द्वयस्याधिकं विद्यमानत्वात्तासां तिसृणां ऋचां त्रिष्टुभः छंदांसि। अत एव त्रिष्टुभः इति बहुवचनं। वा शब्दो व्यवस्थितविकल्पे॥ अर्थः—[८। अंनंके] गतः।

१. सहस्रशीर्षा—"जगृहे पौरुषं रूपं भगवान्महदादिभिः। संभूतं षोडशकलमादौ लोकसिसृक्षया।" इति श्रीभागवतोक्तदिशा पुरुषरूपान्नारायणाद्ब्रह्मांडसृष्टिं "तस्माद्विराळजायत" इत्यादिना वक्तुं 'न च कर्तुः करणमिति' सूत्रोक्तदिशा हस्तपादादिशरीरहीनस्य स्रष्टृत्वायोगात्तदुपयोगितया दिव्यमंगलविग्रहरूपमहिमानमाह—सहस्रशीर्षेति। सहस्रशब्दोऽनंतवाची। अनंतशिरोभिर्युक्तः। सहस्राक्षः = अनंतनयनवान्। सहस्रपात् = अनंतचरणोपेतः। तर्हि तस्याशरीरत्वादिप्रतिपादकश्रुतिविरोधः प्रसज्येतेति चेन्न। श्रुतेः प्राकृतशरीराद्यभावपरत्वात्॥ अस्य प्रकृत्यतीतत्वमाह। सभूमिमिति।

उतामृतत्वस्येशानो यदन्नेनातिरोहति ॥ २ ॥ एतावानस्य महिमाऽतोज्यायांश्च पुरुषः। पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि ॥ ३ ॥ त्रिपादूर्ध्व उदैत्पुरुषः पादो-



सः = पुरुषः नारायणः । भूमिं = प्रकृतिं । तदुपलक्षितपंचभूतानि च । अत्य-तिष्ठत् = अतिक्रम्य वर्तते । सर्वदा प्रकृतिप्राकृतास्पृष्ट एव वर्तत इत्यर्थः। सः प्रकृतिं कियद्दूरमतिक्रांतवान् इत्यत आह । दशांगुलं = दशेतिसर्वमुद्दिष्टमित्यैतरेय-श्रुतौ । अपरिमितदेशकालादिव्यवधानेनातिष्ठदित्यर्थः । तद्देहस्याप्राकृतत्वान्नाशांश-कालेशोऽपि नास्ति ॥ १ ॥

२. पुरुषएवेदं—इदं = प्रमाणप्रमितं । भूतं = अतीतं । यत् = यच्च । भव्यं = आगामि। यच्च भवदित्युपलक्ष्य वर्तमानमित्यर्थः । यदित्युक्तेस्तदिति लभ्यते । तत्सर्वं। पुरुष एव = पुरुषाधीनमेव। "यदधीना यस्य सत्ता तत्तदित्येव भण्यते" इत्युक्तत्वात् । यत् = यस्मात् । अन्नेन = द्वितीयार्थे तृतीया । अन्नं अदनीयं मरणशीलं संसारिजातं। अतिरोहति = अतिक्रामति । अमुक्ताधिपतिरिति यावत्। तस्मात् अमृतत्वस्य = भावभवित्रोरभेदान्मुक्तवर्गस्यापि । ईशानः। उतशब्दः अप्यर्थकः। अतः ॥२७॥
प्राकृताप्राकृतसर्वनियंता नारायणः ॥ २ ॥

३. एतावानस्य—अस्य पुरुषस्य । महिमा = माहात्म्यं । एतावानेव ? = पूर्वोक्त एव किं ? इति काकुः ॥ एतावानेव न । किंतु अधिकोऽपि वर्तते । तमेवाह ।

ऽस्येहाभवत्पुनः । ततो विष्वङ् व्यक्रामत्साशनानशने अभि ॥ ४ ॥ तस्माद्विराळजायत

पुरुषः = नारायणः । अतः पूर्वोक्तमहिम्नोऽपि । ज्यायान् = अपरिमितज्ञानानंदबलैश्वर्याप्राकृतलोकेशत्वादिभिः श्रेष्ठः । तदेव विवृणोति । पाद इति । अस्य = प्रकृतस्य पुरुषस्य । विश्वा भूतानि = चेतनाचेतनात्मकं सर्वं जगत् । पादः = अनंतभागेष्वेकभागपरिमितः । अस्य = पुरुषस्य । अमृतं = देहतोऽपि नाशरहितं । त्रिपात् = पादत्रयं । नारायणो वासुदेवो वैकुंठ इति रूपत्रयं । दिवि = एकवचनं बहुवचनार्थे । श्वेतद्वीपानंतासनवैकुंठाख्येषु चित्प्रकृत्यात्मकत्वेन द्योतमानेषु त्रिषु लोकेषु । तिष्ठतीति शेषः । अतो महामहिमोपेतोऽयं पुरुषः ॥ ३ ॥

४. त्रिपादूर्ध्वः—त्रिपात् = नारायणवासुदेववैकुंठाख्यरूपत्रयवान् । पुरुषः = नारायणः । ऊर्ध्वः = उर्ध्वे श्वेतद्वीपादिलोकत्रये । उदैत् = सार्वकालिकोऽयंलङ् । नित्योदितो वर्तत इत्यर्थः । अस्य = पुरुषस्य । पादः = स्वरूपभूतं पुनरपरं रूपं । इह = प्रागुक्तभिन्नपादेषु । अभवत् = तन्नियामकत्वेन वर्तते इत्यर्थः । ततः = एतादृशगुणविशिष्टत्वात् । विष्वङ् = विविधस्थानेषु सुष्टुंचनात् पुरुषः । साशनानशने = साशनाः मनुष्योत्तमाः । अनशनाः देवाः । एतदुभयविधेषु । अभि = अभिव्याप्य । व्यक्रामत् = व्याप्तो वर्तते ॥ ४ ॥

विराजो अधि पूरुषः। स जातो अत्यरिच्यत पश्चाद्भूमिमथो पुरः ॥ ५ ॥ वर्गः ॥ १ ॥ यत्पुरुषेण हविषा देवा यज्ञमतन्वत । वसंतो अस्यासीदाज्यं ग्रीष्म इध्मः शरद्धविः ॥ ६ ॥ तं यज्ञं बर्हिषि प्रौक्षन्पुरुषं जातमग्रतः ।

---

५. तस्माद्विराट्—स्रष्टृत्वरूपमस्य महिमानमाह। तस्मात् = प्रागुक्तमहिमवतः पुरुषात् । विराट् = ब्रह्मांडं । अजायत । ततः विराजो अधि = ब्रह्मांडमभिव्याप्य । पुरुषः = जीवतत्वाभिमानी विराण्णामा चतुर्मुखः अजायत । स एव पुनः भौतिकदेहेंद्रियादियुक्तः सन्हरेर्नाभिपद्मादुदभूत् । तस्मात्कारणात् । विराजः = चतुर्मुखात् । पुरुषः = पुरुषशब्दमुख्यार्थो हरिः । अधि = अधिकः । स जातः = चतुर्मुखः । पश्चात् = पश्चाज्जातां । भूमिं = भूम्युपलक्षितसर्वलोकस्थरुद्रेंद्रपूर्वकाशेषजीवजातं । अथो पुरः = पूर्वं जातं ब्रह्मांडं अबग्नीरनभोऽहंकृदित्याद्यभिमानिदेवांश्च । अत्यरिच्यत = तेषामधिपतिरभूत् । अत्र आवृत्त्यनुवृत्तिविपरिणामादिकमस्या ऋचः प्रमाणांतरानुसारेण ज्ञेयं ॥ ५ ॥ वर्गः ॥ १ ॥

६. यत्पुरुषेण—तदा बाह्ययज्ञसाधनानामभावात्तत्सिध्यर्थं मानसयज्ञेन भगवंतमाराधितवंतो देवा इत्युच्यते । यत् = यदा । पुरुषेण हविषा = मनसा संकल्पितेन चतुर्मुखाख्यपशुरूपेण हविषा । यज्ञं विष्णुमुद्दिश्य । यज्ञो वै विष्णुर्देवतेति श्रुतेः । यज्ञं = (आवृत्या) यागकर्मेत्यप्यर्थः । देवा अतन्वत = अकुर्वत । तदा । अस्य =

तेनं देवा अयजंत साध्या ऋषयश्च ये ॥ ७ ॥ तस्माद्यज्ञात्सर्वहुतः संभृतं

यज्ञकर्मणः । वसंतः = वसंतर्तुः । आज्यमासीत् = वसंतर्त्वभिमानिनं देवं आज्यत्वेन कल्पितवंत इत्यर्थः । एवमुत्तरत्रापि । ग्रीष्मः इध्म आसीत् । शरद्धविरासीत् ॥ ६ ॥

७. तं यज्ञं—यज्ञं = यज्ञसाधनभूतं यूपे मनसा बद्धं । पशुत्वेन कल्पितं वा देवं स जात इत्यादिना प्रकृतं [illegible] । पुरुषं । मनसा । बर्हिषि = दर्भसंस्तरे । यद्वा यज्ञे । प्रौक्षन् = तस्य सेचनपर्यग्निकरणादिसंस्कारं कृतवंतः । परमपुरुषव्यावृत्यर्थं अग्रतो जातमिति पुरुषविशेषणं । हरेः सकाशात् प्रथमतो जातं । तेन = पुरुषरूपपशुना । देवाः साध्या ऋषयश्च ये ते सर्वे । यज्ञमित्यनुषंगः । इज्यत्वेन हेतुना यज्ञनामकं । प्राक् पुरुषपदेन प्रकृतं विष्णुं । अयजंत = आराधितवंतः ॥ * ॥ यद्वा-विष्णुं रुद्रेण पशुना ब्रह्मा ज्येष्ठेन सूनुना । अयजन्मानसे यज्ञे पितरं प्रपितामहः । इति गीता-भाष्योक्तदिशा पशुस्थानीयः पुरुषो रुद्रो ध्येयः । ब्रह्माऽत्र यजमानः । देवा ऋत्विजः । अस्मिन्पक्षे तस्माद्विराळजायतेति मंत्रद्वयस्यार्थस्त्वित्थं—विराजोऽधिपुरुष इत्यस्य । विराजश्चतुर्मुखात् । अधि = देवादिभ्योऽधिकः "रुद्रं समाश्रिता देवा" इत्युक्तेः पुरुषो = रुद्रोऽजायत । अत्र अधीत्युक्तिः तस्यज्येष्ठसूनुत्वसूचनाय । स जात इत्या-देर्यथासंभवं पूर्ववदर्थः । यत्पुरुषेण = रुद्ररूपेण । हविषा = पशुना । देवाः ब्रह्मा-दयः । पुरुषं जातमग्रतः = चतुर्मुखात् देवेभ्यः प्रथमतो जातं ज्येष्ठपुत्रं रुद्रमित्यर्थः । शिष्टं प्राग्वत् ॥ ७ ॥

पृषदाज्यं । पशूंताँश्चक्रे वायव्यानारण्यान्ग्राम्याश्च ये ॥ ८ ॥ तस्माद्यज्ञा-
त्सर्वहुत ऋचः सामानि जज्ञिरे । छंदांसि जज्ञिरे तस्माद्यजुस्तस्मादजायत ॥ ९ ॥
तस्मादश्वा अजायंत ये के चोभयादतः । गावो ह जज्ञिरे तस्मात्तस्माज्जाता अजावयः

---

८. तस्माद्यज्ञात्—मानसयज्ञेनाराधिताद्यज्ञनामकात्पुरुषात् बाह्यसाधनादि पदार्थाः जाता इत्युच्यंते । सर्वहुतः = सर्वैर्हूयते हविरादिदानेनाराध्यते सर्वैरुपजीव्यते इति वा सर्वहुत् । तस्मात् । यज्ञात् = यज्ञनामकाद्धरेः सकाशात् । सर्वहुतः=(आवृत्त्या) सर्वैर्हूयते भगवानस्मिन्निति सर्वहुत् यज्ञः तस्मात् । यज्ञात् = मानसयज्ञान्निमित्तात् । पृषदाज्यं = दधिमिश्रमाज्यं । संभृतं = संपादितं । उत्पन्नमित्यर्थः । तथा वायव्यान् = वायुदेवताकान् श्वेतपश्वादिकान् । वायुना पातितान्कूर्मादीन्वा । आरण्यान् = अरण्ये भवान्हरिणप्रभृतीन् । ये च ग्राम्याः ग्रामे भवाः छागगवाश्वादयः । तांश्च पशून् । चक्रे = कृतवान् सृष्टवान् । स सर्वहुत् भगवान् । इति विपरिणामेनान्वयः ॥ ८ ॥

९. तस्माद्यज्ञात्—मंत्रोत्पत्तिरत्रोच्यते । तस्मात् सर्वहुतः यज्ञादिति प्राग्वत्= परमपुरुषात् । ऋचो जज्ञिरे = प्रादुर्बभूवुः । जनीप्रादुर्भावे । भगवद्बुद्धिस्थाः वेदादयः सृष्टिकाले ब्रह्मादीन्प्रत्युच्चारिता इत्यर्थः । ततः सामानि जज्ञिरे । छंदांसि = गायत्र्यादीनि । जज्ञिरे = भगवदुच्चारणेनाभिव्यक्तिमगमन्नित्यर्थः । यजुरजायतेत्यप्येवं बोध्यं ॥ ९ ॥

॥२९॥

॥ १० ॥ वर्ग २ ॥ यत्पुरुषं व्यदधुः कतिधा व्यकल्पयन् । मुखं किमस्य कौ बाहू का ऊरू पादा उच्येते ॥ ११ ॥ ब्राह्मणोस्यमुखमासीद्बाहूराजन्यः कृतः । ऊरूतदस्य

---

१०. तस्मादश्वाः—प्राक् सामान्यत उक्तानि यागसाधनानि पुनरप्यत्र विशिष्योच्यंते । तस्मात् = प्रागुक्तात् यज्ञनामकात्पुरुषात् । अश्वाः अजायंत । ये के चोभयादतः = ऊर्ध्वाधोभागयोरुभयत्र दंतवंतो येऽश्वतरीगर्दभप्रभृतयः तेऽपि । व्यजायंत । गावोऽपि तस्मात् जज्ञिरे । अजावयः = अजा अवयश्च । तस्माज्जज्ञिरे= जाताः । तस्मादित्यनेकवारोक्तिरन्यस्य स्वातंत्र्येण हेतुत्वनिरासद्योतनार्था ॥ हेत्याश्चर्ये प्रसिद्धौ वा ॥ १० ॥

११. यत्पुरुषं—अत्र मंत्रे भगवदंगेभ्यः सृष्टान्पदार्थान्प्रश्नपूर्वकमाह । यत् = यं यदा इति वा । पुरुषं व्यदधुः = 'देवा यज्ञमतन्वते 'ति प्रागुक्तमानसयज्ञे व्यदधुः = विशेषेण उद्देश्यतया अदधुः धृतवंतः मनसा ध्यातवंतः । तदा । कतिधा = केन प्रकारेण । व्यकल्पयन् = विकल्पितवंतः । मनसा विविधतया कल्पितवंतः । किंकिंजनकांगत्वेन ध्यातवंत इत्यर्थः । तदेव किंचिद्व्यनक्ति । मुखमिति । अस्य = पुरुषस्य मुखं । किमासीत् = किंजनकमुच्यते । बाहू च कौ = किंजनकावुच्येते । कौ ऊरू इति च्छेदः । ऊरू च कौ । पादौ कावित्यनुषज्यते । किं जनकावुच्येते ॥ ११ ॥

अष्टौ ॥३०॥ यद्वैश्यः पद्भ्यांशूद्रो अंजायत ॥ १२ ॥ चंद्रमा मनसो जातश्चक्षोः सूर्यो अजायत मुखादिंद्रश्चाग्निश्च प्राणाद्वायुरंजायत ॥ १३ ॥ नाभ्यां आसीदंतरिक्षं शीर्ष्णो द्यौः समंवर्तत । पद्भ्यां भूमिर्दिशः श्रोत्रात्तथा लोकाँ अंकल्पयन् ॥ १४ ॥ महा- मंत्राः

---

१२. ब्राह्मणोऽस्य—प्रश्नानामुत्तरमत्रोच्यते। अस्य = पुरुषस्य। मुखं ब्राह्मण आसीत् = मुखाद्ब्राह्मणजात्यांक्रांत आसीत्। स ब्राह्मण्यभिमानवान्ब्रह्मा उदपद्यतेत्यर्थः। बाहू = बाहुभ्यां। राजन्यः क्षत्रियः। कृतः = उत्पन्नः। स तु वायुः। वैश्य इति यत् तत्। ऊरुभ्यां जातं। तत्तु नासिक्यो वायुः। पद्भ्यां = पादाभ्यां। शूद्रः अजायत ॥ १२ ॥

१३. चंद्रमा—अत्र तु देवसृष्टिरुच्यते। मनसः = इति पंचमी। कस्येत्याकांक्षायां सत्यां अस्येति पुरुषवाचिपदमाकृष्यते। तच्च अस्य = महापुरुषस्य मनसः चंद्रः। अस्य चक्षोः = चक्षुषोः। सूर्यः अजायत इत्यादिरूपेणान्वेति। प्राग्ब्राह्मणोस्यमुखमासीदित्युक्तं। नैतावदेव। किंतु इंद्रश्चाग्निश्च अजायतेति प्रत्येकमन्वयः। वायुः = मुख्यवायुः प्रवहो वा प्राणात् अजायत ॥ १३ ॥

१४. नाभ्या आसीत्—पूर्वत्र देवसृष्टिरुक्ता। अत्रतु लोकसृष्टिरुच्यते। नाभ्या ॥३०॥ इत्याद्यपि पंचमी। अत्र अंतरिक्षादिपदैः साभिमानिलोकग्रहः। समवर्तत = अजायतेत्यर्थः। शीर्ष्णः = शिरसः। द्यौः = द्युलोकः समवर्तत। पद्भ्यां भूमिः समवर्तत। श्रोत्रात् दिशः समवर्ततेत्यर्थः। तथा = पद्भ्यां भूमिरित्यादिवत्। लोकान् =

स॒प्तास्या॑सन्परि॒धय॒स्त्रिः स॒प्त स॒मिधः॑ कृ॒ताः। दे॒वा यद्य॒ज्ञं त॑न्वा॒ना अब॑ध्न॒न्पुरु॑षं प॒शुं ॥ १५ ॥ य॒ज्ञेन॑ य॒ज्ञम॑यजंत दे॒वास्तानि॒ धर्मा॑णि प्रथ॒मान्या॑सन्। ते ह॒ नाकं॑ महि॒मानः॑ सचंत॒ यत्र॒ पूर्वे॑ सा॒ध्याः संति॑ दे॒वाः ॥ १६ ॥ वर्गः ॥ ३ ॥

यजुःशाखायां मंत्रद्वयमधिकं पठ्यते—वेदा॒हमे॒तं पुरु॑षं म॒हांतं॑। आ॒दि॒त्यव॑र्णं॒ तम॑सस्तु

---

भूम्यंतरिक्षद्युलोकेभ्योऽन्यान् पातालादीन् एकादश लोकान्। अकल्पयन् = व्यचिंतयन्देवाद्याः ॥ १४ ॥

१५. पूर्वं ग्रीष्मः इध्मः शरद्धविः इत्युक्तेभ्योऽन्यानि यज्ञसाधनानि सिंहावलोकनन्यायेनात्राह। अस्य = मानसयज्ञस्य। सप्त = गायत्र्यादिसप्तच्छंदांसि। परिधयः आसन्। आहवनीयाग्नेस्त्रयः परिधयः। उत्तरवेदिगतास्त्रयः परिधयः। आदित्यश्च सप्तमः परिधिः। प्रतिनिधिरूपाः एते आदित्यसहिताः सप्तपरिधयोऽत्र सप्तच्छंदोरूपाः। तथा समिधः त्रिः सप्त = त्रिगुणितसप्तसंख्याकाः। एकविंशतिः कृताः। द्वादश मासाः पंचर्तवः त्रय इमे लोकाः असावादित्यश्चैकविंश इति श्रुताः एकविंशतिपदार्थाः एकविंशतिदारुयुक्तेध्मत्वेन कृताः। यत् = यदा। देवाः। यज्ञं=विष्णुं प्रति। तमुद्दिश्य मनसा यज्ञं तन्वानाः = कुर्वाणाः। पशुं = पशुत्वेन भावितं पुरुषं चतुर्मुखं। अबध्नन् = यूपे नियोजितवंतः। तदा सप्तास्यासन्नित्यादि योजना ॥ १५ ॥

पा॒रे । सर्वा॑णि रू॒पाणि॑ वि॒चित्य॒ धीरः॑ । नामा॑नि कृ॒त्वाऽभि॒वद॒न्यदास्ते॑ ॥ १७ ॥
धा॒ता पु॒रस्ता॒द्यमु॑दाज॒हार॑ । श॒क्रः प्रवि॒द्वान्प्र॒दिश॒श्चत॑स्रः । तमे॒वं वि॒द्वान॒मृत॑ इ॒ह भ॑वति ।
नान्यः पंथा॒ अय॑नाय विद्यते ॥ १८ ॥



---

१७. वेदाहं—यः धीरः = धीमान् । बुद्धिपूर्वमिति यावत् । सर्वाणि रूपाणि = वाच्यार्थभूतवस्तूनि । विचित्य = निर्माय । नामान्यपि कृत्वा । अभिवदन् = तैर्नामभिर्व्याहरन्नास्ते । नामरूपात्मकं प्रपंचं कृत्वा य आस्ते । एतं महांतं = देशकाल-गुणापरिच्छिन्नं । तमसः = प्रकृतेः । पारे = दूरे स्थितं प्रतिबंधहीनं । आदित्यवर्णं = प्रकाशमानं । पुरुषमहं वेद = जानामि । इति मंत्रद्रष्टृवचनं ॥ १७ ॥

१८. धाता पुरस्तात्—धाता = चतुर्मुखः । पुरस्तात् = पूर्वं । यं पुरुषं = प्रागुक्तमहिमवंतं । उदाजहार = उदाहृतवान् । इंद्रादिदेवान्प्रत्युपदिदेश । प्रविद्वान्= ब्रह्मणः सकाशात् प्राप्तज्ञानः । शक्रः = इंद्रः । चतस्रः प्रदिशः = तत्रत्यजनान्प्रति । उदाजहार = सर्वासु दिक्षु प्रख्यापितवान् । तं = पुरुषं । एवं = सहस्रशीर्षत्वादिमहि-मत्त्वप्रकारेण । इह = लोके । विद्वान् = जानन् । अमृतः = मुक्तः । भवति । अन्यः पन्थाः = एवंविधज्ञानादन्यो मार्गः उपायः । अयनाय = मोक्षाय । न विद्यते = नास्ति । तदाह सूत्रकारः । विद्यैव तु निर्धारणादिति ॥ १८ ॥

पुनः पुरुषसूक्तमंत्रोपसंहारार्थं—प्राणायामः अंगदेवताध्यानं पंचांगन्यासः ऋष्यादिन्यासः मंत्रदेवताध्यानं च। पुरुषरूपिश्रीनारायणप्रेरणया श्रीनारायणप्रीत्यर्थं। पुरुषसूक्तमहामंत्रजपः संपूर्णः। एकैकामृचमुच्चार्य पुरुषरूपिश्रीनारायणं तर्पयामि इत्यर्घ्यदानं। इति पुरुषसूक्तमहामंत्रः ॥ ७ ॥

## अथ षडक्षरश्रीविष्णुमहामंत्रः ॥ ८ ॥

श्रीगुरुभ्यो नमः। ११ स्थाने श्रीविष्णवे नमः। ॐ ❁ विष्णवे नमः ❁ ॐ। इति मंत्रेण प्राणायामः। अंगदेवताध्यानं। मूर्तयोऽष्टौ्वपि ध्येयाश्चक्रशंखवराभयैः। युक्ताः प्रदीपवर्णाश्च सर्वाभरणभूषिताः। षडंगन्यासः।

---

८७. श्रीविष्णुमंत्रोद्धारः—विष्णुशब्दश्चतुर्थ्यंतो हृदयेतः षडक्षरः। अर्थः—चतुर्थ्यंतो विष्णुशब्दः = विष्णवे। हृदयेतः = हृदयशब्दो नमः शब्दे रूढः। इत्थंच विष्णवे नमः इति षडक्षरः।

८८. अर्थः—[ ८। सांके ] गतः।

८९. वर्णा एव षडंगानि षणयोर्भेदयोगतः। अर्थः—संयुक्तयोः ष्ण इत्यक्षरस्थयोः षणयोः भेदरूपोपायेन मंत्रस्य षडक्षरत्वं संपद्यते। तैर्वर्णैरेव षडंगानि।

अष्टौ ॐ * विं विश्वाय हृदयाय नमः। ॐ षं तैजसाय शिरसे स्वाहा। ॐ णं प्राज्ञाय महा-
॥३२॥ शिखायै वौषट्। ओं वें तुर्याय कवचाय हुं। ॐ नं आत्मने नेत्राभ्यां वषट्। ओं मः मंत्राः
अंतरात्मने अस्त्राय फट्। इति दिग्बंधः। ततो वर्णन्यासः। ओं विं विश्वायनमः शिरसि।
ओं षं तैजसाय नमः नासयोः। ओं णं प्राज्ञाय नमः हृदये। ओं वें तुर्याय नमः पादयोः।
ओं नं आत्मने नमः जान्वोः। ओं मः अंतरात्मने नमः नाभौ ॥ * ॥
अस्य श्रीविष्णुषडक्षरमहामंत्रस्य अंतर्यामी ऋषिः शिरसि। दैवी गायत्री च्छंदः मुखे।
श्रीविष्णुर्देवता हृदये। जपे विनियोगः। मंत्रदेवताध्यानं—इंद्रनीलसमाभासश्चिदानं
दैकदेहवान्। चक्रशंखगदापद्मधरो ध्येयोऽहर्माश्वरः। लक्ष्मीधराभ्यामाश्लिष्टः स्वमूर्ति-
गणमध्यगः। ब्रह्मधायुशिवाहीशविपैः शक्रादिकैरपि। सेव्यमानोऽधिकं भक्त्या

---

९०. वर्णन्यासोद्धारः—पज्ञानुनाभिहन्नासाकेषु न्यासश्च सर्वशः। अर्थः—षड्-
भिर्वर्णैः पादादिस्थानेषु वर्णन्यासः। हृत् हृदयं। नासा नासिका। कं शिरः।

९१. तारवत्सर्वमस्यापि। अर्थः—अस्यापि = विष्णुमंत्रस्यापि। सर्वं ऋष्यादिकं। ॥३२॥
तारवत् = प्रणवमंत्रस्येव।

९२. श्यामो ध्येयो हरिः स्वयं। अर्थः—हरिः स्वयं = विष्णुः। विष्णुमंत्रे
श्यामवर्णत्वेन (इंद्रनीलसमाभासः इति) विष्णुर्ध्येय इत्यर्थः।

नित्यनिःशेषशक्तिमान् । श्रीविष्णुप्रेरणया श्रीविष्णुप्रीत्यर्थं श्रीविष्णुषडक्षरमहामंत्रजपं करिष्ये । ॐ ❀ विष्णवे नमः[93] ❀ ॐ । इति मंत्रजपः । मंत्रोपसंहारार्थं पूर्ववत्प्राणायामः अंगदेवताध्यानं षडंगन्यासः ऋष्यादिन्यासः मंत्रदेवताध्यानं च । श्रीविष्णुप्रेरणया श्रीविष्णुप्रीत्यर्थं श्रीविष्णुषडक्षरमहामंत्रजपः संपूर्णः । ॐ ❀ विष्णवे नमः ❀ ॐ । श्रीविष्णुं तर्पयामि । इति श्रीविष्णुमंत्रः ॥ ८ ॥

प्रणवोष्टौ व्याहृतयो द्विषट् सावित्रमातृकाः । पौरुषो वैष्णवश्चेति जपे क्रम उदाहृतः ॥१॥

एते तु सर्वमंत्राणां मूलमंत्रा विशेषतः । एतज्ज्ञानात्समस्तं च ज्ञातं स्याच्छब्दगोचरं । एतज्ज्ञानात्समस्तानां मंत्राणां जापको भवेत् । अर्थः—एते=अष्टौ महा मंत्राः । सर्वमंत्राणां=वक्ष्यमाणवराहादिमंत्राणां । मूलमंत्राः=मूल भूतमंत्राः । विशेषतः= अतिशयेन एतज्ज्ञानात् । समस्तं शब्दगोचरं च । ज्ञातं=ज्ञातफलं स्यात् । एतेषामेव जपात् समस्तमंत्रफलं च लभ्येत [एते अष्टौमहामंत्राः । संध्यात्रयेऽपि जप्याः] ॥

९३. विष्णुशब्दार्थः—व्याप्तौ मे रोदसी पार्थ विष्णुरित्यभिसंज्ञितः । सर्वत्र व्याप्तः । सर्वेषु प्रविष्ट इति वा ॥

॥ इत्यष्टौ महामंत्राः इति शुभं ॥

# अथ[१४] विष्णुगायत्रीमंत्रः ॥ १ ॥



श्रीगुरुभ्यो नमः। एकादशस्थाने श्रीविष्णवे नमः। ओं ❀ नारायणाय विद्महे वासुदेवाय धीमहि। तन्नो विष्णुः प्रचोदयात् ❀ ओं। इति मंत्रेण

---

१४. विष्णुगायत्रीमंत्रोद्धारः तंत्रसारे तृतीयाध्याये। नावाद्याद्यभिधानानि विद्महे धीमहे तथा। प्रचोदयात्तृतीयाधस्तन्नो गायत्रिनामिका।

अर्थः—नाच वाच विच इत्येते वर्णाः आदौ येषां तानि नावाद्याद्यानि। तानि च तानि अभिधानानि च। नारायणः वासुदेवः विष्णुरिति त्रीणि नामानि। तत्राद्यद्वितीययोश्चतुर्थ्यंतत्वं। तृतीयस्य तु प्रथमांतत्वं चाभिप्रेतं। अनुक्तसमुच्चायकेन तथा शब्देन अनु इति गृह्यते। तथाच तेषामनंतरं विद्महे धीमहे प्रचोदयात् इति त्रयः शब्दाः प्रयोज्याः। धीमहे इत्यस्यथाने धीमहि इति प्रयुज्यते। तृतीयाधः = तृतीयपदस्य विष्णुः इत्यस्य पूर्वं। तन्नः इति पदं प्रयोक्तव्यं। तथाचेत्थं मंत्रनिष्पत्तिः। नारायणाय विद्महे वासुदेवाय धीमहि। तन्नो विष्णुः प्रचोदयात्। इतीयं गायत्रिनामिका = विष्णुगायत्रिनामको मंत्रः। मंत्रार्थः—नृसिंहगायत्रीमंत्रे [तरं० २। पत्र ७] द्रष्टव्यः। ॥३३॥

प्राणायामः। ओं नारायणाय विद्महे हृदयाय नमः। ओं वासुदेवाय धीमहि शिरसे स्वाहा। ओं तन्नो विष्णुः प्रचोदयात् शिखायै वौषट्। ओं नारायणाय विद्महे कवचाय हुं। ओं वासुदेवाय धीमहि नेत्राभ्यां वषट्। ओं तन्नो विष्णुः प्रचोदयात् अस्त्राय फट्। इति दिग्बंधः। अस्य श्रीविष्णुगायत्रीमंत्रस्य ब्रह्मा ऋषिः शिरसि। गायत्री च्छंदः मुखे। श्री विष्णुर्देवता हृदये। जपे विनियोगः। ध्यानं— उद्यद्भास्वत्स० शक्तिमान। श्रीविष्णुप्रेरणया श्रीविष्णुप्रीत्यर्थं श्रीविष्णुगायत्रीमंत्रजपं करिष्ये। ओं ❀ नारायणाय विद्महे वासुदेवाय धीमहि। तन्नो विष्णुः प्रचोदयात् ❀ ॐ। इति मंत्रजपः। पुनर्मंत्रोपसंहारार्थं प्राणायामः षडंगन्यासः ऋष्यादिन्यासः ध्यानं च। श्रीविष्णुप्रेरणया श्रीविष्णुप्रीत्यर्थं विष्णुगायत्रीमंत्रजपः संपूर्णः॥ मंत्रमुक्ता तर्पणं। इति श्रीविष्णुगायत्रीमंत्रः॥ १॥

## अथ षडक्षरश्रीविठ्ठलमंत्रः॥ २॥

श्रीगुरुभ्यो नमः। ११ स्थाने श्रीविठ्ठलाय नमः। ॐ विं ❀ विठ्ठलाय नमः ❀ ॐ। इति मंत्रेण प्राणायामः। ॐ पूर्णज्ञानात्मने हृदयाय नमः।

अष्टौ ॐ पूर्णैश्वर्यात्मने शिरसे स्वाहा । ॐ पूर्णप्रभात्मने शिखायै वौषट् । ॐ पूर्णानंदा- महा-
त्मने कवचाय हुं । ॐ पूर्णतेजआत्मने नेत्राभ्यां वषट् । ॐ पूर्णशक्त्यात्मने अस्त्राय फट् । मंत्राः
॥३४॥ इति दिग्बंधः । अस्य श्रीविठ्ठलमंत्रस्य ब्रह्मा ऋषिः शिरसि । गायत्री च्छंदः मुखे । श्रीविठ्ठलरूपी परमात्मा देवता हृदये । जपे विनियोगः । ध्यानं—समचरणसरोजं सांद्रनीलांबुदाभं जघननिहितपाणिं मंडनं मंडनानां । तरुणतुलसिमालाकंधरं कंजनेत्रं सदयधवलहासं विठ्ठलं चिंतयामि ॥ इष्टकायां समपदं तिष्ठंतं पुरुषोत्तमं । जघनस्थकरद्वंद्वं क्षुल्लकादाममेखलं । सव्यासव्यकरोद्भासिशंखपद्मविभूषितं ॥ वनमालाधरं देवं ध्यायेच्छ्रीविठ्ठलं प्रभुं इति च । श्रीविठ्ठलप्रेरणया श्रीविठ्ठलप्रीत्यर्थं षडक्षरश्रीविठ्ठलमंत्रजपं करिष्ये । ॐ विं ❁ विठ्ठलाय नमः ❁ ॐ । इति जपः । पूर्ववदुपसंहारस्तर्पणं च ।

इति षडक्षरश्रीविठ्ठलमंत्रः ॥ २ ॥

## अथ अष्टाक्षर श्रीवेंकटेशमंत्रः ॥ ३ ॥ ॥३४॥

श्रीगुरुभ्यो नमः । ११ स्थाने श्रीवेंकटेशाय नमः । ॐ ❁ ॐ वेंकटेशाय नमः ❁ ॐ । इति मंत्रेण प्राणायामः । ओं ओं हृदयाय नमः । ओं नमः

शिरसे स्वाहा। ओं वेंकटेशाय शिखायै वौषट्। ओं ओं कवचाय हुं। ओं नमः नेत्राभ्यां वषट्। ओं वेंकटेशाय अस्त्राय फट्। ओं पूर्णज्ञानात्मने हृदयाय नमः। इति वा षडंगन्यासः। इति दिग्बंधः। अस्य श्रीवेंकटेशाष्टाक्षरमंत्रस्य ब्रह्मा ऋषिः शिरसि। गायत्री च्छंदः मुखे। श्रीवेंकटेशो देवता हृदये। जपे विनियोगः। ध्यानं— ध्यायेद्वेंकटनायकं करयुगे शंखं च चक्रं मुदा चान्ये पाणियुगे वरं कटितटे बिभ्राणमर्कच्छविं। देवं देवशिखामणिं श्रियमथो वक्षोदधानं हरिं भूषाजालमनेकरत्नखचिते दिव्ये किरीटांगदे। श्रीवेंकटेशप्रेरणया श्रीवेंकटेशप्रीत्यर्थं श्रीवेंकटेशाष्टाक्षरमंत्रजपं करिष्ये। ॐ ❁ ॐ नमो वेंकटेशाय ❁ ॐ। इति मंत्रजपः। पुनः प्राणायामः षडंगन्यासः ऋष्यादिन्यासः ध्यानं च। श्रीवेंकटेशप्रेरणया श्रीवेंकटेशप्रीत्यर्थं वेंकटेशाष्टाक्षरमंत्रजपः संपूर्णः। मंत्रमुक्त्वा तर्पणं। इति श्री वेंकटेशाष्टाक्षरमंत्रः॥ ३॥

## अथ अष्टाक्षरश्रीशिंशुमारमंत्रः॥ ४॥

श्रीगुरुभ्यो नमः। ११ स्थाने श्रीशिंशुमाराय नमः। ॐ ❁ शिं शिंशुमाराय नमः ❁ ॐ। इति मंत्रेण प्राणायामः। ॐ शिं हृदयाय नमः। ॐ शिं

अष्टौ ॥३५॥

शिरसे स्वाहा। ॐ शुं शिखायै वौषट्। ॐ मां कवचाय हुं। ओं रां नेत्राभ्यां वषट्। ओं यं नमः अस्त्राय फट्। इति दिग्बंधः। अस्यश्री शिशुमाराष्टाक्षरमंत्रस्य ब्रह्मा ऋषिः शिरसि। गायत्री च्छंदः मुखे। श्रीशिशुमारो देवता हृदये। जपे विनियोगः। ध्यानं—नाभेरधस्तान्मकराकृतिं विभुं तदूर्ध्वभागे विलसन्नृकायं। स्वपुच्छदेशाश्रितचंद्रसूर्यनक्षत्र-ताराध्रुवमंडलाकृतिं॥ पुत्रादिसर्वेष्टदमिंदिरेशं नतोऽस्मि मेशं हृदि शिंशुमारं॥ ध्यायेदजेशं लोकेशं ध्रुवमंडलमाश्रितं। अंशुमारं शिंशुमारं मंडलं कुंडलाकृतिं॥ श्रीशिंशुमारप्रेरणया श्रीशिंशुमारप्रीत्यर्थं अष्टाक्षरशिंशुमारमंत्रजपं करिष्ये। ॐ ❁ शिं शिंशुमाराय नमः ❁ ॐ। इति मंत्रजपः। पुनः प्राणायामः षडंगन्यासः ऋष्यादिन्यासः ध्यानं च। श्री शिंशुमारप्रेरणया श्रीशिंशुमारप्रीत्यर्थं अष्टाक्षरशिंशुमारमंत्रजपः संपूर्णः। ॐ ❁ शिं शिंशुमाराय नमः ❁ ॐ। श्री शिंशुमारं तर्पयामि॥ इति अष्टाक्षर श्रीशिंशुमारमंत्रः॥ ४॥

महा मंत्राः ॥३५॥



# अथैकादशाक्षरनाममालामंत्रः ॥ ५ ॥

[तंत्रसारभावार्थचंद्रिकास्थः]

श्रीगुरुभ्यो नमः। एकादशस्थाने श्रीमदच्युतानंतगोविंदाय नमः। ओं ❁ अच्युतानंतगोविंदाय नमः ❁ ओं। इति मंत्रेण प्राणायामः। ओं अच्युताय हृदयाय नमः। ओं अनंताय शिरसे स्वाहा। ओं गोविंदाय शिखायै वौषट्। ओं अच्युताय कवचाय हुं। ओं अनंताय नेत्राभ्यां वषट्। ओं गोविंदाय अस्त्राय फट्। इति दिग्बंधः। अस्य श्रीएकादशाक्षरनामत्रयरूपमालामंत्रस्य कौशिक ऋषिः शिरसि। विराट् च्छंदः मुखे। नामत्रयवाच्यः परमात्मा देवता हृदये। अं बीजं। ओं शक्तिः। जपे विनियोगः। ध्यानं—शंखचक्रधरं देवं चतुर्बाहुं किरीटिनं। सर्वायुधैरुपेतं तं गरुडोपरि संस्थितं ॥ सनकादिमुनींद्रैश्च सर्वदेवैरुपासितं। प्रातरुद्यत्सहस्रांशुमंडलोपमकुंडलं ॥ सर्वलोकस्य रक्षार्थमनंतं नित्यमेव हि। अभयं वरदं देवं प्रयच्छंतं मुदाऽन्वितं। एवं ध्यात्वा जपेन्मंत्रं नामत्रयमिदं शुभं ॥ श्रीपरमात्मप्रेरणया श्रीपरमात्मप्रीत्यर्थं एकादशाक्षरनामत्रयमालामंत्रजपं करिष्ये। ओं ❁ अच्युतानंतगोविंदाय नमः ❁ ओं। इति मंत्रजपः। मंत्रोपसंहारार्थं पुनः प्राणायामः षडंगन्यासः ऋष्यादिन्यासः ध्यानं च। श्रीपरमात्मप्रेरणया

---

१. मंत्रार्थः—च्युतिरहितत्वादच्युतः। चतुर्विधनाशरहितत्वादनंतः। वेदवेद्य-

श्रीपरमात्मप्रीत्यर्थं एकादशाक्षर नामत्रयमालारूप मंत्रजपः संपूर्णः ॥ मंत्रमुच्चार्य अच्युतानंतगोविंदं तर्पयामि । अस्य लक्षजपः पुरश्चरणं । अथ विनियोगः—श्रीवृक्षमूले देवेशि[2] ध्यायन्वै रोगिणं जपन् । एवं सप्तदिनं कुर्याद्रोगनाशो भवेध्द्रुवं ॥ कन्यार्थी लाजहोमेन लक्ष्म्यर्थी बिल्वहोमतः । रविवारे जले स्थित्वा नाभिमात्रे जपेत्सुधीः । अष्टोत्तरसहस्रं तु ज्वरनाशो भविष्यति । विवाहार्थी जपेन्मासं रविमंडलमध्यगं । ध्यात्वा विष्णुं लभेत्कन्यां शोभमानां कुटुंबिनीं । सर्वान्कामान्भुक्तिमुक्ति मंत्रेणानेन चाप्नुयात् ॥ अच्युतानंतगोविंदनामोच्चारणभेषजात् । नश्यंति सकला रोगाः सत्यं सत्यं वदाम्यहं । तस्मात्सर्वप्रयत्नेन नाममंत्रजपं कुरु ॥

इत्येकादशाक्षरनामत्रयमंत्रजपः ॥ ५ ॥

## इति श्रीमध्वमंत्ररत्नाकरे प्रथमस्तरंगः ॥ १ ॥

---

त्वाद्गोविंदः । अच्युतश्चासावनंतश्चासौ गोविंदश्च अच्युतानंतगोविंदः । तस्यैकैकस्मिन्नपि हि रूपेऽनंतानि रूपाणि संति ।

२. इंद्रादिभ्योप्युत्तमे हे पार्वति । इति स्वस्य प्रियतमां भार्यां प्रति महादेवस्योक्तिः ।

इति टी. आर. कृष्णाचार्य विरचितायां

श्रीमध्वमंत्ररत्नाकरस्य लघुटिप्पण्यां प्रथमस्तरंगः ॥ १ ॥

# श्रीमध्वमंत्ररत्नाकरे द्वितीयस्तरंगः ॥ २ ॥

॥ अथ द्वासप्ततिर्मंत्राः ॥

श्रीमद्धनुमद्भीममध्वांतर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः ।

जयत्यब्जभवेशेंद्रवंदितः कमलापतिः । अनंतविभवानन्दशक्तिज्ञानादिसद्गुणः ॥

## ॥ अथ त्रयस्त्रिंशदक्षरवराहमंत्रः ॥ १ ॥

श्रीगुरुभ्यो नमः । परमगुरुभ्यो नमः । श्रीमदानंदतीर्थभगवत्पादाचार्येभ्यो नमः । श्रीवेदव्यासाय नमः । श्रीभारत्यै नमः । श्रीसरस्वत्यै नमः । श्रीवायवे नमः ।

---

लघुटिप्पणी । १. त्रयस्त्रिंशदक्षरभूवराहमंत्रोद्धारक्रम उक्तः श्रीमदानंदतीर्थभगवत्पादाचार्यविरचिते तंत्रसारसंग्रहे—याष्टमस्तूयुतोऽतेन समेतश्चैव भूभृतः । वीजं नमश्च भगवान्सोद्देशो रूपसंयुतः। स एव तादृशो लोकत्रयपालो भुवः पतेः । भावं मे देहि दांते तु दापय स्वाहया युतः इति ॥ अर्थः—याष्टमः = यकारादष्टमो वर्णः ह् । तु ऊयुत इति च्छेदः । ऊकारेण युतः ह् = हू । अंतेन=अनुस्वारेण समेतः हूं इति । भूभृतः=वराहस्य । बीजं=वीजाक्षरं भवति । ततो नमः । ततः सोद्देशः = चतुर्थ्यंतः । भगवान् = भगवते । तादृशः = चतुर्थ्यंतः । रूपसंयुतः स एव = वराहरूपाय । तादृशो लोकत्रयपालः = भूर्भुवः-

द्वास श्रीब्रह्मणे नमः। श्रीमहालक्ष्म्यै नमः। श्री नारायणाय नमः। श्रीवराहाय नमः। प्रति-
श्रीवासुदेवाय नमः ॥ ॐ ❀ हूं नमो भगवते वराहरूपाय भूर्भुवःस्वःपतये मंत्राः
॥१॥ भूपतित्वं मे देहि दादापय स्वाहा ❀ ॐ। इति मंत्रेण यथाशक्ति ३६, २४,
१२ वारं वा प्राणायामः ॥ अथ षडंगन्यासः—ओं ओं हृदयाय नमः। ओं वराहाय
शिरसे स्वाहा। ओं भूधराय शिखायै वौषट्। ओं परमात्मने कवचाय हुं। ओं सर्वज्ञाय

---

स्वःपतये। भूपतेः भावं = भूपतित्वम्। मे देहि। ततो दा। अनंतरं। अंते स्वाहया युतः दापय = दापय स्वाहा।

२. प्राणायामलक्षणं तंत्रसारे—प्राणायामो रेचयित्वा पूरयित्वा च कुंभके॥ रेचयित्वा दक्षिणतः पूरयित्वा च वामतः। कुंभकश्च सुषुम्नायां विष्णुं वायुं च संस्मरेत्। इति। तात्पर्यार्थः—दक्षिणनासारंध्रेण श्वासवायुमधो विसृज्य वामनासामार्गेण बाह्यं वायुमंतः परिपूर्य च निश्चलतया कुंभके या स्थितिः स प्राणायामः। तदा विष्णुवायु-स्मरणं च कार्यम्॥ ३. प्रणवेन स्वनाम्ना च भूधरेण परात्मना। सर्वज्ञसर्वशक्तिभ्यां षडंगानि विदो विदुः। ज्ञानैश्वर्यप्रभानंदतेजःशक्तिभिरेव च। पूर्णात्ममध्यगैः सर्ववैष्ण-वांगान्यथो विदुः॥ ॥१॥ अर्थः—प्रणवेन=ओंकारेण, स्वनाम्ना (चतुर्थ्यंतेन) = वराहाय। तथा भूधरेण = भूधराय परात्मना = परमात्मने। सर्वज्ञाय सर्वशक्तये। इति षडंगानि। पूर्णशब्दात्मशब्दयोर्मध्ये स्थितैः ज्ञानादिषट्शब्दैर्वा षडंगानि। तथा च पूर्णज्ञानात्मने हृदयाय नमः इत्यादि। यत्र विशिष्य अंगानुक्तिः तत्र पूर्णज्ञानादीन्यंगानीति ध्येयम्॥

नेत्राभ्यां वषट्। ओं सर्वशक्तये अस्त्राय फट् इति दिग्बंधः ॥ ओं पूर्णज्ञानात्मने हृदयाय नमः। ओं पूर्णैश्वर्यात्मने शिरसे स्वाहा। ओं पूर्णप्रभात्मने शिखायै वौषट्। ओं पूर्णानंदात्मने कवचाय हुं। ओं पूर्णतेजआत्मने नेत्राभ्यां वषट्। ओं पूर्णशक्त्यात्मने अस्त्राय फट्। इति वा षडंगन्यासः ॥ केषांचित्पक्षे उभयविधन्यासोऽपि।

अस्य श्रीत्रयस्त्रिंशदक्षरवराहमंत्रस्य ब्रह्मा ऋषिः शिरसि। अनुष्टुप् च्छंदः मुखे। श्रीवराहो देवता हृदये। श्रीवराहप्रीत्यर्थे जपे विनियोगः। ध्यानं—श्यामः सुदर्शनदराभयसद्वरेतो भूम्या युतोऽखिलनिजोक्तपरिग्रहैश्च। ध्येयो निजैश्च तनुभिः सकलैरुपेतः कोलो हरिः सकलवांच्छितसिद्धयेऽजः। श्रीवराहप्रेरणया श्रीवराहप्रीत्यर्थं

---

४. ध्यानश्लोकार्थः—श्यामः = इंद्रनीलवर्णः। सुदर्शनदराभयसद्वरेतः = शंखचक्राभयमुद्राअमोघवरमुद्राभिर्युक्तबाहुचतुष्टयः। भूम्या = महालक्ष्म्यवतारभूतया धरादेव्या। युतः = समेतः। पंचभूतावरा धरा त्वन्या। अखिलनिजोक्तपरिग्रहैः = अखिलैः = समस्तैः। निजोक्तैः = स्वीयपरिवारत्वेन शास्त्रेषु उक्तैः ब्रह्मादिभिः। सकलैः निजैः तनुभिः = क्रुद्धोल्कादिविश्वरूपांतैः स्वस्य रूपैश्च। उपेतः = परिवृतः। अजः = जननरहितः। कोलः = वराहरूपी। हरिः = 'इडोपहूतं गेहेषु हरे भागं क्रतुष्वहं। वर्णो मे हरितः श्रेष्ठस्तस्माद्धरिरिति स्मृतः' इति मोक्षधर्मवचनानुसारेण याज्ञीयसर्वभागहरः। भगवान् सकलाभीष्टसिद्ध्यर्थं भक्तैर्ध्येयः ॥

द्वास ||२||

त्रयस्त्रिंशदक्षरवराहमंत्रजपं करिष्ये। मंत्रः—ओं ॐ हूं नमो भगवते वराहरूपाय भूर्भुवःस्वःपतये भूपतित्वं मे देहि दादापय स्वाहा ॐ ओं। इति यथाशक्ति १०८। ५४। २८। १२। वारं वा मंत्रजपः॥ पुनः जपोपसंहारार्थं ओं ॐ हूं नमो भगवते वराहरूपाय भूर्भुवःस्वःपतये भूपतित्वं मे देहि दादापय स्वाहा ॐ ओं। इति मंत्रेण प्राणायामः। ओं ओं हृदयाय नमः। ओं वराहाय शिरसे स्वाहा।

प्रति-मंत्राः

५. मंत्रार्थः—आद्यन्तयोरोंकारौ न मंत्रावयवौ। किंतु संपुटस्थानीयौ। स्रवत्यनोंकृतं ब्रह्म परस्ताच्च विशीर्यत इति अदृष्टार्थकौ। हूमित्याद्येव मंत्रः। हूं = भूवराहस्य बीजाक्षरभूतमव्ययमेतत्। तथा च हूंकारवाच्याय। वराहरूपाय = जहातीति हं। न हं अहं = अत्यक्तृ। वराणां ज्ञानानन्दादिगुणानां अहं वराहं। तादृशं रूपं स्वरूपं यस्य सः वराहरूपः तस्मै। लोकदृष्ट्या कुत्सितकोलाद्यवतारेष्वप्यत्यक्तज्ञानानन्दादिगुणाय। भूर्भुवःस्वःपतये = त्रिलोकनाथाय। भगवते = षड्गुणपरिपूर्णाय। तादृशाय तुभ्यं। नमः = तनुमनआदीनां त्वच्चरण एव समर्पणरूपं नमनमहं करोमि। स्वाहा = हे सर्वस्वामिन्। सर्वं स्वीकुरुते यस्मात्स्वाहेत्युक्तो जनार्दन इति स्मृतेः। मन्नमनेनैव संतुष्टस्त्वं। मे = मह्यं। भूपतित्वं = स्वयोग्यमैहिकं पारत्रिकं चैश्वर्यं देहि। दादापय च = तत्वाभिमानिनो देवा यथा न विघ्नं कुर्युस्तथा तान्प्रेरय। एतन्मन्त्रजपस्य इह लोके स्वयोग्यं भूपतित्वं परलोके वैकुण्ठलोकं प्राप्य आनन्दानुभवश्च फलं॥ ||२||

ओं भूधराय शिखायै वौषट् । ओं परमात्मने कवचाय हुं । ओं सर्वज्ञाय नेत्राभ्यां वषट् । ओं सर्वशक्तये अस्त्राय फट् । इति दिग्बंधः । ओं पूर्णज्ञानात्मने हृदयाय नमः इत्यादि वा । अथ ऋष्यादिन्यासः । अस्य श्रीत्रयस्त्रिंशदक्षरवराहमंत्रस्य ब्रह्मा ऋषिः शिरसि । अनुष्टुप् छंदः मुखे । श्रीवराहो देवता हृदये । जपे विनियोगः । ध्यानं—श्यामः सुदर्शनदराभयसद्वरेतो भूम्या युतोऽखिलनिजोक्तपरिग्रहैश्च । ध्येयो निजैश्च तनुभिः सकलैरुपेतः कोलो हरिः सकलवांच्छितसिद्धयेऽजः । श्रीवराहप्रेरणया श्रीवराहप्रीत्यर्थं त्रयस्त्रिंशदक्षरवराहमंत्रजपः संपूर्णः । ओं ❁ हूं नमो भगवते वराहरूपाय भूर्भुवःस्वःपतये भूपतित्वं मे देहि दादापय स्वाहा ❁ ओं । वराहं तर्पयामि । इति त्रयस्त्रिंशदक्षरवराहमंत्रः ॥ १ ॥

## अथाष्टाक्षरवराहमंत्रः ॥ २ ॥

श्रीगुरुभ्यो नमः । एकादशस्थाने वराहाय नमः । ओं ❁ ओं हूं वराहाय नमः ❁ ओं । इति मंत्रेण प्राणायामः । अथ षडंगन्यासः । ओं ओं हृदयाय नमः ।

---

६. मंत्रोद्धार :—मनुस्तस्यापरस्तारबीजोद्देशनमोयुतः । अर्थः—तस्य = वराहस्य । अपरः = द्वितीयः । मनुः = मंत्रः । तारः = ओंकारः । बीजं = हूं । उद्देशनमोयुनः स एवेत्यनुवर्तते वराहाय । ततो नमः ॥

द्वास- ओं वराहाय शिरसे स्वाहा। ओं भूधराय शिखायै वौषट्। ओं परमात्मने कवचाय प्रति-
हुं। ओं सर्वज्ञाय नेत्राभ्यां वषट्। ओं सर्वशक्तये अस्त्राय फट् इति दिग्बंधः। मंत्राः
॥३॥ पूर्णज्ञानात्मने हृदयाय नमः इत्यादिना वा षडंगन्यासः। अथ ऋष्यादि-
न्यासः। अस्य श्रीअष्टाक्षरवराहमंत्रस्य ब्रह्मा ऋषिः शिरसि। गायत्री
च्छंदः मुखे। श्रीवराहो देवता हृदये। जपे विनियोगः। ध्यानं—श्यामः
सुदर्शनदराभयसद्वरेतो भूम्या युतोऽखिलनिजोक्तपरिग्रहैश्च। ध्येयो निजैश्च तनुभिः
सकलैरुपेतः कोलो हरिः सकलवांच्छितसिद्धयेऽजः। श्रीवराहप्रेरणया श्री
वराहप्रीत्यर्थं अष्टाक्षरवराहमंत्रजपं करिष्ये। ॐ ❁ ॐ हूं वराहाय नमः ❁
ओं। इति यथाशक्ति मंत्रजपः। पुनः पूर्ववत् प्राणायामः अंगन्यासः ऋष्यादिन्यासः
ध्यानं च। श्रीवराहप्रेरणया श्रीवराहप्रीत्यर्थं अष्टाक्षरवराहमंत्रजपः संपूर्णः। ओं ❁
ओं हूं वराहाय नमः ❁ ओं। श्रीवराहं तर्पयामि। इति अष्टाक्षरवराहमंत्रः॥ २ ॥

## अथ चतुर्दशाक्षरवराहमंत्रः ॥ ३ ॥

श्रीगुरुभ्यो नमः। एकादशस्थाने वराहाय नमः। ओं ❁ नमो भगवते ॥३॥

---

७. मंत्रोद्धारः—नमः सोद्देशभगवान् महच्छब्दयुतश्च सः। तादृशः स्वाहया

महावराहाय स्वाहा ❀ ओं । इति मंत्रेण प्राणायामः । ओं ओं हृदयाय नमः । ओं वराहाय शिरसे स्वाहा । ओं भूधराय शिखायै वौषट् । ओं परमात्मने कवचाय हुं । ओं सर्वज्ञाय नेत्राभ्यां वषट् । ओं सर्वशक्तये अस्त्राय फट् । इति दिग्बंधः । ओं पूर्णज्ञानात्मने हृदयाय नमः । इति वा षडंगन्यासः । अस्य श्रीचतुर्दशाक्षर-वराहमंत्रस्य ब्रह्मा ऋषिः शिरसि । शक्करी च्छंदः मुखे । वराहो देवता हृदये । जपे विनियोगः । ध्यानं-श्यामः सुदर्शनदराभयसद्वरेतो भूम्या युतोऽखिल-निजोक्तपरिग्रहैश्च । ध्येयो निजैश्च तनुभिः सकलैरुपेतः कोलो हरिः सकल-वांच्छितसिद्धयेऽजः । श्री वराहप्रेरणया श्रीवराहप्रीत्यर्थं चतुर्दशाक्षरवराहमंत्रजपं करिष्ये । ओं ❀ नमो भगवते महावराहाय स्वाहा ❀ ओं । इति मंत्रजपः । पुनः पूर्ववत्प्राणायामः षडंगन्यासः ऋष्यादिन्यासः ध्यानं च । श्रीवराहप्रेरणया श्रीवराहप्री-त्यर्थं चतुर्दशाक्षरवराहमंत्रजपः संपूर्णः । ओं ❀ नमो भगवते महावराहाय स्वाहा ❀ ओं । वराहं तर्पयामि । इति चतुर्दशाक्षरवराहमंत्रः ॥ ३ ॥

---

युक्तो वराहस्यापरो मनुः। अर्थः—प्रथमं नमः । ततः सोद्देशो भगवान् = भगवते । महा-शब्दयुतः तादृशः सः = महावराहाय । ततः स्वाहा ॥ अपरो मनुः = तृतीयो मंत्रः ।

द्वास- ॥४॥

# अथ श्रीकराष्टाक्षरमंत्रः ॥ ४ ॥

प्रति- मंत्राः

श्रीगुरुभ्यो नमः। एकादशस्थाने श्रीकरनारायणाय नमः। ओं ❀ उत्तिष्ठ श्रीकर स्वाहा ❀ ओं। इति मंत्रेण प्राणायामः। अथ पंचांगन्यासः। ओं भीषय भीषय हृदयाय नमः। ओं त्रासय त्रासय शिरसे स्वाहा। ओं प्रमर्दय प्रमर्दय शिखायै वौषट्। ओं प्रध्वंसय प्रध्वंसय कवचाय हुं। ओं रक्ष रक्ष अस्त्राय फट्। इति पंचांगन्यासः। इति दिग्बंधः। षडंगन्यासपक्षे पूर्णज्ञानात्मने हृदयाय नमः इत्यादि। अस्य श्रीश्रीकराष्टाक्षर-मंत्रस्य ब्रह्मा ऋषिः शिरसि। गायत्री च्छंदः मुखे। श्रीकरनारायणो देवता हृदये। जपे

---

८. मंत्रोद्धारः—तिष्ठोदादिः स्वजायायाः कारणं स्वाहया युतः। श्रीकरोऽष्टाक्षरो मंत्रो गरुडारूढसंस्मृतिः। अर्थः—प्रथमं उदादिः तिष्ठ = उत्तिष्ठ। स्वजाया श्रीः। तस्याः कारणं=करः श्रीकरः। ततः स्वाहा। अस्य ध्याने गरुडारूढत्वेन हरेः संस्मृतिः।

९. पंचांगन्यासमाह—द्विर्भीषय त्रासय च प्रमर्दय तथैव च। प्रध्वंसयाथो रक्षेति पंचांगश्चेदुदाहृतः। पंचांगश्चेदुदाहृत इत्यनेन जप्तुः षडंगाभिप्राये तु ओं पूर्णज्ञानात्मने हृदयाय नमः। इत्यादि। ॥४॥

विनियोगः। ध्यानं—आदित्यचंद्रावपि शंखचक्रौ शंखपद्मनाख्यनिधी दधानः। चिंत्यः कराभ्यां वसु तर्पयानः (यन्यः) स्वांकस्थलक्ष्मीर्गरुडांससंस्थः। श्रीकरनारायणप्रेरणया श्रीकरनारायणप्रीत्यर्थं श्रीकराष्टाक्षरमंत्रजपं करिष्ये। ओं ❀ उत्तिष्ठ श्रीकर[11] स्वाहा ❀ ओं। इति मंत्रजपः। पूर्ववत्प्राणायामः अंगन्यासः ऋष्यादिन्यासः ध्यानं च।

---

१०. ध्यानश्लोकार्थः—आदित्यचंद्रावित्यादि = द्वाभ्यां हस्ताभ्यां सूर्यसोमौ धारयन्। अपराभ्यां शंखचक्रौ दधानः। अथापराभ्यां शंखनिधिं पद्मनिधिं च दधानः पुनरन्याभ्यां वसु = द्रव्यं। तर्पयन् = भक्तेभ्यो ददत्। स्वांकस्थलक्ष्मीः = स्वांके महालक्ष्मीं दधान इत्यर्थः। गरुडांससंस्थः = स्वयं गरुडस्कंधे उपविष्टः। एवंविधो यो भगवान् स भक्तैश्चिंत्यः। तर्पयान इति पाठेऽपि स एवार्थः। यद्यप्ययं ध्यानश्लोकः श्रीमदाचार्यैर्नोक्तः किंतु 'गरुडारूढसंस्मृतिः' इति पदेन सूचितः। तथापि पूर्वाचार्याः उपदेशपरंपरया तंत्रांतरादुद्धृत्येमं पठंति। अन्येतु सनत्कुमारतंत्रोक्तं पठंति। यथा—दुग्धाब्धिद्वीपमध्ये प्रतिहसितसरोज्ञानकल्पद्रुमाधो भद्रांभोजन्मपीठोपरिगतविनतानंदनस्कंधसंस्थः। दोर्भिर्बिभ्रद्रथांगं दरमपि च गदापंकजे स्वर्णवर्णो भास्वन्मौलिर्विचित्राभरणपरिगतः स्याच्छ्रिये वो मुकुंदः। इति।

११. मंत्रार्थः—श्रीकर = भक्तेभ्यः सर्वैश्वर्यप्रद। स्वाहा = हे स्वामिन् नारायण। उत्तिष्ठ = सार्वकालिकोऽयं लोट्। सदा त्वं सर्वोत्तमो वर्तसे। अथवा अस्मदभिलषितदानाय योगनिद्रां विहाय जागृहि इति।

द्वास- ॥५॥

श्रीकरनारायणप्रेरणया श्रीकरनारायणप्रीत्यर्थं श्रीकराष्टाक्षरमंत्रजपः संपूर्णः । ओं ❀ उत्तिष्ठ श्रीकर स्वाहा ❀ ओं । श्रीकरनारायणं तर्पयामि ॥ इति श्रीकराष्टाक्षरमंत्रः ॥ ४ ॥

## अथ द्वात्रिंशदक्षरनृसिंहमंत्रः[१२] ॥ ५ ॥

श्रीगुरुभ्यो नमः । एकादशस्थाने श्रीनृसिंहाय नमः । ओं ❀ उग्रं वीरं महाविष्णुं ज्वलंतं सर्वतोमुखम् । नृसिंहं भीषणं भद्रं मृत्युमृत्युं नमाम्यहं ❀ ओं । इति मंत्रेण प्राणायामः । अथ पंचांगन्यासः । ओं [१३]उग्रं वीरं महाविष्णुं

प्रति- मंत्राः ॥५॥

---

१२. मंत्रोद्धारः—क्रूरं वीरं बृहद्विष्णुं दीप्यंतं विश्वतोमुखं । पुंमृगेंद्रं भयकरं शुभं मृत्योश्च मारकं ॥ नमामि स्वयमित्येष द्वात्रिंशार्णो मनुर्हरेः ॥ अर्थः—क्रूरं = उग्रं । वीरं । बृहद्विष्णुं = महाविष्णुं । दीप्यंतं = ज्वलंतं । विश्वतो मुखं = सर्वतो मुखं । पुंमृगेंद्रं = नृसिंहं । भयकरं = भीषणं । शुभं = भद्रं । मृत्योश्च मारकं = मृत्युमृत्युं । नमामि । स्वयं = अहं । एष उक्तपदजातयुक्तः । हरेः = नृसिंहस्य । मनुः = मंत्रः ।

१३. मंत्रत्रयस्यापि अंगन्यासोद्धारः—पादैर्व्यस्तैः समस्तैश्च पदैश्चांगं प्रकीर्तितं । पूर्वयोस्तत्र पूर्वं तु सर्वज्ञेन षडंगकं ॥ तृतीयं तु द्विरावृत्तैः पादैरंगं समन्वितं ॥ पूर्वयोः =

हृदयाय नमः। ओं ज्वलंतं सर्वतोमुखं शिरसे स्वाहा। ओं नृसिंहं भीषणं भद्रं शिखायै वौषट्। ओं मृत्युमृत्युं नमाम्यहं कवचाय हुं। ओं उग्रं वीरं० नमाम्यहं इति समस्तेन नेत्राभ्यां वषट्। इति दिग्बंधः। षडंगन्यासाभिप्राये तु पंचमांगन्यासानंतरं ओं सर्वज्ञाय अस्त्राय फट्। इत्यधिकं योज्यं। अस्य श्रीद्वात्रिंशदक्षरनृसिंहमंत्रस्य ब्रह्मा ऋषिः शिरसि। अनुष्टुप् छंदः मुखे। श्री नृसिंहो देवता हृदये। ध्यानं—ध्यायेन्नृसिंहमुरुवृत्तर-

---

प्रथमद्वितीययोर्मंत्रयोर्मध्ये। पूर्वं=उग्रं वीरमिति प्रथममंत्रस्य। व्यस्तैः=पृथक्पृथक्कृतैःपादैः। समस्तैश्च = समस्तमंत्रेण च इति पंचांगं प्रकीर्तितं। द्वितीयमंत्रस्य तु जयेत्यादिषड्भिः पदैः अंगं = षडंगं प्रकीर्तितं। जय हृदयाय नमः। जय शिरसे स्वाहा। इत्यादिप्रकारेण। जयजयेत्यस्य एकपदत्वविवक्षायां तु व्यस्तैः समस्तैश्च षडंगकं॥ तृतीयस्य नृसिंहगायत्रीमंत्रस्य द्विरावृत्तैः त्रिभिः पादैः षडंगं। तत्र = तयोर्मध्ये पूर्वं = उग्रं वीरमिति मंत्रस्यापि षडंगन्यासोऽस्त्विति पक्षे सर्वज्ञेनेति = सर्वज्ञाय अस्त्राय फट् इत्यधिकं योज्यं।

१४. ध्यानश्लोकार्थः—उरुवृत्तरवित्रिनेत्रं = उरूणि = विशालानि। वृत्तानि = वर्तुलानि। रविवद्दीप्तानि त्रीणि नेत्राणि यस्य तं। रविमंडलवदुरुवृत्तनेत्रत्रयमिति परनिपातो वा। जान्वोः प्रसक्तं = संसक्तं। करयुग्मं = करद्वयं यस्य तं। अथापराभ्यां = कराभ्यां। चक्रं = सुदर्शनं। दरं = शंखं च दधानं। प्रियया = महालक्ष्म्या समेतं। तिग्मांशुकोट्यधिकतेजसं = कोटिसूर्येभ्योऽप्यतिशायिततेजोरूपं। अग्र्यशक्तिं = सर्वोत्कृष्टसामर्थ्यं नृसिंहं ध्यायेत्।

द्वास- विस्त्रिनेत्रं जानुप्रसक्तकरयुग्ममथापराभ्यां । चक्रं दरं च दधतं प्रियया समेतं तिग्मांशु- प्रति-
कोट्यधिकतेजसमग्र्यशक्तिं । श्री नृसिंहप्रेरणया श्री नृसिंहप्रीत्यर्थं श्री द्वात्रिंशदक्षरनृसिंह
॥६॥ मंत्रजपं करिष्ये । ओं ❁ उग्रं वीरं महाविष्णुं ज्वलन्तं सर्वतोमुखं । मंत्राः
नृसिंहं भीषणं भद्रं मृत्युमृत्युं नमाम्यहं ❁ ओं । इति यथाशक्ति मंत्रजपः।
पुनः ओं उग्रं वीरमित्यादिमंत्रमुक्त्वा प्राणायामः । पंचांगन्यासः ऋष्यादिन्यासः
ध्यानं च । श्री नृसिंहप्रेरणया श्री नृसिंहप्रीत्यर्थं श्री द्वात्रिंशदक्षरनृसिंहमंत्रजपः संपूर्णः ।
ओं ❁ उग्रं वीरं महाविष्णुं ज्वलन्तं सर्वतोमुखं । नृसिंहं भीषणं भद्रं
मृत्युमृत्युं नमाम्यहं ❁ ओं । श्री नृसिंहं तर्पयामि । इति द्वात्रिंशदक्षर-
नृसिंहमंत्रः ॥ ५ ॥

---

१५. मंत्रार्थः—वृत्तोत्फुल्लविशालाक्षत्व - विपक्षक्षयदीक्षितत्व—निनादस्फुटित-
ब्रह्मांडत्वादिना दैत्यानां क्रूरत्वेन उग्रं । नखाग्रशकलीकृतातिबलदितिनंदनत्वेन वीरं ।
सर्वदिग्व्याप्तविश्वरूपत्वेन महाविष्णुं । सहस्रलक्षामितसूर्यप्रकाशत्वेन ज्वलंतं । सर्व-
दिग्व्याप्तानेकमुखत्वेन सर्वतोमुखं । नृवत् ( नरवत् ) सिंहवच्च विग्रहवत्त्वेन नृसिंहं । ॥६॥
भूतप्रेतपिशाचादिदुष्टग्रहविनाशकत्वेन भीषणं । स्वाश्रितजनानां मंगळकरत्वेन भद्रं ।
स्वभक्तानां प्राप्ताकालमृत्युपरिहारकत्वेन मृत्युमृत्युं । देवं अहं नमामि ।

# अथ चतुर्विंशत्यक्षरनृसिंहमंत्रः ॥ ६ ॥

श्रीगुरुभ्यो नमः। एकादशस्थाने श्रीनृसिंहाय नमः ओं ❀ जय जय नरसिंहाय सर्वज्ञाय महातेजोबलवीर्याय स्वाहा ❀ ओं। इति मंत्रेण प्राणायामः। ओं जय जय हृदयाय नमः। ओं नरसिंहाय शिरसे स्वाहा। ओं सर्वज्ञाय शिखायै वौषट्। ओं महातेजोबलवीर्याय कवचाय हुं। ओं स्वाहा नेत्राभ्यां वषट्। ओं ❀ जय जय नरसिंहाय सर्वज्ञाय महातेजोबलवीर्याय स्वाहा ❀ ओं। अस्त्राय फट्। इति दिग्बंधः। अस्य श्रीचतुर्विंशत्यक्षरनरसिंहमंत्रस्य ब्रह्मा ऋषिः शिरसि। गायत्री च्छंदः मुखे। नरसिंहो देवता हृदये। जपे विनियोगः। ध्यानं- ध्यायेन्नृसिंहमुरुवृत्तरवित्रिनेत्रं जानुप्रसक्तकरयुग्ममथापराभ्यां। चक्रं दरं च दधतं प्रियया

---

१६. मंत्रोद्धारः—द्विर्जयस्योपरि निजं सोद्देशं सर्ववित्तथा। महातेजोबलं वीर्यं तादृशं स्वाहया युतं। चतुर्विंशाक्षरो मंत्रो निखिलेष्टप्रदायकः। अर्थः-द्विवारमुच्चारितजयेति पदस्य (जय जय इत्यस्य) उपरि। निजं=नृसिंहपदं। तच्च सोद्देशं=चतुर्थ्यंतं। नरसिंहाय। ततः सर्ववित् = तदर्थप्रतिपादकं सर्वज्ञपदं च। तथा = चतुर्थ्यंतं महातेजो-बलपदं वीर्यपदं च। तथा सोद्देशं = चतुर्थ्यंतं। अंते स्वाहापदेन युतम्।

न्यास- समेतं तिग्मांशुकोट्यधिकतेजसमग्रशक्ति । श्रीनरसिंहप्रेरणया श्रीनरसिंहप्रीत्यर्थं प्रति-
॥७॥ चतुर्विंशत्यक्षरनरसिंहमंत्रजपं करिष्ये। ओं ❁ जय जय नरसिंहाय सर्वज्ञाय मंत्राः
महातेजोबलवीर्याय स्वाहा ❁ ओं । इति मंत्रजपः। पुनः प्राणायामः षडंगन्यासः ऋष्या-
दिन्यासः ध्यानं च। श्रीनरसिंहप्रेरणया श्रीनरसिंहप्रीत्यर्थं चतुर्विंशत्यक्षरनरसिंहमंत्रजपः
संपूर्णः। ओं ❁ जय जय नरसिंहाय० वीर्याय स्वाहा ❁ ओं । नरसिंहं
तर्पयामि। इति चतुर्विंशत्यक्षरो नृसिंहमंत्रः ॥ ६ ॥

## अथ नरसिंहगायत्रीमंत्रः ॥ ७ ॥

श्रीगुरुभ्यो नमः। ११ स्थाने नरसिंहाय नमः। ओं ❁ नरसिंहाय विद्महे

---

१७. मंत्रार्थः—स्वाहा = ब्रह्मादिभिर्देवैः सुष्ठु आहूयमान नरसिंह। जय = त्वं भक्तानां बाह्याभ्यंतरशत्र्वभिभवकारणत्वेन सर्वोत्कृष्टः सर्वदा वर्तस्व । जयजयेति आदराद्द्विरुक्तिः। सर्वज्ञत्वाद्युपलक्षितानंतानवद्यगुणाय। तुभ्यं नम इति शेषः।

१८. नरसिंहगायत्रीमंत्रोद्धारः—विद्महे धीमहे पूर्वं स्वयं चैव महाबलः। ॥७॥
प्रेरयेत्तन्न इत्येतन्मध्येऽनंतः प्रकीर्तितः। अर्थः—पूर्वं प्रथमं। नरसिंहः। स च चतुर्थ्यंतः नरसिंहाय। ततो विद्महे। ततः धीमहे एतदर्थकः धीमहि। पूर्वं महा-

महाबलाय धीमहि । तन्नोऽनंतः प्रचोदयात् ❀ ओं । इति मंत्रेण प्राणायामः । ओं नरसिंहार्यै विद्महे हृदयाय नमः । ओं महाबलाय धीमहि शिरसे स्वाहा । ओं तन्नोऽनंतः प्रचोदयात् शिखायै वौषट् । ओं नरसिंहाय विद्महे कवचाय हुं । ओं महाबलाय धीमहि नेत्राभ्यां वषट् । ओं तन्नोऽनंतः प्रचोदयात् अस्त्राय फट् । इति दिग्बंधः । अस्य श्रीनरसिंहगायत्रीमंत्रस्य ब्रह्मा ऋषिः शिरसि । गायत्री च्छंदः मुखे । नरसिंहो देवता हृदये । जपे विनियोगः । ध्यानं—ध्यायेन्नृसिंहमुरुवृत्तरवित्रिनेत्रं जानुप्रसक्तकरयुग्ममथापराभ्यां । चक्रं दरं च दधतं प्रियया समेतं तिग्मांशुकोट्यधिकतेजसमग्र्यशक्ति ॥ श्रीनृसिंहप्रेरणया श्रीनृसिंहप्रीत्यर्थं नरसिंहगायत्रीमंत्रजपं करिष्ये । ओं ❀ नरसिं-

---

बलः = धीमहि इत्यतः पूर्वं महाबलः । स च चतुर्थ्यंतः । महाबलाय धीमहि इति । तन्नः प्रचोदयात् इत्यनयोः पदयोर्मध्ये अनंतः इति पदं योज्यं । तन्नोऽनंतः प्रचोदयात् ।

१९. षडंगन्यासः—तृतीयं तु द्विरावृत्तैः पादैरंगं समन्वितम् ।

२०. मंत्रार्थः—नरसिंहाय = नरसिंहप्रीत्यर्थम् । विद्महे = ज्ञानं संपादयामः । महाबलाय = शत्रुविनाशकसामर्थ्योपेतनृसिंहप्रीत्यर्थं । धीमहि = ध्यानं संपादयामः । तत्तु ज्ञानं ध्यानं च । अनंतः = देशतः कालतो गुणतश्च परिच्छेदशून्यः नृहरिः । नः = अस्मान् । प्रचोदयात् = प्रेरयतु । अत्र उक्तवक्ष्यमाणमंत्रेषु ध्येयत्वेनोक्तं द्विचतुर्भुजादिकं उपलक्षणमिति सर्वमंत्रेष्वपि साधारणं ध्यानमाह—सर्वेष्वपि हि मंत्रेषु

द्वास- हाय विद्महे महाबलाय धीमहि । तन्नोऽनंतः प्रचोदयात् ❀ ओं । इति मंत्रजपः । प्रति-
॥८॥ पुनः प्राणायामः षडंगन्यासः ऋष्यादिन्यासः ध्यानं च । ओं ❀ नरसिंहाय विद्महे० मंत्राः
प्रचोदयात् ❀ ओं । श्रीनरसिंहं तर्पयामि । इति नरसिंहगायत्रीमंत्रः ॥ ७ ॥

## अथ षडक्षरहंसमहामंत्रः ॥ ८ ॥

[२५]

द्व्याद्यनंतांतबाहुकः । चेतनांतस्थमारभ्य सर्वगांतस्थरूपवान् । अनंतरूपो ध्येयोऽत्र स्वगुरूक्तानुसारतः । यथायोग्यं यथाशक्ति तत्तदायुधभूषणः । शंखचक्रगदापद्म-खड्गखेटाः सशार्ङ्गकाः । शरो मुसलवज्रौ च हलः पाशांकुशौ तथा । शूलं च भिंडिपालश्च पट्टिशोऽग्निर्वराभये । तर्कमुद्राऽक्षमाला च पुस्तकं च विदारणं । इत्यादीन्यखिलान्येव विष्णोश्चित्यानि बाहुषु । साधकेन स्वापेक्षितफलानुसारेण स्व-योग्यतानुसारेण च ध्यानं कर्तव्यम् । तद्यथा—न केवलं द्विबाहुश्चतुर्बाहुरित्येव किंतु अनंतबाहुत्वेनापि ध्येयः । तथा जीवांतस्थाणुरूपमारभ्य अव्याकृताकाशव्यापिरूप-पर्यंतं च ध्येयः । तत्रतत्रोक्तशंखचक्राद्यायुधान्विनापि स्वापेक्षितफलानुसारेण शूलभिं-डिपालाद्यायुधान्यपि ध्येयानि ॥

२१. हंसमंत्रोद्धारः—वियत्स इति युग्मार्णो विपरीतश्च स स्मृतः । सः सर्ग- ॥८॥
हीनो वेतश्च बिंदुहीनोत्तरस्तथा ॥ त्रय एते महामंत्राः पुरुषार्थचतुष्टये । कल्पवृक्षाः प्रिया विष्णोर्विशेषज्ञानदायकाः । इति । अर्थः—वियत् = आकाशबीजं । हं । ततः

प्रथमं पूर्वदिनकृतश्वासरूपमंत्रजपोपसंहारः। ओं ❀ हंसः[22] सोऽहं स्वाहा ❀ ओं। इति मंत्रेण प्राणायामः। ओं हंसः[23] हृदयाय नमः। ओं सोऽहं शिरसे स्वाहा। ओं स्वाहा शिखायै वौषट्। ओं हंसः कवचाय हुं। ओं सोऽहं नेत्राभ्यां वषट्। ओं स्वाहा अस्त्राय फट्। इति दिग्बंधः। अस्य श्रीमंत्रत्रयमालारूपषडक्षरहंसमहामंत्रस्य। ब्रह्मा ऋषिः शिरसि। गायत्री छंदः मुखे। मुख्यप्राणांतर्गतहंसरूपी लक्ष्मीनारायणो

---

सः। तथाच हंसः इति युग्मार्णः द्व्यक्षरः प्रथमो मंत्रः। विपरीतश्च सः=हंसः। सोऽहं इति द्वितीयो मंत्रः। सर्गहीनः = विसर्गरहितः (अकारहीनश्च) सः=स्। वेतः वाकारेण सहितः स्वा। विंदुहीनोत्तरः = हं इत्यत्र स्थितविंदुरहितः। ह। (आकार-सहितश्च) हा। तथा च स्वाहा इति तृतीयो मंत्रः। त्रय एते इत्यादि स्पष्टार्थं।

२२. हंसमंत्रार्थः—जहाति हापयति वा (दोषान्) हं। गुणसारत्वात्सः। हं चासौ सश्चेति हंसः। परोक्षत्वात्सः। सर्वाहेयत्वादहं। स चासावहं च सोऽहं। स्वीयसारविषयस्वीकारात्स्वाहा।

२३. अंगन्यासक्रम उक्तस्तंत्रसारे—तैरेव तु द्विरावृत्तैरंगमेषां प्रकीर्तितं। अर्थः—द्विरावृत्तैः तैरेव मंत्रैः एषां हंसमंत्राणां अंगं प्रकीर्तितं।

द्वास- देवता हृदये। जपोपसंहारे विनियोगः। ध्यानं-ध्यायेद्रवींदुकरमिंदुसहस्रलक्षकांतिं प्रति
प्रियासहितमास्थितमिंदुबिंबे। शंखारिदोर्द्वयमुदर्कमहेंदुबिंबात्संसिच्यमानममृतेन रमा- मंत्राः
॥९॥ धिनाथम् ॥ मुख्यप्राणांतर्गतहंसरूपिलक्ष्मीनारायणप्रेरणया लक्ष्मीनारायणप्रीत्यर्थं पूर्वेद्युः
प्रातः सूर्योदयमारभ्य अद्य प्रातः सूर्योदयपर्यंतं मद्देहे स्थित्वा मुख्यप्राणेन कृतेन मुख्य-
प्राणप्रेरितेन मया कृतेन च २१६०० षट्शताधिकैकविंशत्सहस्रसंख्याकश्वासरूपहंस-

---

२४. ध्यानश्लोकार्थः—रवींदुकरं = ऊर्ध्वहस्तद्वये सूर्यचंद्रयुक्तं। इंदुसहस्र लक्षकांतिं = अधिकारियोग्यतापेक्षया सहस्रलक्षेति। प्रियासहितं = प्रियया रमया अथवा प्रियाभिः कुद्धोल्कादिस्वमूर्तिभिः सहितं। इंदुबिंबे = चंद्रमंडले। आस्थितं। उदर्कमहेंदुबिंबात् = उदर्कः अर्कादुपरिगतः अत एव महत्त्वयुक्तः महेंदुबिंबः तस्मात् तदेकदेशादित्यर्थः। (विंशत्सहस्रयोजनविस्तृतत्वेन सूर्यादुत्कृष्टात् महाचंद्रमंडलैकदेशादिति वा) निःसृतेनामृतेन। संसिच्यमानं। रमाधिनाथं = रमापतिं हंसरूपिणं भगवंतं॥ ध्यायेत्। इति।

२५. तंत्रसारे—श्वासरूपो जपो नित्यमुभयोर्विद्वदज्ञयोः। एकविंशत्सहस्रात्मा सषट्शतमहर्निशं। अर्थः—ज्ञान्यज्ञानिनोरुभयोरपि। नित्यं = प्रतिदिनं श्वासरूपः = एतन्मंत्रजपो वर्तत इत्यर्थः। प्रतिदिनं क्रियमाणो जपः कियत्संख्याक इत्यत आह एकविंशत्सहस्रात्मेति। जपकालमाह अहर्निशमिति रात्रिंदिवमित्यर्थः। ॥९॥

मंत्रजपेन भगवान्मुख्यप्राणपतिः हंसरूपी लक्ष्मीनारायणः प्रीयतां ।। मुख्यप्राणेन मद्देहे मंत्रत्रयजपः सदा । अनुग्रहाय मे विष्णुप्रीतये क्रियते हि सः । एकविंशत्सहस्रात्मा सषट्शतमहर्निशं । तत्सर्वं विष्णु[२६]पूजास्तु प्रीयतां प्राणमापतिः । इति पठेत् ।। इति पूर्वदिन कृतश्वासरूपजपोपसंहारः । अथ तदैव पुनः [२७]धर्मार्थकाममोक्षकल्पवृक्षः विष्णुप्रीतिकरः तत्वज्ञानप्रदः अशेषदोषपरिहारकः अष्टैश्वर्यप्रदः मंत्रत्रयमालारूपः षडक्षरहंसमंत्रजप आरंभणीयः ।। श्रीगुरुभ्यो नमः । ११ स्थाने हंसरूपिलक्ष्मीनारायणाय नमः ।। ॐ ❁ हंसः सोऽहं स्वाहा ❁ ॐ । इति मालामंत्रेण प्राणायामः षडंगन्यासः ऋष्यादि-

---

२६. तंत्रसारे—अर्पणीयो हरौ नित्यं प्रातर्योगो महानयं । अर्थः-कृतस्य जपस्य समर्पणं पुनरारंभणं चास्य मंत्रस्य प्रातरेव भवति । अत एवास्य प्रातर्योग इति नाम । किंच ज्ञानी भगवति समर्पणं करोति अतो महाफलप्रदस्तस्य भवति । अज्ञानी तु न समर्पयति । तस्मात्तस्येषदपि फलं नास्ति ।

२७. तंत्रसारे—अशेषदोषदहनस्तत्वज्ञानप्रदायकः । अष्टैश्वर्यप्रदश्चैव कृतादौ समुपासतां ।। अर्थः—अशेषेति । अस्य मंत्रस्य महाफलप्रदत्वं विशदयति अशेषेति । कृतादौ = आदिपदेन त्रेताद्वापरयोर्ग्रहणं । तथाच कृतयुगे समुपासतां अणिमाद्यष्टैश्वर्यप्रदः । त्रेतायुगे तत्वज्ञानप्रदः । द्वापरे अशेषदोषदहनः । कलौ पुरुषार्थचतुष्टये कल्पवृक्षा इत्यादि पूर्वमुक्तं फलं भवति ।

द्वास- न्यासः ध्यायेद्र्वींदुकरमित्यादिध्यानं च । मुख्यप्राणांतर्गतहंसरूपिलक्ष्मीनारायणप्रेरणया प्रति-
॥१०॥ लक्ष्मीनारायणप्रीत्यर्थं अद्य प्रातः सूर्योदयमारभ्य श्वः प्रातः सूर्योदयपर्यंतं मुख्य- मंत्राः
प्राणो मद्देहे स्थित्वा २१६०० षट्शताधिकैकविंशत्सहस्रसंख्याकश्वासरूपहंसमंत्रजपं करोति । तत्प्रेरितोऽहं च करोमि (स्वप्रयत्नेन विनाऽपि भवन्, श्वास एव जपः । न तु नृसिंहादिमंत्रवत्पृथक्कार्यः) । यत्प्राण्याद्यदपान्याच्च ताभ्यां परमपूरुषं । उपास्ये मुख्ययोगेन स हंसः प्रीयतां हरिः । इति पठेत् । इति मंत्रत्रयमालारूपः षडक्षर-हंसमहामंत्रः ॥ ८ ॥

## अथ सप्ताक्षरो हंसमहामंत्रः ॥ ९ ॥

(मंत्रचतुष्टयमालारूपः द्वितीयोऽयं हंसमंत्रः)

ॐ ❀ ॐ हंसः सोऽहं स्वाहा ❀ ॐ । इति मंत्रः । अयं मंत्रः केवलं

---

२८. सप्ताक्षरहंसमंत्रोद्धारः—तारयोगोऽप्येवमेव ब्रह्मादावेव वर्तते । अर्थः-
एवमेव पूर्वोक्तमंत्रत्रयात्मकहंसमंत्रवदेव मंत्रः । सः तारयोगोऽपि तारेण = प्रणवेनापि ॥१०॥
युक्तो वर्तते । तस्य जपे चतुर्मुखादय एव अधिकारिणः । अन्ये सर्वे ज्ञानमात्राधि-

चतुर्मुखाधिकारिकः। अतो मनुष्याणां जपाद्यनुष्ठानं नास्ति। केवलं ज्ञानमात्रं। देवता हंसरूपी लक्ष्मीनारायण एव। ध्याने रक्तवर्णः विद्युद्वर्ण इति वा विशेषः। इति सप्ताक्षरो हंसमहामंत्रः ॥ ९ ॥

## अथ मंत्रपंचकमालारूपः हंसमहामंत्रः ॥ १० ॥ [२९]

(अयं हंसमंत्रेषु तृतीयोऽष्टाक्षरो मंत्रः।)

श्रीगुरुभ्यो नमः। ११ ध्याने हंसरूपिलक्ष्मीनारायणाय नमः। ओं ❀ ओं ह्रीं हंसः सोऽहं स्वाहा ❀ ओं। इति मंत्रेण प्राणायामः। ओं ओं हृदयाय नमः। ओं ह्रीं शिरसे स्वाहा। ओं हंसः शिखायै वौषट्। ओं सोऽहं कवचाय हुं।

---

कारिणः। ध्यानप्रकारमाह—अंत्यस्य रक्तवर्णो वा ध्येयो विष्णुः सनातनः। विद्युद्वर्णोऽथवा ध्येयः। अर्थः—अंत्यस्य तृतीयस्य हंसमहामंत्रस्य। रक्तवर्णो विद्युद्वर्णो वा ध्येयः।

२९. अष्टाक्षरहंसमंत्रोद्धारः—शक्त्येतः पंचमंत्रयुक्। अष्टाक्षरो महामंत्रस्तैरेवांगैः समन्वितः। अंत्यध्यानयुतश्चैव निःशेषपुरुषार्थदः। अर्थः—शक्त्येतः = शक्तिबीजेन ह्रींकारेण। इतः=युक्तः। पूर्वोक्तसप्ताक्षरमंत्रः। पंचमंत्रयुक्तः अष्टाक्षरो महामंत्रो भवति। अयं तृतीयो मंत्रः। न्यासस्तु तैरेवांगैः=ओं-ह्रीं-हंसः-सोऽहं-स्वाहा इति पंचभिर्मंत्रैर्भवति।

द्वास- ओं स्वाहा अस्त्राय फट्। इति दिग्बंधः। अस्य श्रीमंत्रपंचकमालारूपाष्टाक्षर- प्रति-
॥११॥ हंसमहामंत्रस्य ब्रह्मा ऋषिः शिरसि। गायत्री छंदः मुखे। हंसरूपी लक्ष्मीनारा- मंत्राः
यणो देवता हृदये। जपे विनियोगः। ध्याने रक्तवर्णो विद्युद्वर्णो वा ध्येयः। हंसरूपि-
लक्ष्मीनारायणप्रेरणया लक्ष्मीनारायणप्रीत्यर्थं अष्टाक्षरहंसमहामंत्रजपं करिष्ये। ओं ❁
ओं ह्रीं हंसः सोहं स्वाहा ❁ ओं। इति मंत्रजपः। अस्य मंत्रस्य अन्यमंत्रवत्
जपावृत्तिः कार्या। पुनः पूर्ववत् मंत्रेण प्राणायामः। पंचांगन्यासः ऋष्यादिन्यासः
ध्यानं च। हंसरूपिलक्ष्मीनारायणप्रेरणया लक्ष्मीनारायणप्रीत्यर्थं अष्टाक्षरहंसमहा-
मंत्रजपः संपूर्णः। ओं ❁ ओं ह्रीं हंसः सोऽहं स्वाहा ❁ ओं। हंसरूपिलक्ष्मी-
नारायणं तर्पयामि। इति मंत्रपंचकमालामंत्ररूपो हंसमंत्रः ॥ १० ॥

## अथ मंत्रचिंतामणिनामकः दधिवामनमंत्रः ॥ ११ ॥

श्रीगुरुभ्यो नमः। ११ स्थाने श्रीदधिवामनाय नमः। अन्नाधिपतये विष्णवे ॥११॥
नम इति वा। ओं ❁ ओं नमो भगवते विष्णवे अन्नाधिपतये स्वाहा ❁

३०. मंत्रोद्धारः—मूलं नः प्रतिषेधश्च सोद्देशो भगवानपि। विष्णुर्भोज्याधिपः स्वाहायुक्तोऽष्टादशवर्णकः। मूलं = ओं। नः = नकारः। प्रतिषेधः = मः। सोद्देशो

ओं। इति मंत्रेण प्राणायामः। ओं ओं हृदयाय नमः। ओं नमः शिरसे स्वाहा। ओं भगवते शिखायै वौषट्। ओं विष्णवे कवचाय हुं। ओं अन्नाधिपतये नेत्राभ्यां वषट्। ओं स्वाहा अस्त्राय फट्। इति दिग्बंधः। अस्य श्रीमंत्रचिंतामणिदधिवामनाष्टादशाक्षरमंत्रस्य ब्रह्मा ऋषिः शिरसि। धृतिश्छंदः मुखे। श्रीदधिवामनो देवता हृदये। जपे विनियोगः। ध्यानं–ध्यायेत्सुशुक्लमरविंददलायताक्षं सौवर्णपात्रदधिभोज्यमथामृतं च। दोर्भ्यां दधानमखिलैश्च सुरैः समेतं शीतांशुमंडल-

---

भगवान् = भगवते। तथा विष्णुः = विष्णवे। तथा भोज्याधिपः = अन्नाधिपतये। ततः स्वाहा। अष्टादशवर्णकः = अष्टादशाक्षरोपेतः दधिवामनमंत्रो भवति।

३१. अंगानि तत्पदैरेव मंत्रचिंतामणिः स्वयं। यथेष्टभक्ष्यभोज्यादिदाता मुक्तिप्रदायकः। अर्थः—तत्पदैः = मंत्रस्य षड्भिः पदैः षडंगन्यासः। स्वयं = अयं मंत्रः। मंत्रचिंतामणिनामकः।

३२. ध्यानश्लोकार्थः—सुशुक्लं = अतिश्वेतं। अरविंददलायताक्षं = अरविंदस्य दलं अर्धं तदिव आयते अक्षिणी यस्य तं। सौवर्णपात्रदधिभोज्यं = कनकपात्रे स्थितं दधिमिश्रं भोज्यमन्नममृतं च। दोर्भ्यां = दक्षिणवामकराभ्यां। दधानं = धारयंतं। ब्रह्मादिदेवैः। समेतं = सेवितं। एवं गुणविशिष्टं वामनं ध्यायेत्।

द्वास- गतं रमया समेतं ॥ दधिवामनप्रेरणया दधिवामनप्रीत्यर्थं अष्टादशाक्षरदधिवामनमंत्रजपं प्रति-
॥१२॥ करिष्ये । ओं ❁ ओं नमो भगवते[33] विष्णवे अन्नाधिपतये स्वाहा ❁ ओं । मंत्राः
इति मंत्रजपः । पुनः मंत्रेण प्राणायामः षडंगन्यासः ऋष्यादिन्यासः ध्यानं च । दधिवामनप्रेरणया दधिवामनप्रीत्यर्थं अष्टादशाक्षरदधिवामनमंत्रजपः संपूर्णः । ओं ❁ ओं नमो भगवते विष्णवे अन्नाधिपतये स्वाहा ❁ ओं । दधिवामनं तर्पयामि । अस्य मंत्रस्य भोज्याधिपतिमंत्र इत्यपि नाम । इति अष्टादशाक्षरो दधिवामनमंत्रः ॥ ११ ॥

## अथ अष्टाक्षरवामनमंत्रः[34] ॥ १२ ॥

---

३३. मंत्रार्थः । ओं = गुणपरिपूर्ण । स्वाहा = स्वामिन् वामन । विष्णवे = व्याप्ताय । अन्नाधिपतये = अन्नोपलक्षितसर्वेंद्रियोपभोग्यविषयस्य स्वामिने । तुभ्यं नमः ।

३४. अष्टाक्षरवामनमंत्रोद्धारः—अमृतं स्वयमुद्देशयुक्तः सहृदयो मनुः । सतारो-
ऽष्टाक्षरोऽगानि पदैर्व्यस्तैः समस्तकैः। अर्थः—अमृतबीजं वां । उद्देशयुक्तः स्वयं = ॥१२॥
वामनाय । सहृदयः = नमः इति शब्देन सहितः । सतारः = आदौ ओंयुक्तः । प्रत्येकं चतुर्भिः पदैः संपूर्णमंत्रेण च पंचांगानि ।

श्रीगुरुभ्यो नमः । ११ स्थाने वामनाय नमः । ओं ❀ ओं वां वामनाय नमः ❀ ओं । इति मंत्रेण प्राणायामः । ओं ओं हृदयाय नमः । ओं वां शिरसे स्वाहा । ओं वामनाय शिखायै वौषट् । ओं नमः कवचाय हुं । ओं वां वामनाय नमः अस्त्राय फट् । इति दिग्बंधः । अस्य श्री अष्टाक्षरवामनमंत्रस्य ब्रह्मा ऋषिः शिरसि । गायत्री च्छंदः मुखे । श्री वामनो देवता हृदये । जपे विनियोगः । ध्यानं-उद्यद्रवि-[३५] प्रभमरींद्रदरौ गदां च ज्ञानं च बिभ्रतमजं प्रियया समेतं । विश्वावकाशमभितः प्रतिभासयंतं भासा स्वया स्मरत विष्णुमजादिवंद्यं । श्रीवामनप्रेरणया श्रीवामनप्रीत्यर्थं वामनाष्टाक्षरमंत्रजपं करिष्ये । ओं ❀ ओं वां वामनाय[३६] नमः ❀ ओं ।

---

३५. ध्यानश्लोकार्थः—उद्यद्रविप्रभं = तत्क्षणोदित दिवाकरकांतिसमानकांतिमंतं । अरींद्रदरौ = चक्रशंखौ । गदायुधं । ज्ञानं = ज्ञानमुद्रां च बिभ्रतं । विश्वावकाशं = जगत्प्रदेशं । अभितः अंतर्बहिः सर्वतः । स्वया भासा प्रतिभासयंतं । विष्णुं व्यापनशीलं वामनं स्मरत=ध्यायत ।

३६. मंत्रार्थः—वामनाय = वामत्वेन मंगलत्वेन स्वयं नयति प्रवर्तते । वामं सौंदर्यं नयति भक्तानां प्रापयति । वामान् सौंदर्यप्रधानान् लक्ष्म्यादिस्त्रीजनान्नयतीति वा वामनस्तस्मै । शिष्टं स्पष्टं ।

द्वास- इति मंत्रजपः। उपसंहारार्थं मंत्रेण पुनः प्राणायामः पंचांगन्यासः ऋष्यादिन्या- प्रति-
॥१३॥ सः ध्यानं च। श्रीवामनप्रेरणया श्रीवामनप्रीत्यर्थं वामनाष्टाक्षरमंत्रजपः संपूर्णः। ओं ❁ मंत्राः
ओं वां वामनाय नमः ❁ ओं। वामनं तर्पयामि। इति वामनाष्टाक्षरमंत्रः ॥१२॥

## अथ त्रिविक्रमगायत्रीमंत्रः ॥ १३ ॥[37]

इमं मंत्रं वामनगायत्रीमित्यप्याहुः ॥ श्रीगुरुभ्यो नमः। ११ स्थाने त्रिविक्रमाय नमः। अथवा वामनाय नमः। ओं ❁ त्रिविक्रमाय विद्महे विश्वरूपाय धीमहि। तन्नो विष्णुः प्रचोदयात् ❁ ओं। इति मंत्रेण प्राणायामः। ओं त्रिविक्रमाय विद्महे हृदयाय नमः। ओं विश्वरूपाय धीमहि

---

३७. मंत्रोद्धारः—त्रिविक्रमश्च सोद्देशो विश्वरूपश्च तत्पुरः। धीविदौ च महे विष्णुस्तन्नः प्रेरणमध्यगः। मंत्रार्थः—सोद्देशः त्रिविक्रमः = त्रिविक्रमाय। विश्वरूपश्च = चात्सोद्देशः विश्वरूपाय। तत्पुरः = चतुर्थ्यंतत्रिविक्रमविश्वरूपशब्दयोः पूर्वं धीविदौ = धीशब्दवित्शब्दौ। अत्र यथायोगं संबंधः। तयोरुपरि महे इति शब्दः। चात् ॥१३॥
महिशब्दश्च विद्महे धीमहि इति। ततः तन्नः प्रचोदयादित्येतयोः मध्ये विष्णुशब्दश्च। तन्नो विष्णुः प्रचोदयादिति।

शिरसे स्वाहा। ओं तन्नो विष्णुः प्रचोदयात् शिखायै वौषट्। ओं त्रिविक्रमाय विद्महे कवचाय हुं। ओं विश्वरूपाय धीमहि नेत्राभ्यां वषट्। ओं तन्नो विष्णुः प्रचोदयात् अस्त्राय फट्। इति दिग्बंधः। ओं ओं हृदयाय नमः। ओं वामनाय शिरसे स्वाहा। ओं भूधराय शिखायै वौषट्। ओं परमात्मने कवचाय हुं। ओं सर्वज्ञाय नेत्राभ्यां वषट्। ओं सर्वशक्तये अस्त्राय फट्। इति वा न्यासः। ओं पूर्णज्ञानात्मने हृदयाय नमः इत्यादि वा षडंगन्यासः। अस्य श्रीत्रिविक्रमगायत्री-मंत्रस्य ब्रह्मा ऋषिः शिरसि। गायत्री च्छंदः मुखे। श्रीवामनो देवता हृदये। जपे विनियोगः। ध्यानं—उद्यद्रविप्रभमरींद्रदरौ गदां च ज्ञानं च बिभ्रतमजं प्रियया समेतं। विश्वावकाशमभितः प्रतिभासयंतं भासा स्वया स्मरत विष्णुमजादिवंद्यं। श्रीत्रिविक्रमप्रेरणया श्रीत्रिविक्रमप्रीत्यर्थं त्रिविक्रमगायत्रीमंत्रजपं करिष्ये। ओं ❁ त्रिविक्रमाय विद्महे विश्वरूपाय धीमहि। तन्नो विष्णुः प्रचोदयात् ❁ ओं इति मंत्रजपः। पुनः मंत्रेण प्राणायामः षडंगन्यासः ऋष्यादिन्यासः ध्यानं च।

३८. ध्यानश्लोकार्थः पूर्वमुक्तः। ३९. त्रिविक्रममंत्रार्थः त्रिविक्रमः = त्रयः विक्रमाः पादविक्षेपाः यस्य सः तस्मै तत्प्रीत्यर्थं। विद्महे इत्यादेः नृसिंहगायत्रीवदर्थः। विश्वरूपाय = पूर्णरूपाय।

द्वास- ओं ❀ त्रिविक्रमाय विद्महे विश्वरूपाय धीमहि तन्नो विष्णुः प्रचोदयात् ❀ प्रति-
॥१४॥ ओं । त्रिविक्रमं तर्पयामि । इति त्रिविक्रमगायत्रीमंत्रः ॥ १३ ॥ मंत्राः

## अथ षडक्षरपरशुराममंत्रः ॥ १४ ॥

श्रीगुरुभ्यो नमः । ११ स्थाने श्रीपरशुरामाय नमः । ओं ❀ रां रामाय नमः ❀ ओं । इति मंत्रेण प्राणायामः । ओं रां हृदयाय नमः । ओं रां शिरसे स्वाहा । ओं मां शिखायै वौषट् । ओं यं कवचाय हुं । ओं नं नेत्राभ्यां वषट् । ओं मः अस्त्राय फट् । इति दिग्बंधः । अस्य श्रीषडक्षरपरशुराम-मंत्रस्य । ब्रह्मा ऋषिः शिरसि । गायत्री च्छंदः मुखे । श्रीपरशुरामो देवता हृदये । जपे विनियोगः । ध्यानं—अंगौरवर्णमभितोऽबहिःप्रभाभिर्व्याप्तं परश्वथधनुर्धर-

---

४०. भार्गवदाशरथिमंत्रयोः युगपदुद्धारस्तंत्रसारे—स्वयमुद्देशसंयुक्तः तदाद्यर्ण-पुरःसरः ॥ सनतिः षडक्षरो मंत्रो वर्णैरंगक्रिया मता ॥ अर्थः—तदाद्यर्णः = राकारो बिंदुसहितः रां । सः पुरःसरः यस्य सः । रां इति प्रथमं । ततः उद्देशसंयुक्तः स्वयं रामाय । सनतिः = नमः । अयं मंत्रः षडक्षरः तथाच रां रामाय नमः इति मंत्रः । ॥१४॥
एवमुत्तरमंत्रेऽपि ज्ञेयं । वर्णैः रां इत्यादिषड्भिः अक्षरैः । अंगक्रिया = अंगन्यासः ।

मेकवीरं । ध्यायेदजेशपुरुहूतमुखैः स्तुवद्भिरावीतमात्मपदवीं प्रतिपादयंतं । श्रीपरशुराम-प्रेरणया श्रीपरशुरामप्रीत्यर्थं श्रीपरशुराममंत्रजपं करिष्ये । ॐ ❀ रां रामाय[42] नमः ❀ ॐ । इति मंत्रजपः । पुनः प्राणायामः षडंगन्यासः ऋष्यादिन्यासः ध्यानं च पूर्ववत् । श्रीपरशुरामप्रेरणया श्रीपरशुरामप्रीत्यर्थं षडक्षरपरशुराममंत्रजपः संपूर्णः । ॐ ❀ रां रामाय नमः ❀ ॐ । श्रीपरशुरामं तर्पयामि । इति श्रीपरशुराममंत्रः ॥ १४ ॥

## अथ षडक्षरदाशरथिराममंत्रः[43] ॥ १५ ॥

श्रीगुरुभ्यो नमः । ११ स्थाने श्रीदाशरथिरामाय नमः । ॐ ❀ रां रामाय नमः ❀ ॐ इति मंत्रेण प्राणायामः । ॐ रां हृदयाय नमः । ॐ रां शिरसे स्वाहा ।

---

४१. परशुरामध्यानश्लोकार्थः—अंगारवर्णं = धूमरहितोऽग्निरंगारः तद्वद्रक्तवर्णं । अंडेत्यविभक्तिको निर्देशः । अंडं अभितः बहिश्च = सर्वत्र । प्रभाभिर्व्याप्तं स्तुवद्भिः अजेशपुरुहूतमुखैः देवैः । आवीतं = परिवृतं । आत्मपदवीं = स्वस्वरूपं । प्रतिपादयंतं = अजेशादिभ्यः उपदिशंतं परशुरामं ध्यायेत् । ४२ रामशब्दार्थो वक्ष्यमाणदाशरथि-राममंत्रे द्रष्टव्यः । ४३. दाशरथिराममंत्रस्य उद्धारक्रमः पूर्वमंत्रवत् ।

द्वास- ॐ मां शिखायै वौषट्। ॐ यं कवचाय हुं। ॐ नं नेत्राभ्यां वषट्। ॐ मः प्रति-
॥१५॥ अस्त्राय फट्। इति दिग्बंधः। अस्य षडक्षरश्रीदाशरथिराममंत्रस्य। ब्रह्मा ऋषिः मंत्राः
शिरसि। गायत्री च्छंदः मुखे। श्रीदाशरथिरामो देवता हृदये। जपे विनियोगः। ध्यानं—श्यामं[४४] रवींद्वमितदीधितिकांतियुक्तं ज्ञानं शरं च दधतं प्रियया समेतं। स्वात्मस्वरूपममितं हनुमन्मुखेषु संदर्शयंतममितं स्मरतोरुगीर्भिः॥ श्रीदाशरथिरामप्रेरणया श्रीदाशरथिरामप्रीत्यर्थं षडक्षरश्रीदाशरथिराममंत्रजपं करिष्ये। ॐ ❁ रां रामाय नमः ❁ ॐ। इति मंत्रजपः। पुनः प्राणायामः षडंगन्यासः ऋष्यादिन्यासः ध्यानं च। श्रीदाशरथिरामप्रेरणया श्रीदाशरथिरामप्रीत्यर्थं षडक्षरश्रीदाशरथिराममंत्रजपः संपूर्णः।

---

४४. ध्यानश्लोकार्थः—श्यामं = दूर्वादळश्यामं। रवींद्वमितदीधितिकांतियुक्तं = रवयश्च इंदवश्च रवींदवः। अमिताः = बहवः। तेच ते रवींदवश्च रवींद्वमिताः। तेषां दीधितिरिव या कांतिः तया युक्तं। ज्ञानमुद्रां बाणं च दक्षिणहस्ते दधानं। वामे धनुरित्यर्थात्सिध्यति। प्रियया = सीतया। हनुमदादिषु स्वात्मस्वरूपं संदर्शयंतं। उरुगीर्भिः = अनंतवेदैरपि। अमितं = साकल्येन अप्रतिपाद्यं। स्मरतेति जनान्प्रति संबोधनं। ॥१५॥ रामशब्दार्थः—रमणीयत्वाद्रामः। रमणीयत्वाद्रः। अमितत्वात् अमः। रश्चासावमश्च इति वा रामः। आनंदरूपो निष्परोमाण इति श्रुतेः।

ॐ ❁ रां रामाय नमः ❁ ॐ। श्रीदाशरथिरामं तर्पयामि। इति श्रीषडक्षर दाशरथिराममंत्रः ॥ १५ ॥

## अथ अष्टाक्षरभार्गवमंत्रः[४९] ॥ १६ ॥

श्रीगुरुभ्यो नमः। ११ स्थाने भार्गवाय नमः। ॐ ❁ ॐ भां भार्गवाय नमः ❁ ॐ। इति मंत्रेण प्राणायामः। ओं पूर्णज्ञानात्मने हृदयाय नमः। ओं पूर्णैश्वर्यात्मने शिरसे स्वाहा। ओं पूर्णप्रभात्मने शिखायै वौषट्। ओं पूर्णानंदात्मने कवचाय हुं। ओं पूर्णतेजआत्मने नेत्राभ्यां वषट्। ओं पूर्णशक्त्यात्मने अस्त्राय फट्। इति दिग्बंधः। अस्य अष्टाक्षरश्रीभार्गवमंत्रस्य ब्रह्मा ऋषिः शिरसि। गायत्री च्छंदः मुखे। भार्गवो देवता हृदये॥ जपे विनियोगः। ध्यानं—अंगारवर्णमभितोऽबहिःप्रभाभिर्व्याप्तं परश्वथधनुर्धरमेकवीरं। ध्यायेदजेशपुरुहूतमुखैः

---

४९. मंत्रोद्धारः—निजगोत्रं तु सोद्देशं पूर्वाक्षरपुरःसरं। नत्यंतं तारपूर्वं च मनुरष्टाक्षरो मतः॥ अर्थः—सोद्देशं = चतुर्थ्यंतं। निजगोत्रं = भृगोर्गोत्रं तथाच्च भार्गवाय। पूर्वाक्षरः (विंदुसहितश्च) स च पुरःसरः=प्रथमं। अंते नमः। सर्वस्य पूर्वं तारः।

द्रास- स्तुवद्भिरावीतमात्मपदवीं प्रतिपादयंतं ॥ श्रीभार्गवप्रेरणया श्रीभार्गवप्रीत्यर्थं अष्टाक्षर प्रति-
॥१६॥ भार्गवमंत्रजपं करिष्ये। ॐ ❁ ॐ भां भार्गवाय[४६] नमः ❁ ॐ। इति मंत्रः। मंत्राः
पुनः प्राणायामः षडंगन्यासः ऋष्यादिन्यासः ध्यानं च। श्रीभार्गवप्रेरणया श्रीभार्गव-प्रीत्यर्थं अष्टाक्षरश्रीभार्गवमंत्रजपः संपूर्णः। ॐ ❁ ॐ भां भार्गवाय नमः ❁ ॐ। भार्गवं तर्पयामि। इति भार्गवमंत्रः ॥ १६ ॥

## अथ अष्टाक्षरराघवमंत्रः ॥ १७ ॥

श्रीगुरुभ्यो नमः। ११ स्थाने राघवाय नमः। ॐ ❁ ॐ रां राघवाय[४७][४८] नमः ❁ ॐ। इति मंत्रेण प्राणायामः। ओं पूर्णज्ञानात्मने हृदयाय नमः इत्यादि षडंगन्यासः। अस्य श्रीअष्टाक्षरराघवमंत्रस्य ब्रह्मा ऋषिः शिरसि। गायत्री च्छंदः

---

४६. मंत्रार्थः—भा रति ज्ञान वत्त्वात् (भा + र् + ग + व) भार्गवः। भृगुकुला-विर्भूतत्वाद्वा। ॥१६॥

४७. मंत्रोद्धारः—पूर्वमंत्रवत्। ४८. मंत्रार्थः--पूर्ववत्। रघुकुलाविर्भूतत्वा-द्राघव इति विशेषः।

मुखे । श्रीराघवो देवता हृदये । जपे विनियोगः । ध्यानं—श्यामं रवींद्वमितदीधितिकांतियुक्तं ज्ञानं शरं च दधतं प्रियया समेतं । स्वात्मस्वरूपममितं हनुमन्मुखेषु संदर्शयंतमजितं स्मरतोर्म्मिभिः ॥ श्रीराघवप्रेरणया श्रीराघवप्रीत्यर्थं अष्टाक्षरराघवमंत्रजपं करिष्ये ॥ ॐ ❁ ॐ रां राघवाय नमः ❁ ॐ । इति मंत्रजपः । पुनः प्राणायामः षडंगन्यासः ऋष्यादिन्यासः ध्यानं च । श्रीराघवप्रेरणया श्रीराघवप्रीत्यर्थं अष्टाक्षरराघवमंत्रजपः संपूर्णः । ॐ ❁ ॐ रां राघवाय नमः ❁ ॐ । श्रीराघवं तर्पयामि ॥

इति श्री अष्टाक्षरराघवमंत्रः ॥ १७ ॥

## ॥ अथ श्रीऐंकाक्षरभार्गवमंत्रः[४९] ॥ १८ ॥

श्रीगुरुभ्यो नमः । ११ स्थाने भार्गवाय नमः । ॐ ❁ भां ❁ ॐ । इति

---

४९. एकाक्षरभार्गवराघवमंत्रद्वयोद्धारः—ते च वीजे वीजभूते धर्मादीनामशेषतः । एते विजयदा मंत्रा ज्ञानमोक्षप्रदायकाः । हिरण्यरत्नराज्यादिसमभीष्टसुरद्रुमाः । अर्थः—ते च बीजे = भां रां इति बीजभूतौ मंत्रौ । अशेषतः = सर्वेषां । धर्मादीनां = चतुर्णां पुरुषार्थानां । वीजभूते = जनके । जपफलमाह—एते = सर्वे मंत्राः । विजयदा इत्यादि स्पष्टोऽर्थः । निष्कामानां ज्ञानमोक्षप्रदायिन इत्यपि ज्ञेयं ।

द्वास- मंत्रेण प्राणायामः। ओं पूर्णज्ञानात्मने हृदयाय नम इत्यादि षडंगानि। अस्य श्रीएकाक्षर- प्रति-
॥१७॥ भार्गवमंत्रस्य ब्रह्मा ऋषिः शिरसि। निचृद्गायत्री च्छंदः मुखे। भार्गवो देवता मंत्राः
हृदये। जपे विनियोगः। ध्यानं—अंगारवर्णमभितोऽबहिःप्रभाभिर्व्याप्तं परश्वथधनुर्धरमेक-
वीरं। ध्यायेदजेशपुरुहूतमुखैः स्तुवद्भिरावीतमात्मपदवीं प्रतिपादयंतं। श्रीभार्गवप्रेरणया
श्रीभार्गवप्रीत्यर्थं श्रीएकाक्षरभार्गवमंत्रजपं करिष्ये। ॐ ❁ भां ❁ ॐ। इति मंत्रजपः।
पुनः प्राणायामः षडंगन्यासः ऋष्यादिन्यासः ध्यानं च। श्रीभार्गवप्रेरणया
श्रीभार्गवप्रीत्यर्थं एकाक्षरभार्गवमंत्रजपः संपूर्णः॥ ॐ ❁ भां ❁ ॐ। भार्गवं
तर्पयामि। इति एकाक्षरभार्गवमंत्रः॥ १८॥

## ॥ अथ श्रीएकाक्षरराघवमंत्रः॥ १९॥

श्रीगुरुभ्यो नमः। एकादशस्थाने श्रीराघवाय नमः। ॐ ❁ रां ❁ ॐ।
इति मंत्रेण प्राणायामः। ओं पूर्णज्ञानात्मने इत्यादि षडंगन्यासः। अस्य श्रीएकाक्षर- ॥१७॥
राघवमंत्रस्य ब्रह्मा ऋषिः शिरसि। निचृद्गायत्री च्छंदः मुखे। श्रीराघवो देवता हृदये।

---

५०. उद्धारक्रमः पूर्वश्लोकादेव ज्ञेयः।

जपे विनियोगः । ध्यानं—श्यामं रवींद्वमितदीधितिकांतियुक्तं ज्ञानं शरं च दधतं प्रियया समेतं । स्वात्मस्वरूपममितं हनुमन्मुखेषु संदर्शयंतमजितं स्मरतोऽर्गाभिः । श्रीराघवप्रेरणया श्रीराघवप्रीत्यर्थं एकाक्षरराघवमंत्रजपं करिष्ये । ॐ ❁ रां ❁ ॐ । इति मंत्रजपः । पुनः प्राणायामः षडंगन्यासः ऋष्यादिन्यासः ध्यानं च । श्रीराघवप्रेरणया श्रीराघवप्रीत्यर्थं एकाक्षरराघवमंत्रजपः संपूर्णः । ॐ ❁ रां ❁ ॐ । राघवं तर्पयामि । इति एकाक्षरराघवमंत्रः ॥ १९ ॥

## ॥ अथ श्रीमदनगोपालकृष्णमंत्रः ॥ २० ॥

### अस्य मंत्रस्य श्रीअष्टादशाक्षरगोपालकृष्णमंत्र इति नामांतरं ॥

श्रीगुरुभ्यो नमः । एकादशस्थाने श्रीकृष्णाय नमः । ॐ ❁ क्लीं कृष्णाय

---

५१. उद्धारक्रमः—कृष्णो गोविच्च कामेतः सोद्देशो वल्लवीजनः । प्रियश्च तादृशः स्वाहायुक्तोऽष्टादशवर्णकः । अर्थः—कामेतः = क्लीं इति बीजाक्षरेण युक्तः । कृष्ण सोद्देश इति वर्तते । क्लीं कृष्णाय । सोद्देशो गोवित् = गोविंदाय । वल्लवीजनः = गोपीजनः । ततः प्रियशब्द-ः = तादृशः चतुर्थ्यंतः स च समस्तः । तथा च गोपीजनवल्लभाय । ततः स्वाहा । अयं मंत्रः अष्टादशाक्षरः ।

द्वास- गोविंदाय गोपीजनवल्लभाय स्वाहा ॐ इति मंत्रेण प्राणायामः । ॐ क्लीं प्रति-
॥१८॥ हृदयाय नमः । ॐ कृष्णाय शिरसे स्वाहा । ॐ गोविंदाय शिखायै वौषट् । ॐ मंत्राः
गोपीजनवल्लभाय कवचाय हुं । ॐ स्वाहा अस्त्राय फट् । इति दिग्बंधः । अस्य श्रीअष्टादशाक्षरमदनगोपालकृष्णमंत्रस्य ब्रह्मा ऋषिः शिरसि । धृतिश्छंदः मुखे । श्रीमदनगोपालकृष्णो देवता हृदये । जपे विनियोगः । ध्यानं—ध्यायेद्धरिन्मणिनिभं जगदेकवंद्यं सौंदर्यसारमरिशंखवराभयानि । दोर्भिर्दधानमजितं सरसं च भैष्मीसत्यासमेतमखिलप्रदमिंदिरेशं ॥ श्रीमदनगोपालप्रेरणया श्रीमदनगोपालप्रीत्यर्थं अष्टादशाक्षरमदन-

---

५२. न्यासोद्धारः—पदैरंगानि संप्रीतिकाममोक्षप्रदो मनुः । अर्थः—पंचभिः पदैः पंचांगानि । मंत्रजपफलमाह संप्रीतिकाममोक्षप्रद इति । संप्रीतिः=अत्यंतसुखं समीचीनप्रसादो वा । कामाः = विषयाः । मोक्षः = आत्यंतिकानिष्टनिवृत्तिसहितेष्टप्राप्तिलक्षणः । तेषां प्रदायकाः ।

५३. ध्यानश्लोकार्थः—हरिन्मणिनिभं=इंद्रनीलमणिवर्णं । सौंदर्यसारं = सौंदर्यवरं । ॥१८॥
सौंदर्यस्य सारः आधिक्यं यस्मिंस्तमिति वा । सरसं = स्नेहसहितं यथा भवति तथा । भैष्मी = रुक्मिणी । सत्या = सत्यभामा । ताभ्यां समेतं । अन्यत्सर्वं स्पष्टार्थकं ।

गोपालकृष्णमंत्रजपं करिष्ये । ॐ ❁ क्लीं कृष्णाय गोविंदाय गोपीजनवल्ल-भाय स्वाहा ❁ ॐ । इति मंत्रजपः । पुनः प्राणायामः षडंगन्यासः ऋष्यादि न्यासः ध्यानं च । श्रीमदनगोपालकृष्णप्रेरणया श्रीमदनगोपालकृष्णप्रीत्यर्थं अष्टादशाक्षर-मदनगोपालकृष्णमंत्रजपः संपूर्णः । ॐ ❁ क्लीं कृष्णाय गोविंदाय गोपीजन-वल्लभाय स्वाहा ❁ ॐ । श्रीमदनगोपालकृष्णं तर्पयामि ॥ इति अष्टादशाक्षरमदन-गोपालकृष्णमंत्रः ॥ २० ॥

---

५४. मंत्रार्थ :—क्लीं = कस्य सुखस्य लः परिग्रहोऽस्यास्तीति क्लः । तृतीयोतिशये क्ली । विंदुराधिक्यं च वक्ति । रमादिभ्योऽप्यतिशयितसुखवान् । कृष्णाय=सुखरूपत्वात् क् (कः) ज्ञानरूपत्वात् ऋ (आ) सर्वचेष्टकत्वात् षः । वलरूपत्वात् णः । कश्चासौ आ चासौ षश्चासौ णश्च (क् + ऋ + ष् + ण) कृष्णः । सकललोकनियमनादिना कर्षणाद्वा कृष्णः । यतः कर्षसि देवेश नियम्य सकलं जगत् । अतो वदंति मुनयः कृष्णं त्वां ब्रह्मवादिन इति स्मृतेः । वेदवेद्यत्वात् ज्ञानाख्यकिरणसंबंधाद्वा गोपालनेन तत्सत्ताकर्तृत्वाद्वा गोविंदः । तस्मै । गोपीजनवल्लभाय । स्वाहा = स्वामिन् । एतादृशगुणविशिष्टाय तुभ्यं नम इति शेषः ।

द्वास ॥१०॥

# अथ श्रीकृष्णषडक्षरमंत्रः ॥ २१ ॥

प्रति- मंत्राः

श्रीगुरुभ्यो नमः। एकादशस्थाने श्रीकृष्णाय नमः। ॐ ❀ क्लीं कृष्णाय नमः ❀ ॐ। इति मंत्रेण प्राणायामः। ओं पूर्णज्ञानात्मने हृदयाय नमः। ॐ पूर्णैश्वर्यात्मने शिरसे स्वाहा। ॐ पूर्णप्रभात्मने शिखायै वौषट्। ॐ पूर्णानंदात्मने कवचाय हुं। ॐ पूर्णतेजआत्मने नेत्राभ्यां वषट्। ॐ पूर्णशक्त्यात्मने अस्त्राय फट्। इति षडंगन्यासः। अस्य श्रीकृष्णषडक्षरमंत्रस्य ब्रह्मा ऋषिः शिरसि। गायत्री च्छंदः मुखे। श्रीकृष्णो देवता हृदये। जपे विनियोगः। ध्यानं—ध्यायेद्धरिन्मणिनिभं जगदेकवंद्यं सौंदर्यसारमरिशंखवराभयानि। दोर्भिर्दधानमजितं सरसं च भैष्मीसत्या-समेतमखिलप्रदमिंदिरेशं॥ श्रीकृष्णप्रेरणया श्रीकृष्णप्रीत्यर्थं श्रीकृष्णषडक्षरमंत्रजपं करिष्ये। ॐ ❀ क्लीं कृष्णाय नमः ❀ ॐ। इति मंत्रजपः। पुनः प्राणायामः। षडंगन्यासः ऋष्यादिन्यासः ध्यानं च। श्रीकृष्णप्रेरणया श्रीकृष्णप्रीत्यर्थं श्रीकृष्णषडक्षरमंत्रजपः ॥१९॥

---

५९. मंत्रोद्धारः—स कामः स्वयमुद्देशी नत्यंतोऽयं षडक्षरः। अर्थः—सकामः = क्लीं इति कामबीजं प्रथमं। उद्देशी स्वयं = चतुर्थ्यंतः कृष्णशब्दः कृष्णाय। नत्यंतः = ततः नम इति।

संपूर्णः । ॐ ❀ क्लीं कृष्णाय नमः ॐ । श्रीकृष्णं तर्पयामि । इति कृष्ण-षडक्षरमंत्रः ॥ २१ ॥

## ॥ अथ एकाक्षरश्रीकृष्णमंत्रः ॥ २२ ॥

श्रीगुरुभ्यो नमः । ११ स्थाने श्रीकृष्णाय नमः । ॐ ❀ क्लीं ❀ ॐ । इति मंत्रेण प्राणायामः ॥ ॐ पूर्णज्ञानात्मने हृदयाय नमः इत्यादि षडंगन्यासः । अस्य श्रीएकाक्षरकृष्णमंत्रस्य ब्रह्मा ऋषिः शिरसि । निचृद्गायत्री छंदः मुखे । श्रीकृष्णो देवता हृदये । जपे विनियोगः । ध्यानं-ध्यायेद्धरिन्मणिनिभं जगदेकवंद्यं सौंदर्यसारं अरिशंखवराभयानि । दोर्भिर्दधानमजितं सरसं च भैष्मीसत्यासमेतमखिलप्रदमिंदिरेशं श्रीकृष्णप्रेरणया श्रीकृष्णप्रीत्यर्थं एकाक्षरश्रीकृष्णमंत्रजपं करिष्ये । ॐ ❀ क्लीं ❀ ॐ । इति मंत्रजपः । पुनः प्राणायामः षडंगन्यासः ऋष्यादिन्यासः ध्यानं च । श्रीकृष्ण

---

२६. मंत्रोद्धारः—तदादिरपि सर्वेष्टचिंतामणिरुदीरितः । अर्थः—तदादिः = कृष्णषडक्षरमंत्रस्य आदिभूतः क्लीं इति शब्दोऽपि अपरो मंत्रः । सः जपतॄणां सकलेष्ट-चिंतामणिः = सर्वाभीष्टदाने चिंतामणिरिवास्ति ।

द्वास- प्रेरणया श्रीकृष्णप्रीत्यर्थं एकाक्षरश्रीकृष्णमंत्रजपः संपूर्णः । ॐ ❀ क्लीं ❀ ॐ । प्रति-
॥२०॥ कृष्णं तर्पयामि ॥ इति एकाक्षरकृष्णमंत्रः ॥ २२ ॥ मंत्राः

[छलार्याचार्यशिष्य रामदासविरचित तंत्रसारभावार्थचंद्रिकास्थः ।

## श्रीसंतानगोपालकृष्णमंत्रः ॥ २२—अ ॥

श्रीगुरुभ्यो नमः । ११ स्थाने श्रीसंतानगोपालकृष्णाय नमः । ओं ❀ देवकीसुत गोविंद देवदेव जगत्पते । देहि मे तनयं कृष्ण त्वामहं शरणं गतः ❀ ओं । इति मंत्रेण प्राणायामः । ॐ पूर्णज्ञानात्मने हृदयाय नमः । ॐ पूर्णैश्वर्यात्मने शिरसे स्वाहा । ॐ पूर्णप्रभात्मने शिखायै वौषट् । ॐ पूर्णानंदात्मने कवचाय हुं । ॐ पूर्णतेजआत्मने नेत्राभ्यां वषट् । ॐ पूर्णशक्त्यात्मने
अस्त्राय फट् । इति दिग्बंधः । ॥२०॥

अस्य श्रीद्वात्रिंशदक्षरसंतानगोपालमंत्रस्य नारद ऋषिः शिरसि ॥ अनुष्टुप् च्छंदः मुखे । श्रीसंतानगोपालकृष्णो देवता हृदये । गं बीजं । स्वाहा शक्तिः । जपे

विनियोगः। ध्यानं—शंखचक्रधरं कृष्णं रथस्थं च चतुर्भुजं। सर्वाभरणसंयुक्तं पीतवाससमच्युतं। द्विजवर्यार्जुनयुतं विष्णुतेजोपबृंहितं। समर्पयंतं विप्राय नष्टानानीय बालकान्। करुणामृतसंपूर्णदृष्ट्येक्षंतं च तं द्विजं। ध्यात्वा जपार्चनादीनि कुर्याद्भक्ति-परायणः। पुत्रार्थी स्वस्तिके न्यस्य तत्रस्थं कृष्णमर्चयेत्॥

श्रीसंतानगोपालकृष्णप्रेरणया श्रीसंतानगोपालकृष्णप्रीत्यर्थं द्वात्रिंशदक्षरसंतान-गोपालकृष्णमंत्रजपं करिष्ये। ॐ ❀ देवकीसुत गोविंद देवदेव जगत्पते। देहि मे तनयं कृष्ण त्वामहं शरणं गतः ❀ ॐ। इति मंत्रजपः। पुनरुप संहारार्थं प्राणायामः षडंगन्यासः ऋष्यादिन्यासः ध्यानं च। श्रीसंतानगोपालकृष्ण-प्रेरणया श्रीसंतानगोपालकृष्णप्रीत्यर्थं द्वात्रिंशदक्षरश्रीसंतानगोपालकृष्णमंत्रजपः संपूर्णः। ओं ❀ देवकीसुत गोविंद देवदेव जगत्पते। देहि मे तनयं कृष्ण त्वामहं शरणं गतः ❀ ओं। इति श्रीसंतानगोपालकृष्णं तर्पयामि।

एकलक्षं जपेन्मंत्रं सिद्धिर्भवति तत्क्षणात्। जपसंख्यादशांशं तर्पणं। पायसेन तद्दशांशो होमः। तद्दशांशं ब्राह्मणभोजनं। एवं यः कुरुते वंध्या पुत्रिणी भवति क्षणात्। बृहन्नारदतंत्रादुद्धृतोयं मंत्रः। इति संतानगोपालकृष्णमंत्रः॥ २२—अ॥]

द्रास- ॥२१॥

## ॥ अथ वेदव्यासाष्टाक्षरमंत्रः ॥ २३ ॥

प्रति- मंत्राः

श्रीगुरुभ्यो नमः। ११ स्थाने वेदव्यासाय नमः। ॐ ❀ व्यां वेदव्यासाय नमः ❀ ॐ। इति मंत्रेण प्राणायामः। ॐ पूर्णज्ञानात्मने हृदयाय नमः इत्यादिषडंगन्यासः। ओं व्यां हृदयाय नमः। ओं वेदव्यासाय शिरसे स्वाहा। ओं नमः शिखायै वौषट्। ओं व्यां कवचाय हुं। ओं वेदव्यासाय नेत्राभ्यां वषट्। ओं नमः अस्त्राय फट्। इति दिग्बंधः इति वा। अस्य श्रीअष्टाक्षरवेदव्यासमंत्रस्य

---

५६. मंत्रोद्धारः—स्वयं वेदपदारूढः पूर्ववर्णपुरःसरः। नत्यंतोऽष्टाक्षरो मंत्रः प्रियो विज्ञानगोपतेः। अर्थः—वेदपदारूढः स्वयं = वेदपदादुपरि व्यासशब्दः। स च वक्ष्यमाणनमःशब्दयोगात् चतुर्थ्यंतः। पूर्ववर्णपुरःसरः = सर्वस्यादौ व्यां इति बीजाक्षरयुक्तः। नत्यंतः = अंते नमःशब्दवान्। विज्ञानगोपतेः = ज्ञानसूर्यस्य भगवतः। प्रियः = प्रीतिविषयः। षडक्षरो मंत्रः। जपफलमाह—व्याख्याश्रीसर्वविज्ञानकवितादिगुणप्रदः। वादे विजयदो नित्यं यथा युद्धे नृकेसरी। अर्थः—मंत्रजप्तृणां व्याख्यादिगुणप्रदः = व्याख्याश्रीः = व्याख्यानविषयकशोभा। सर्वविज्ञानं = सर्वशास्त्रविषयकं ज्ञानं। वादे = जल्पवितंडालक्षणे। विजयदः = विशेषतो जयप्रदः। अत्र निदर्शनं यथेति। नृकेसरी = नरसिंहः। ॥२१॥

ब्रह्मा ऋषिः शिरसि। गायत्री च्छंदः मुखे। श्रीवेदव्यासो देवता हृदये। जपे विनियोगः। ध्यानं—विज्ञानरोचिःपरिपूरितांतर्बाह्यांडकोशं हरितोपलाभं ॥ तर्काभयेतं विधिशर्वपूर्व-गीर्वाणविज्ञानदमानतोऽस्मि ॥ श्रीवेदव्यासप्रेरणया श्रीवेदव्यासप्रीत्यर्थं वेदव्यासाष्टाक्षर-मंत्रजपं करिष्ये। ॐ ❁ व्यां वेदव्यासाय नमः ❁ ॐ। इति मंत्रजपः। पुनः प्राणायामः षडंगन्यासः ऋष्यादिन्यासः ध्यानं च ॥ श्रीवेद-व्यासप्रेरणया श्रीवेदव्यासप्रीत्यर्थं श्रीवेदव्यासाष्टाक्षरमंत्रजपः संपूर्णः। ॐ ❁ व्यां वेदव्यासाय नमः ❁ ॐ। वेदव्यासं तर्पयामि। इति वेदव्यासाष्टा-क्षरमंत्रः ॥ २३ ॥

---

५७. ध्यानश्लोकार्थः—विज्ञानरोचिःपरिपूरितांतर्बाह्यांडकोशं = विज्ञानमेव रोचिः प्रकाशः तेन परिपूरितः। अंतर्बाह्यभागसहितः अंडकोशः ब्रह्मांडं यस्य तं। हरितोपलाभं = इंद्रनीलमाणिक्यकांतिं। तर्काभयेतं = दक्षिणहस्ते तर्कमुद्रां वामहस्ते अभयमुद्रां च दधानं। एतादृशगुणविशिष्टं वेदव्यासं आनतोऽस्मि।

५८. वेदव्यासशब्दार्थः—वेदानां व्यासः = विभागः यस्मात् इति वेदव्यासः।

द्वास- ||२२||

# अथ व्यासगायत्रीमंत्रः ॥ २४ ॥

प्रति- मंत्राः

श्रीगुरुभ्यो नमः । ११ स्थाने वेदव्यासाय नमः ॥ ॐ ❁ पूर्णज्ञानाय विद्महे पूर्णानंदाय धीमहि । तन्नो व्यासः प्रचोदयात् ❁ ॐ । इति मंत्रेण प्राणायामः । ॐ पूर्णज्ञानात्मने हृदयाय नम इत्यादि षडंगन्यासः । ॐ पूर्णज्ञानाय विद्महे हृदयाय नमः । ॐ पूर्णानंदाय धीमहि शिरसे स्वाहा । ॐ तन्नो व्यासः प्रचोदयात् शिखायै वौषट् । ॐ पूर्णज्ञानाय विद्महे कवचाय हुं । ॐ पूर्णानंदाय धीमहि नेत्राभ्यां वषट् । ॐ तन्नो व्यासः प्रचोदयात् अस्त्राय फट् । इति वा । अस्य श्रीव्यासगायत्रीमंत्रस्य ब्रह्मा ऋषिः शिरसि । गायत्री च्छंदः मुखे । श्रीव्यासो

---

५९. मंत्रोद्धारः—ज्ञानानंदपुरः पूर्णो विद्महे धीमहे तथा । तन्नः प्रेरणमध्ये तु व्यासो मंत्राधिपाधिपः ॥ अर्थः—ज्ञानानंदपुरःपूर्णः = ज्ञानानंदशब्दयोः पूर्वं पूर्णशब्दो वाच्यः । तथाच पूर्णज्ञान पूर्णानंद इति प्रातिपदिके सिद्ध्यतः । (ते च सोद्देशे) तयोरुपरि विद्महे धीमहे(हि) योज्यौ । तथाच पूर्णज्ञानाय विद्महे पूर्णानंदाय धीमहि इति भवति । तन्नः प्रेरणमध्ये तु व्यासः = तन्न इति शब्दस्य प्रेरणार्थकप्रचोदयाच्छब्दस्य च मध्ये व्यासशब्दः । अयं मंत्रः श्रेष्ठमंत्राणामपि श्रेष्ठः । ||२२||

देवता हृदये । जपे विनियोगः । ध्यानं—ध्यायेच्छशांकशतकोट्यतिसौख्यकांतिं संसिच्यमानममृतोरुघटैः सुरेशैः । वर्णाभिमानिभिरजेशमुखैः सहैव पंचाशता प्रतिगिरंतमशेषविद्याः । श्रीव्यासप्रेरणया श्रीव्यासप्रीत्यर्थं व्यासगायत्रीमंत्रजपं करिष्ये ।
ॐ ❀ पूर्णज्ञानाय विद्महे पूर्णानंदाय धीमहि । तन्नो व्यासः प्रचोदयात् ❀ ॐ ।
इति मंत्रजपः ॥ पुनः प्राणायामः षडंगन्यासः ऋष्यादिन्यासः ध्यानं च । श्रीव्यासप्रेरणया श्रीव्यासप्रीत्यर्थं व्यासगायत्रीमंत्रजपः संपूर्णः । ॐ ❀ पूर्णज्ञानाय विद्महे

---

६०. ध्यानश्लोकार्थः—शशांकानां चंद्राणां शतकोटिभ्यः अतिशयितं सौख्यं सुखं यस्याः सकाशात् सा = शशांकशतकोट्यतिसौख्या । तादृशी कांतिर्यस्य तं । पंचाशता = पंचाशद्भिः । वर्णाभिमानिभिः । अजेशमुखैः = चतुर्मुखप्रभृतिभिः । सुरेशैः कर्तृभिः । अमृतोरुघटैः = अमृतपूर्णोत्कृष्टकलशैः करणैः । संसिच्यमानमिति संबंधः । सहैव = युगपदेव । अशेषविद्याः = अनंतवेदादिविद्याः । प्रतिगिरंतं उच्चारयंतं । अथवा ब्रह्मादिभ्य उपदिशंतं । ध्यायेत् ।

६१. व्यासशब्दार्थः—सर्वस्माद्विशिष्टत्वाद्विः । आ समंतात् सः गत इति व्यासः अत्र स इत्येतत् सृगतावित्यस्य रूपं । न तु तदः । तथात्वे द्वितीयादिषु व्यासं व्यासौ व्यासान् इत्यादिरूपाणि न स्युः । व्यातं व्यातौ व्यातान् इत्याद्येव स्यात् । विशिष्टः

द्वास- पूर्णानंदाय धीमहि । तन्नो व्यासः प्रचोदयात् ❁ ॐ । वेदव्यासं तर्पयामि ॥ प्रति-

॥२३॥ इति व्यासगायत्रीमंत्रः ॥ २४ ॥ मंत्राः

## अथ[62] एकाक्षरव्यासमंत्रः ॥ २५ ॥

श्रीगुरुभ्यो नमः । ११ स्थाने श्रीवेदव्यासाय नमः । ॐ ❁ व्यां ❁ ॐ । इति मंत्रेण प्राणायामः ॥ ॐ पूर्णज्ञानात्मने हृदयाय नमः इत्यादि षडंगन्यासः । ॐ व्यां हृदयाय नमः । ओं व्यीं शिरसे स्वाहा । ओं व्यूं शिखायै वौषट् । ओं व्यैं कवचाय हुं । ओं व्यौं नेत्राभ्यां वषट् । ओं व्यः अस्त्राय फट् । इति वा षडंगन्यासः । अस्य श्रीएकाक्षर-व्यासमंत्रस्य ब्रह्मा ऋषिः शिरसि । निचृद्गायत्री च्छंदः मुखे । श्रीव्यासो देवता

---

सर्वगतश्च । अथवा वीं स्वपरगताखिलविशेषविषयकं ज्ञानं आप्नोति सर्वदेति व्यां । वि विशेषेण आस्ते वेदेषु परममुख्यया वृत्या प्रतिपाद्यते इति वा ।

६२. मंत्रोद्धारः—आदिबीजं स्थिरादो(शे)पज्ञानबीजं विमुक्तिदं । सर्वपापक्षयकरं सर्वव्याधिविनाशनं ॥ अर्थः—आदिबीजं = व्यासशब्दस्याद्यावयवरूपो व्या इति । तद्बीजं सबिंदुकमित्यर्थः । फलमाह—स्थिरेति विभ्रमजनकैरनेकदुर्वादिशास्त्रैरप्य-नुच्छेद्यस्य निर्दोषज्ञानस्य बीजं = जनकं । ॥२३॥

हृदये। जपे विनियोगः। ध्यानं-ध्यायेच्छशांकशतकोट्यतिसौख्यकांतिं संसिच्यमानम-मृतोरुघटैः सुरेशैः। वर्णाभिमानिभिरजेशमुखैः सहैव पंचाशता प्रतिगिरंतमशेषविद्याः। श्रीव्यासप्रेरणया श्रीव्यासप्रीत्यर्थं एकाक्षरव्यासमंत्रजपं करिष्ये। ॐ ❁ व्यां ❁ ॐ। इति मंत्रजपः। पुनः प्राणायामः षडंगन्यासः ध्यानं च॥ श्रीव्यासप्रेरणया श्रीव्यासप्रीत्यर्थं एकाक्षरव्यासमंत्रजपः संपूर्णः। ॐ ❁ व्यां ❁ ॐ। वेदव्यासं तर्पयामि।

इति एकाक्षरव्यासमंत्रः॥ २५॥

## अथ[६३] श्रीएकाक्षरहयग्रीवमंत्रः॥ २६॥

श्रीगुरुभ्यो नमः। ११ स्थाने हयग्रीवाय नमः। ॐ ❁ हां हयग्रीवाय नमः ❁ ॐ। इति मंत्रेण प्राणायामः। ॐ पूर्णज्ञानात्मने हृदयाय नमः इत्यादि षडंग-न्यासः। अस्य श्रीहयग्रीवाष्टाक्षरमंत्रस्य ब्रह्मा ऋषिः शिरसि। गायत्री छंदः मुखे। श्रीहय-

६३. मंत्रोद्धारः—सोद्देशस्तु स्वयं दीर्घपूर्वार्णाद्यो नमोयुतः। सर्वविद्याप्रदोऽष्टार्णः प्रतिवादिजयप्रदः। विमुक्तिसाधनः कांतिवुद्धिस्थैर्यप्रदः सदा। अर्थः—स्वयं = हयग्रीवः। सोद्देशः = चतुर्थ्यंतः। दीर्घपूर्वार्णाद्यः = उपस्थितत्वात् हयग्रीवशब्दस्य प्रथमवर्णः सिद्ध्यते। विंदुर्दीर्घोतहकारः आद्यो यस्य स तथा। हां हयग्रीवाय। ततः नमः

द्वास- ग्रीवो देवता हृदये। जपे विनियोगः। ध्यानं—वंदे तुरंगवदनं [64] शशिबिंबसंस्थं चंद्रावदात- प्रति-
ममृतात्मकरैः (ममितात्मकरैः) समंतात् ॥ अंडांतरं बहिरपि प्रतिभासयंतं शंखाक्षपुस्तक-
॥२४॥ सुबोधयुताब्ज (युतात्म) बाहुं। नस्तो मुखादपि निरंतरमुद्गिरंतं विद्या अशेषत मंत्राः
उताब्जभवेशमुख्यैः। संसेव्यमानमतिभक्तिभरावनम्रैर्लक्ष्म्याऽमृतेन सततं परिषि-
च्यमानं। श्रीहयग्रीवप्रेरणया श्रीहयग्रीवप्रीत्यर्थं श्रीहयग्रीवाष्टाक्षरमंत्रजपं करिष्ये।

---

शब्देन युतः। फलमाह—सर्वेति। प्रतिवादिजयप्रदः जल्पादिकथायामिति शेषः। कांतिः=ब्रह्मवर्चसं। बुद्धिस्थैर्यं = विस्मृत्यभावः। तत्प्रदः। अष्टार्णः=अयं मंत्रः अष्टाक्षरः।

६४. ध्यानश्लोकार्थः—शशिबिंबसंस्थं = इंदुमंडले स्थितं। चंद्रावदातं = चंद्रवच्छुद्धं। अमृतात्मकरैः = नाशरहितैः अमृतस्राविभिर्वा स्वरूपभूतैः किरणैः। अंडांतरं बहिरपि समंतात्। प्रतिभासयंतं = प्रकाशयंतं। अमितात्मकरैरिति पाठे तु = अपरिमितस्वकिरणैरित्यर्थः। शंखं। अक्षं = पद्माक्षमाला। पुस्तकं। सुबोधः = ज्ञानमुद्रा। एतैर्युक्ताः अब्जानीव = सनाळपद्मानीव (चत्वारो) बाहवो यस्य तं। तुरंगवदनं = तुरंगस्य घोटकस्येव वदनं यस्य तं। वंदे। तत्रांतरोक्तं ध्यानं यथा—धवलनलिननिष्ठं क्षीरगौरं कराग्रैर्जपवलयसरोजे पुस्तकाभीष्टदाने। दधतममलवस्त्रं कल्पजालाभिरामं तुरगवदनविष्णुं नौमि विद्याग्रसिष्णुं ॥ शरच्छशांकप्रभमश्ववक्त्रं मुक्तामयैराभरणैरुपेतं। रथांगशंखोर्ध्वकरं च विद्याव्याख्यानमुद्रान्यकरं नमामि ॥ इति। अर्थः स्पष्टः। ॥२४॥

ॐ ❁ ह्रां ह्रैं हयग्रीवाय नमः ❁ ॐ । इति मंत्रजपः । पुनः प्राणायामः षडंगन्यासः ऋष्यादिन्यासः ध्यानं च । श्रीहयग्रीवप्रेरणया श्रीहयग्रीवप्रीत्यर्थं श्रीहयग्रीवाष्टाक्षरमंत्र-जपः संपूर्णः । ॐ ❁ ह्रां हयग्रीवाय नमः ❁ ॐ । श्रीहयग्रीवं तर्पयामि । आगमांतरे त्रयो हयग्रीवमंत्रा उक्ताः । ते च ॐ ❁ ह्रां हयशिरसे नमः ❁ ॐ । ॐ ❁ ह्रां हयशीर्षाय नमः ❁ ॐ । ॐ ❁ ह्रां हयशीर्ष्णे नमः ❁ ॐ इति। अंत्यस्य षणयोर्भेदेन षडक्षरत्वं ज्ञेयं। तत्तन्मंत्रेण प्राणायामः। षडंगन्यासादि पूर्वमंत्रवत्। इति श्रीहयग्रीवाष्टाक्षरमंत्रः ॥ २६ ॥

## अथ श्रीकपिलाष्टाक्षरमंत्रः ॥ २७ ॥

श्रीगुरुभ्यो नमः । ११ स्थाने श्रीकपिलाय नमः । ॐ ❁ ओं कं कपिलाय

---

६५. मंत्रार्थः—हयग्रीवाय=ओहाक्त्याग इति धातोः हकारः पारतंत्र्यादिनिखिल-दोषराहित्यवाची । यातेर्गत्यर्थत्वात् यो ज्ञानवाची । हया निर्दोषज्ञानात्मिका ग्रीवा तदुपलक्षितसर्वावयवाः यस्य तस्मै । नमः ।

६६. कपिलदत्तमंत्रौ युगपदुद्धरति—स्वयमुद्देशवान्पूर्ववर्णपूर्वो नमोयुतः । सताऽरोऽष्टाक्षरश्चैव नवार्णश्च मनू स्मृतौ ॥ अर्थः—उद्देशवान् स्वयं = कपिलाय अथवा

नमः ॐ ॐ । इति मंत्रेण प्राणायामः । ॐ पूर्णज्ञानात्मने हृदयाय नमः । इत्यादि षडंगन्यासः । अस्य श्रीकपिलाष्टाक्षरमंत्रस्य ब्रह्मा ऋषिः शिरसि । गायत्री च्छंदः मुखे । श्रीकपिलो देवता हृदये । जपे विनियोगः । ध्यानं—प्रोद्यद्दिवाकरसमानतनुं सहस्रसूर्योरुदीधितिभिराप्तसमस्तलोकं । ज्ञानाभयांकितकरं कपिलं च दत्तं (कपिलं परेशं) ध्यायेदजादिममिति प्रतिबोधयंतं ॥ श्रीकपिलप्रेरणया श्रीकपिलप्रीत्यर्थं श्रीकपिला-

---

दत्तात्रेयाय । पूर्ववर्णपूर्वः = कपिलदत्तात्रेयपदयोः यौ पूर्ववर्णौ (बिंदुसहितौ च) कं दं इति । तौ पूर्वौ आद्यौ यस्य मंत्रद्वयस्य । सतारः = द्वावप्यादौ ओंकारसहितौ । मनू = एतौ मंत्रौ । अष्टाक्षरश्चैव = प्रथमोऽष्टाक्षर एव । नवार्णश्च = द्वितीयस्तु नवाक्षरः । इति ज्ञेयौ ।

६७. तयोर्ध्यानश्लोकार्थः–प्रोद्यद्दिवाकरसमानतनुं = नवोदितसूर्यवद्रक्तवर्णमित्यर्थः । सहस्रशब्दोऽमितपरः । तथा च अमितसूर्येभ्यः उर्वीभिः उत्कृष्टाभिः दीधितिभिः । आप्तसमस्तलोकं = व्याप्तचतुर्दशभुवनं । दत्तं = कपिलध्याने दत्तपदं यौगिकं । कपिलं = दत्तध्याने कपिलपदं यौगिकं । मंत्रसामर्थ्यमाह—अधृष्यताज्ञानमोक्षप्रदौ भक्तेष्विमौ सदा ॥ अर्थः—भक्तेषु = योग्येषु । अधृष्यता = अपराजितत्वं । ज्ञानं = शास्त्रजं । मोक्षश्च इत्येतान्प्रकर्षेण दत्तः इति अधृष्यताज्ञानमोक्षप्रदौ ॥

ष्टाक्षरमंत्रजपं करिष्ये ॥ ॐ ❁ ओं कं कपिलाय नमः ❁ ॐ । इति मंत्रजपः । पुनः प्राणायामः षडंगन्यासः ऋष्यादिन्यासः ध्यानं च । श्रीकपिलप्रेरणया श्रीकपिलप्रीत्यर्थं श्रीकपिलाष्टाक्षरमंत्रजपः संपूर्णः । ॐ ❁ ॐ कं कपिलाय नमः ❁ ॐ । श्रीकपिलं तर्पयामि ॥ इति कपिलमंत्रः ॥ २७ ॥

## ॥ अथ श्रीदत्तात्रेयनवाक्षरमंत्रः ॥ २८ ॥

श्रीगुरुभ्यो नमः । एकादशस्थाने श्री दत्तात्रेयाय नमः । ॐ ❁ ॐ दं दत्तात्रेयाय नमः ❁ ॐ । इति मंत्रेण प्राणायामः । ॐ पूर्णज्ञानात्मने हृदयाय नमः ।

---

६८. कपिलशब्दार्थः—कं ब्रह्माणं पिं पिनाकिनं रुद्रं च । लाति स्वीयतया आदत्ते इति कपिलः । सुखरूपत्वात् कः । पालकत्वात् पिः । सर्वानुग्राहकत्वात् लः । कश्चासौ पिश्चासौ लश्च कपिल इति वा । सुखादनंतात्पालनाल्लापनाच्च यं वै देवं कपिलमुदाहरंतीति बाभ्रव्यशाखायां ।

६९. मंत्रोद्धारः—कपिलमंत्राज्ज्ञेयः । दत्तात्रेयशब्दार्थस्तु—स्वयमेव स्वेन अत्रिऋषये दत्तत्वाद्दत्तः । तदुक्तं श्रीभागवते—अत्रेरपत्यमभिकांक्षत आह तुष्टो दत्तो मयाऽहमिति यद्भगवान्स दत्तः । इति । अत्रेरपत्यं पुमान् आत्रेयः ।

द्वास- इत्यादि षडंगन्यासः। अस्य श्रीदत्तात्रेयनवाक्षरमंत्रस्य ब्रह्मा ऋषिः शिरसि। प्रति-
बृहती च्छंदः मुखे। श्रीदत्तात्रेयो देवता हृदये। जपे विनियोगः। ध्यानं—
।२६।। प्रोद्यद्दिवाकरसमानतनुं सहस्रसूर्योरुदीधितिभिराप्तसमस्तलोकं। ज्ञानाभयांकितकरं कपिलं मंत्राः
च दत्तं (मदभीष्टदत्तं) ध्यायेदजादिसमिर्तिं प्रतिबोधयंतं। श्रीदत्तात्रेयप्रेरणया
श्रीदत्तात्रेयप्रीत्यर्थं दत्तात्रेयनवाक्षरमंत्रजपं करिष्ये। ॐ ❀ ॐ दं दत्तात्रेयाय नमः ❀
ॐ। इति मंत्रजपः॥ पुनः प्राणायामः षडंगन्यासः ऋष्यादिन्यासः ध्यानं च।
श्रीदत्तात्रेयप्रेरणया श्रीदत्तात्रेयप्रीत्यर्थं श्रीदत्तात्रेयनवाक्षरमंत्रजपः संपूर्णः। ॐ ❀ ॐ
दं दत्तात्रेयाय नमः ❀ ॐ। श्रीदत्तात्रेयं तर्पयामि। इति श्रीदत्तात्रेयनवाक्षर-
मंत्रः॥ २८॥

## अथ श्रीविष्णुसूक्तमंत्रः॥ २९॥

श्रीगुरुभ्यो नमः। एकादशस्थाने श्रीविष्णवे नमः। ॐ ❀ ॐ नमोनारा-

---

७०. मंत्रोद्धारः—सूक्तं दीर्घतमोदृष्टं विष्णोर्नुकमिति प्रभोः। अर्थः—विष्णोर्नुक- ।।२६।।
मिति = एतदादि [ऋग्वेदे द्वितीयाष्टकस्य द्वितीयाध्याये २४ श वर्गात्मकं] षळर्चं सूक्तं।
प्रभोः = व्यापनशीलस्य विष्णोः। तच्च-दीर्घतमोदृष्टं = तन्नाम्ना ऋषिणा दृष्टं। अतः दीर्घ-
तमा ऋषिस्तस्य।

यणाय ❀ ॐ। इति मंत्रेण प्राणायामः। ॐ विष्णवे नमः ॐ। इति वा प्राणायामः। पूर्णज्ञानात्मने हृदयाय नमः। इत्यादि षडंगन्यासः। अस्य श्रीविष्णोर्नुकमिति-षळर्चस्य सूक्तस्य दीर्घतमा ऋषिः शिरसि। त्रिष्टुप् च्छंदः मुखे। श्रीविष्णुर्देवता हृदये। जपे विनियोगः। ध्यानं—उद्यद्भास्वत्समाभास (इन्द्रनीलसमाभास) श्चिदानंदैकदेहवान् ॥ चक्रशंखगदापद्मधरो ध्येयोऽहमीश्वरः। लक्ष्मीधराभ्यामाश्लिष्टः स्वमूर्तिगणमध्यगः। ब्रह्मवायुशिवाहीशविपैः शक्रादिकैरपि। सेव्यमानोऽधिकं भक्त्या नित्यनिःशेषशक्तिमान्। श्रीविष्णुप्रेरणया श्रीविष्णुप्रीत्यर्थं षळर्चविष्णुसूक्तमंत्रजपं करिष्ये। ॐ * विष्णोर्नु कं वीर्याणि प्रवोचं यः पार्थिवानि विममे रजांसि। यो अस्कभायदुत्तरं सधस्थं विचक्रमाणस्त्रेधोरुगायः ॥ १ ॥ प्र तद्विष्णुः स्तवते वीर्येण

---

७१. ध्यानश्लोकार्थः—उद्यद्भास्वत्समाभासः = तत्क्षणोदितदिवाकरकांतिसमान-कांतिमान्। चिदानंदैकदेहवान् = केवलज्ञानानंदमयदेहः। दक्षिणोर्ध्वादिचतुर्भुजेषु क्रमेण चक्राद्यायुधचतुष्टयवान्। अहमिति ब्रह्माणं प्रति भगवद्वाक्यमेतत्। वामपार्श्वस्था लक्ष्मीः। दक्षिणपार्श्वस्था भूः। स्वमूर्तिगणमध्यगः = स्वमूर्तीनां विश्वाद्यष्टमूर्तीनां यो गणः तन्मध्यगः, नित्यनिःशेषशक्तिमान् = ह्रासरहिताशेषकार्यकरणक्षमस्वाभाविकशक्तिमान्।

१. विष्णोर्नुकं—यः त्रेधा विचक्रमाणः = बलेर्भूग्रहणसमये त्रिप्रकारं स्वसृष्टाँल्लोकान् विविधं क्रममाणः। उरुगायः = उरुभिः ब्रह्मरुद्रेंद्रादिभिः गीयमानः विष्णुः।

द्वास- मृगो न भीमः कुचरो गिरिष्ठाः । यस्योरुषु त्रिषु विक्रमणेष्वधिक्षियन्ति भुवनानि प्रति-

॥२७॥ विश्वा ॥ २ ॥ प्र विष्णवे शूषमेतु मन्म गिरिक्षित उरुगायाय वृष्णे । य इदं दीर्घं मंत्राः

उत्तरं = उत्कृष्टतरं । सधस्थं = सहशब्दस्य 'सध' इत्यादेशः । पुण्यकृतां सहनिवासयोग्यं सत्यलोकं । अस्कभायत् = स्तंभितवान् । स्वक्रमणवेगेन चलितमासन्नपतनं स्थिरं चकारेति यावत् । तादृशगुणविशिष्टस्य विष्णोः=व्यापनशीलस्य नारायणस्य । वीर्याणि = पराक्रमान् । यः पार्थिवानि रजांसि विममे = भूपरमाणून् गणितवांश्च । एतादृशोऽपि । कं = कः । चतुर्मुखोऽपि । प्रवोचत् नु ?=साकल्येन प्रब्रूयात् किं ? = न कोपीति भावः ॥ १ ॥

२. प्र तद्विष्णुः—तत् = स महानुभावो विष्णुः । वीर्येण=स्वकीयेन वीरकर्मणा निमित्तेन । प्र स्तवते=ब्रह्मादिभिः प्रकर्षेण स्तूयते । कथं स्तूयते—कुचरः = कुत्सितहिंसादिकर्ता । दुर्गप्रदेशे संचारी वा । गिरिष्ठाः=पर्वताद्युन्नतप्रदेशस्थायी । मृगो न = सिंह इव । विष्णुपक्षे-कुचरः=कुसु भूम्युपलक्षितसर्वलोकेषु संचारी । गिरिष्ठाः=गिरिवदुन्नतवैकुंठादिलोकस्थायी । गिरि वेदादिरूपायां वाचि प्रतिपाद्यत्वेन स्थायीति वा । भीमः= शत्रूणां भीतिजनकः । मृगो न = नशब्दस्य 'इव' इत्यर्थः । नृसिंह इव शत्रूणां मृगयिता । तादृशः स्तूयते इति संबंधः । यस्य = पूर्वोक्तस्य विष्णोः । उरुषु = ॥२७॥
विस्तीर्णेषु । त्रिषु विक्रमणेषु = पादविन्यासेषु । विश्वा = सर्वाणि । भुवनानि = भूतजातानि । अधिक्षियंति = आश्रित्य वर्तंते । स विष्णुरित्यन्वयः ॥ २ ॥

प्रयंतं सधस्थमेको विममे त्रिभिरित्पदेभिः ॥ ३ ॥ यस्य त्री पूर्णा मधुना पदान्यक्षीयमाणा स्वधया मदंति । य उं त्रिधातु पृथिवीमुत द्यामेको दाधार भुवनानि विश्वा ॥ ४ ॥ तदस्य प्रियमभि पाथो अश्यां नरो यत्र देवयवो मदंति । उरुक्र-

---

३. प्र विष्णवे—यः एक इत् = असहाय एव । त्रिभिः पदेभिः=पादविक्षेपैः । सधस्थं = सहस्थानं । दीर्घं = विस्तृतं । प्रयतं = नियतं । इदं = जगत् । विममे = विशेषेण निर्मितवान् । तस्मै गिरिक्षिते = गिरिवदुन्नतवैकुण्ठप्रदेशे तिष्ठते । उरुगायाय = उरुभिर्महद्भिः स्तुत्याय । वृष्णे = भक्तेभ्यः कामानां वर्षयित्रे । एवंविधमहानुभावाय । विष्णवे विष्णुं प्रति । शूषं = मोक्षसुखमुद्दिश्य । मन्म = अस्मन्मतिः । प्रैतु = प्रकर्षेण गच्छतु । भगवंतं विषयीकरोत्वित्यर्थः ॥ ३ ॥

४. यस्य त्री पूर्णा—यस्य = विष्णोः । मधुना = अमृतेन सुखेन वा । पूर्णा = पूर्णानि । त्री = त्रीणि । पदानि = पादक्षेपणानि श्वेतद्वीपानन्तासनवैकुण्ठनामकानि स्थानानि वा । स्वधया = अन्नेन । मदंति = मादयंति सुखयंति मुक्तान् । यद्वा नारायणो वासुदेवो वैकुंठ इति ते त्रयः इत्युक्तानि त्रीणि भगवद्रूपाणि । अक्षीयमाणा = अक्षीयमाणानि नाशरहितानीति यावत् । स्वधया = स्वरूपभूतसुखेन मदंति = संतुष्टानि वर्तंते । किंच—य उ = य एक एव । त्रिधातु = प्रकृतिपुरुषकालाधारः सन् । पृथिवीं = प्रख्यातां भूमिं । द्यामुत = द्योतनात्मकमंतरिक्षं च । विश्वा भुवनानि च । दाधार = धृतवान् ॥

द्वास- मस्य स हि बंधुरित्था विष्णोः पदे परमे मध्व उत्सः ॥ ५ ॥ ता वां वास्तून्युश्मसि प्रति-
॥२८॥ गमध्यै यत्र गावो भूरिशृंगा अयासः । अत्राह तदुरुगायस्य वृष्णः परमं पदमवभाति मंत्राः
भूरि ॥ ६ ॥ इति मंत्रजपः । पुनः प्राणायामः षडंगन्यासः । ऋष्यादिन्यासः ध्यानं च ।

---

५. तदस्य प्रियं—उरुक्रमस्य = विष्णोः । इत्था = अंशोनानाव्यपदेशादितिसूत्रतद्भाष्योक्तदिशा । बंधुः = पुत्रत्वादिरूपेण बंधुः । परमे पदे = उत्कृष्टलोकप्राप्तिं प्रति । उत्सः = उत्कृष्टेच्छावान् । अहं । यत्र = यस्मिन्निवृत्तकर्मणि कृते सति । देवयवः = धार्मिकाः देवत्वविषयकेच्छावंतो वा । नरः = पुरुषाः । मदंति = हृष्टा भवंति । अस्य = पूर्वमंत्रप्रस्तुतस्य । तत् । विष्णोः प्रियं = प्रीतिजनकं । अभि = न विद्यते भीर्यस्मात्तत् । पाथः = निवृत्तकर्म । अश्यां = व्याप्नुयां । कुर्यामित्यर्थः । तेन कर्मकरणेन मध्वः = आनंदं । अश्यां = अनुभवामि । यद्वा-विष्णोः परमे पदे उत्सः भक्तिमान् । इत्था = इत्थं बळित्थेत्यादिश्रुतिप्रसिद्धः । मध्वः = आनंदकरशास्त्रनिर्माता मध्वाचार्यः । यस्य उरुक्रमस्य बंधुः पुत्रः । अस्य = एतादृशस्य विष्णोः । प्रियं पाथः = शालिग्रामतीर्थं गंगोदकं च । अभ्यश्यां = प्राश्नीयां । ॥ ५ ॥ ॥२८॥

६. ता वां वास्तूनि—अत्र अह इति पदच्छेदः । अह = संबोधनमेतत् । हे आत्मांतरात्मरूपभगवद्रूपविशेषौ । वां = युवां । गमध्यै = युष्मत्प्राप्त्यर्थं । ता = तानि ।

श्रीविष्णुप्रेरणया श्रीविष्णुप्रीत्यर्थं षळर्चविष्णुसूक्तमंत्रजपः संपूर्णः। एकैकामृचमुक्त्वा श्रीविष्णुं तर्पयामि। इति तर्पणं ॥ इति श्रीविष्णुसूक्तमंत्रजपः ॥ २९ ॥

## अथ इंद्रनामक[७२] श्रीविष्णुमंत्रः ॥ ३० ॥

श्रीगुरुभ्यो नमः। एकादशस्थाने श्रीइंद्रनामकविष्णवे नमः। ओं ❀ ओं नमो नारायणाय❀ ओं इति प्राणायामः। ओं विष्णवे नमः ओं इति वा। ओं पूर्णज्ञानात्मने हृदयाय नमः इत्यादि षडंगानि। अस्य श्री योजातइति पंचदशर्चसूक्तमंत्रस्य गृत्समद ऋषिः

---

वास्तूनि = वैकुंठादि स्थानानि। उश्मसि = कामयामहे। यत्र = येषु स्थानेषु। भूरिशृंगाः = सुवर्णालंकृतशृंगवत्यः। गावः = मुक्ताः कामधेन्वादयः। अयासः = इतस्ततो गमनवत्यः। अत्र = स्थानेषु। अह = हे भगवन्। उरुगायस्य ब्रह्मादिभिः स्तुत्यस्य। वृष्णः = भक्ताभिलषितसेचकस्य तव। तत् = गुणपूर्णं। परमं पदं। भूरि यथा तथा। अवभाति = अस्मभ्यमवभातु ॥ ६ ॥

७२. मंत्रोद्धारः—सर्वार्थदं गार्त्समदं योजात इति चा परं। अर्थः - योजात इति [ऋग्वेदे २। ६। ७—८] पंचदशर्चं सूक्तं। प्रभोरित्यनुवर्तते = विष्णोः प्रतिपादकं। तत् गार्त्समदं = गृत्समदर्षिणा दृष्टं। तत्सूक्तं सर्वार्थदं = जपतृणामशेषपुरुषार्थप्रदं। अपरं = पूर्वोक्तादन्यत्सूक्तमेतत्। चात् विष्णुदेवतात्मकोऽयं मंत्रः।

द्वास- ||२९|| शिरसि । त्रिष्टुप् छंदः मुखे । श्रीइंद्रनामकविष्णुर्देवता हृदये । जपे विनियोगः । ध्यानं— प्रति- मंत्राः
उद्यद्भास्व (नीलमेघस) त्समाभासश्चिदानंदैकदेहवान् । चक्रशंखगदापद्मधरो ध्येयोऽहमी-
श्वरः । लक्ष्मीधराभ्यामाश्लिष्टः स्वमूर्तिगणमध्यगः । ब्रह्मवायुशिवाहीशविपैः शक्रादिकैरपि ।
सेव्यमानोऽधिकं भक्त्या नित्यनिःशेषशक्तिमान् । श्रीइंद्रनामकविष्णुप्रेरणया श्रीइंद्रना-
मकविष्णुप्रीत्यर्थं योजात इति सूक्तमंत्रजपं करिष्ये । ॐ ❀ यो जात एव प्रथमो
मनस्वान्देवो देवान्क्रतुना पर्यभूषत् । यस्य शुष्माद्रोदसी अभ्यसेतां नृम्णस्य मन्हा स
जनास इंद्रः ॥ १ ॥ यः पृथिवीं व्यथमानामदृंहद्यः पर्वतान्प्रकुपितां अरम्णात् । यो

---

मंत्रार्थः—१. यो जात एव—कदाचिदेकाकिनं गृत्समदमसुरा दृष्ट्वा ' अय-
मिंद्रोऽस्मद्भयाद्गृत्समदरूपेणास्त ' इति मत्वा तमुपद्रोतुं परिवव्रुः । तैर्गृहीतो गृत्समदः
' नाहमिंद्रः सत्वेवंगुणोपेत ' इति इंद्रस्य तदंतर्यामिणो हरेश्च मिश्रं महिमानमाह ।
जनासः = जनाः हे असुराः । योजात एव = सदा विद्यमान एव सन् । प्रथमः = देवानां
प्रधानभूतः । मनस्वान् = ज्ञान्यग्रगण्यः । देवः = द्योतमानः । क्रतुना = वृत्रवधादिकर्मणा ।
देवान् = स्वभक्तान् । पर्यभूषत् = अलंचकार अरक्षदिति यावत् । यद्वा स्वस्वकार्येषु ||२९||
प्रावर्तयत् । यस्य = देवस्य । शुष्मात् = बलात् । रोदसी = द्यावापृथिव्यौ । अभ्य-
सेतां = अभ्यस्येतां अपरिमितव्याप्तिमत्त्वात् अवेपेतां । नृम्णस्य = सुखस्य बलस्य वा ।
मन्हा = महत्त्वेन । युक्तः सः = स एव । इंद्रः = परमैश्वर्यवान् स्वामी । नाहं ॥ १ ॥

अंतरिक्षं विममे वरीयो यो द्यामस्तभ्नात्स जनास इंद्रः ॥ २ ॥ यो हत्वाहिमरिणात्सप्तसिंधून्यो गा उदाजदपधा वलस्य। यो अश्मनोरंतरग्निं जजान संवृक्समत्सु स जनास इंद्रः ॥ ३ ॥ येनेमा विश्वा च्यवना कृतानि यो दासं वर्णमधरं गुहाऽकः।

---

२. यः पृथिवीं—जनासः = हे असुराः । यः = इंद्रः । व्यथमानां = दैत्यैरुपद्रुतां । पृथिवीं अदृंहत् = दैत्यान्हत्वा देवानां सुखमातनोत् । यश्च प्रकुपितान् = पक्षयुक्तत्वेन लोकसंहर्तॄन् पर्वतान् । अरम्णात् = चिच्छेद । यश्च अंतरिक्षं । वरीयः = उरुतमं विस्तृतं । विममे = चकार । यश्च द्यां = द्युलोकं । अस्तभ्नात् = संस्तंभितवान् । स एव इंद्रः ॥ २ ॥

३. यो हत्वाऽहिं —यः = देवः । अहिं = लोकोपद्रवाय पर्वतेषु नदीद्वाराणि रुद्ध्वा वृष्टमुदकं अंतरिक्षे प्रतिबध्य स्थितं अहिनामकं दैत्यं । हत्वा । सप्तसिंधून् = सप्तेत्युपलक्षणं वह्वीर्नदीः । अरिणात् = स्रावयामास = समुद्रं गमयामास । यश्च वलस्य = तृतीयार्थे षष्ठी । वलनामकासुरेण । अपधा = गुहायां पिहिताः । गाः । उदाजत् = निरगमयत् । यश्च अश्मनोः = अत्यंतमृदुरूपयोर्मेघयोः । अंतः = मध्ये । अग्निं = विद्युतं । जजान = जनयामास । यद्वा अश्मनोर्मध्ये = गुरुशिष्ययोः संघर्षेण । अग्निं = अग्निवत् प्रकाशमानं शुद्धं ज्ञानं । जजान । यश्च समत्सु युद्धेषु । संवृक् = भक्तान्संवृणोति । रक्षतीति यावत् । हे जनाः स एवेंद्रः ॥ ३ ॥

द्वास- श्वघ्नीव यो जिगीवाँल्लक्षमाददर्यः पुष्टानि स जनास इंद्रः ॥ ४ ॥ यं स्मा पृच्छंति कुह प्रति-
॥३०॥ सेति घोरमुतेमाहुर्नैषो अस्तीत्येनं । सो अर्यः पुष्टीर्विज इवामिनाति श्रदस्मै धत्त स मंत्राः
जनास इंद्रः ॥ ५ ॥ यो रध्रस्य चोदिता यः कृशस्य यो ब्रह्मणो नाधमानस्य

---

४. येनेमा विश्वा—येन = देवेन । विश्वा = विश्वानि समस्तानि । इमा = इमानि प्राणिजातानि । च्यवना = च्यावितानि = स्वस्वव्यापारेषु प्रेरितानि । यश्च दासं = हिंसकं । अधरं वर्णं = निकृष्टवर्णमसुरजातं । गुहा = अंधे तमसि । अकः = करोति । यश्च श्वघ्नीव = मृगयुरिव । लक्षं = शरव्यं । जिगीवान् = जितवान् प्राप्तवान् । अर्यः = सः स्वामी । पुष्टानि = समृद्धानि धनानि । आदत् = भक्तेभ्यः अनादिकालमारभ्य ददत् वर्तते । एवंभूतो यः स एवेंद्रः । अधरवर्णान्युष्मान्सोऽधे तमसि पातयेद्द्रवतेति भावः ॥ ४ ॥

५. यं स्मा पृच्छंति—यं = भगवंतं । सः कुह = स देवः कुत्रास्तीति । पृच्छंति = वादरसिका जनाः । यं च=देवं । केचन घोरमाहुः । उत ईं आहुः इति च्छेदः । केचन उत ईं= सौम्यमाहुः । उत = केचन । एषोऽस्तीत्याहुः । उत = केचन । एष नास्तीत्याहुः । जगदा- ॥३०॥
हुरनीश्वरमित्यर्थः । एवं स्थिते वेदपुरुषः स्वसिद्धांतमाह-सो अर्यः = स स्वामी । विज इव =पक्षिपोत इव । पुष्टीः = वृद्धीः । आमिनाति = सम्यक् प्राप्नोति । पक्षिशावकः दिने

कीरेः । युक्तग्राव्णो योऽविता सुशिप्रः सुतसोमस्य स जनास इंद्रः ॥ ६ ॥ यस्याश्वासः प्रदिशि यस्य गावो यस्य ग्रामा यस्य विश्वे रथासः । यः सूर्यं य उषसं जजान यो अपां नेता स जनास इंद्रः ॥ ७ ॥ यं क्रंदसी संयती विह्वयेते परेवर उभया

---

दिने यथा प्रवर्धते तथाऽस्मत्स्वामी प्राणिहृदयेषु सदाऽभिवृद्धो वर्तते इति यावत्॥ अतः श्रत् अस्मै धत्त = यद्यप्यसौ विशेषतोऽस्माभिर्न दृश्यते तथापि ज्ञानिदृष्ट्या दृश्यत एव । अतोऽस्तीत्येव विश्वासं कुरुत ॥ ५ ॥

६. यो रध्रस्य— यः = विष्णुरिंद्रो वा । रध्रस्य = समृद्धस्य उत्तमाधिकारिणः तत्वज्ञानिनः । चोदिता = प्रेरकः । यश्च कृशस्य = दरिद्रस्य मध्यमाधिकारिणोऽपि । चोदिता । यश्च नाधमानस्य = ऐहिकफलं याचमानस्य । कीरेः = स्तोतुः । ब्रह्मणः = ब्राह्मणस्य चोदिता । यश्च सुशिप्रः = सुंदराकृतिः । युक्तग्राव्णः = सोमसवनार्थमुपात्तपाषाणस्य । सुतसोमस्य = सोमाभिषवं कृतवतो यजमानस्य च । अविता = रक्षकः । तादृश एवेंद्रः ॥ ६ ॥

७. यस्याश्वासः—यस्य = सर्वप्रेरकत्वेन वर्तमानस्य भगवतः । प्रदिशि = अनुशासने । अश्वासः = अश्वाः वर्तंते । गावः ग्रामाः रथासः = रथाश्चेति । विश्वे = सर्वे वर्तंते । किंच यः सूर्यं उषसं = उषःकालाभिमानिनीं उषोनाम्नीं सूर्यपुत्रीं च । जजान = जनयामास । यश्च अपां नेता = अहिं हत्वा अपां प्रेरकः । स विष्णुरेव । इन्द्रः परमैश्वर्यवान् । नाहं । नापि पुरंदरः ।

द्वास- अमित्राः । समानं चिद्रथमातस्थिवांसा नाना हवेते स जनास इंद्रः ॥ ८ ॥ यस्मान्न प्रति-
॥३१॥ ऋते विजयंते जनासो यं युध्यमाना अवसे हवंते । यो विश्वस्य प्रतिमानं बभूव यो मंत्राः
अच्युतच्युत्स जनास इंद्रः ॥ ९ ॥ यः शश्वतो मह्येनो दधानानमन्यमानाञ्छर्वा जघान ।

८. यं क्रंदसी—क्रंदसी = आक्रंदनयुक्ते । संयती = परस्परं आभिमुख्येन संगच्छंत्यौ दैवी आसुरी चेति द्वे सेने । यं = देवं । विह्वयेते = स्वरक्षार्थं विविधं आह्वयतः । परे = उत्कृष्टाः मित्रभूताः भक्ताः । अवरे = निकृष्टाः । अमित्राः = शत्रुभूता अभक्ताश्चेति उभया = उभौ रथिनौ । समानं = उभयोरपि मध्यस्थं । रथं आतस्थिवांसा = आस्थितं । यं देवं । नाना = नानाप्रकारेण । हवेते = आह्वयेते । स एव इंद्रः ॥ ८ ॥

९. यस्मान्न ऋते—युद्धयमानाः = युद्धं कुर्वाणाः । वादं कुर्वाणा वा । जनासः = जनाः । यस्माद्दते = यस्येंद्रस्य तदंतर्यामिणो विष्णोर्वा प्रसाद-मंतरेण । न विजयंते = विजयं न प्राप्नुवंति । अत एव अवसे = स्वविजयार्थं । यं हवंते = आह्वयंति । यश्च विश्वस्य = ब्रह्मादितृणांतस्य जगतः । प्रतिमानं = सूर्यकादेः सूर्य इव तत्तज्जातिसदृशबिंबः । बभूव । अत्र मानं 'रूपं रूपं प्रतिरूपो बभूवे'ति श्रुतिः । यश्च अच्युतच्युत् = अच्युतत्वेन क्षयरहितत्वेन मन्यमानानां हिरण्यकशिपु-प्रभृतीनां च्यावयिता । स जनास इंद्रः ॥ ९ ॥ ॥३१॥

यः शर्धते नानुददाति शृध्यां यो दस्योर्हंता स जनास इंद्रः ॥ १० ॥ यः शंबरं पर्वतेषु क्षियंतं चत्वारिंश्यां शरद्यन्वविंदत् । ओजायमानं यो अहिं जघान दानुं शयानं स जनास इंद्रः ॥ ११ ॥ यः सप्तरश्मिर्वृषभस्तुविष्मानवासृजत्सर्तवे सप्त सिंधून् । यो

---

१०. यं शश्वतो—यश्च शश्वतः = स्वयं शाश्वतः सन् । महि = महत् । एनः = स्वस्य विष्णुना सहैकत्वज्ञानरूपं पापं । दधानान् = तादृशज्ञानवतः । तमोयोग्यान् । अमन्यमानान् = तत्वज्ञानरहितान् । शर्वा = सर्वा सर्वान् । जघान = अंधे तमसि प्रक्षेपेण हिंसितवान् । यश्च शर्धते = बलवते गुणवते वा परब्रह्मणे । शृद्ध्यां = स्पृहणीयान् चरुपुरोडाशादीन् स्वस्य विष्णुदासत्वरूपज्ञानं वा । नानुददाति = अयज्वेति यावत् । मिथ्याज्ञानीति वा । तस्य दस्योः = शत्रोः विष्णुसंबंधिब्रह्मत्वं स्वीयं मन्यमानस्य ब्रह्मस्तेनस्य । हंता = घातकः । स जनास इंद्रः ॥ १० ॥

११. यः शंबरं—यः पर्वतेषु क्षियंतं = इंद्रभिया निलीयस्थितं । शंबरं = तन्नामानं बहुमायं सज्जनबाधकमसुरं । चत्वारिंश्यां शरदि = चत्वारिंशे संवत्सरे । अन्वविंदत् = अन्विष्य लब्धवान् । लब्ध्वा जघान चेति यावत् । यश्च ओजायमानं=बलवंतं । शयानं = नदीमार्गं प्रतिरुद्ध्य स्थितं । दानुं = दनुपुत्रं । अहिं = तन्नामानमसुरं च जघान । स जनास इंद्रः ॥ ११ ॥

द्वास- रौहिणमस्फुरद्वज्रबाहुर्द्यामारोहंतं स जनास इंद्रः ॥ १२ ॥ द्यावा चिदस्मै पृथिवी प्रति-
॥३२। नमेते शुष्मांचिदस्य पर्वता भयंते। यः सोमपा निचितो वज्रबाहुर्यो वज्रहस्तः स मंत्राः
जनास इंद्रः ॥ १३ ॥ यः सुन्वंतमवति यः पचंतं यः शंसंतं यः शशमानमूती। यस्य

१२. यः सप्तरश्मिः—यः सप्तरश्मिः = संप्राप्तरश्मिः महाकांतिः। वृषभः = भक्तमनोभीष्टवर्षकः। तुविष्वान् = बलवान्। सप्तसिंधून् = स्वतः सर्पणशीलाः असुरेण प्रतिरुद्धाः बह्वीर्नदीः। सर्तवे अवासृजत् = समुद्रं प्रति गंतुं व्यसृजत्। यः इंद्रः। द्यामारोहंतं = स्वर्गं मोक्षं वा प्राप्तुमिच्छंतं। रौहिणं = असुरस्वभावं तामसं जनं। अस्फुरत् = यत्नाच्च्यावयति। नित्यनरकमेव प्रापयतीत्यर्थः। स जनास इंद्रः ॥ १२ ॥

१३. द्यावा चिदस्मै—अस्मै = इंद्राय। द्यावा = द्यौः द्योतमाना श्रीः। पृथिवी चित् = धरा देव्यपि। नमेते प्रह्वीभवतः। इंद्रपक्षे द्यावापृथिव्यभिमानिन्या-वन्ये अवांतरदेवते इति ज्ञेयं। अस्य शुष्मात् = बलात् बलं दृष्ट्वा। पर्वताश्चित् = गिरयोऽपि। भयंते = बिभ्यति। यः सोमपाः = भक्तैः क्रियमाणसोमोपलक्षितस-त्कर्मणां फलदाता। भक्तदत्तसोमरसपाता वा। निचितः = दृढांगः इत्यर्थः। यो ॥३२॥
वज्रबाहुः = वज्रसदृशबाहुयुक्तः। वज्रहस्तो वा। स जनास इंद्रः ॥ १३ ॥

ब्रह्म वर्धनं यस्य सोमो यस्येदं राधः स जनास इंद्रः ॥ १४ ॥ यः सुन्वते पचते दुध्र आ चिद्वाजं दर्दर्षि स किलासि सत्यः । वयं त इंद्र विश्वह प्रियासः सुवीरासो विदथमा वदेम * ॐ ॥ १५ ॥ इति मंत्रजपः । पुनः प्राणायामः षडंगन्यासः ऋष्यादिन्यासः

---

१४. यः सुन्वंतं—यः देवः । सुन्वंतं = सोमाभिषवं कुर्वंतं । अवति = रक्षति । यः पचंतं = चरुपुरोडाशादिहवींषि पचंतं । अवति । यश्च ऊती = ऊतये स्वरक्षायै । शंसंतं = शस्त्राणि शंसंतं होत्रादिकं । अवति । यश्च शशमानं = स्तोत्रं कुर्वाणं उद्गात्रादिकं अवति । यस्य ब्रह्म = परिबृढं स्तोत्रं । वर्धनं = वृद्धिकरं भवति । यस्य सोमः वृद्धिहेतुर्भवति । यस्य इदं राधः = चरुपुरोडाशादिकं वृद्धिकरं भवति । यस्य समस्तं सिद्धिजातं स्वाभाविकमस्ति । स जनास इंद्रः ॥ १४ ॥

१५. यः सुन्वते—स्वानुग्रहाय तत्रागतं नारायणं इंद्रं च स्तवीति ऋषिः । हे विश्वह = विश्वं प्रपंचं हापयति प्रेरयतीति विश्वहः । तस्य संबुद्धिः सर्वप्रेरक हे इंद्र । सुन्वते पचते = यजमानाय । वाजं = अन्नं । दुध्रः = दुग्धवानसि । दर्दर्षि = यज्ञघातकान् विदारयसि च । सः = तादृशस्त्वं । सत्यश्चिदसि = यथार्थ एवासि । यद्वा साधुगुणपूर्णः उत्तमानंदघनस्वरूपोऽसि । न पुनर्नास्तीति बुद्धियोग्योऽसि । नापि अल्पज्ञानसुखशक्तिमज्जीवाभिन्नोऽसि । वयं प्रियासः तवानुग्रहपात्रभूताः । सुवीराः = कल्याणगुणवत्पुत्रपौत्रादिसंततिमंतः । इदमुपलक्षणं । तवाराधनोपयोगिधनवंतोऽपि

उद्यद्भास्वत्समाभासः इत्यादि ध्यानं च। श्रीइंद्रनामकविष्णुप्रेरणया श्रीइंद्रनामकविष्णुप्रीत्यर्थं योजात इति सूक्तमंत्रजपः संपूर्णः। एकैकामृचमुच्चार्य इंद्रनामकविष्णुं तर्पयामि। इति तर्पणं। इति योजात इति सूक्तमंत्रजपः ॥ ३० ॥

## अथ परोमाँत्रयेति सूक्तमंत्रः ॥ ३१ ॥

श्रीगुरुभ्यो नमः। ११ स्थाने विष्णवे नमः। ॐ * विष्णवे नमः * ओं। इति प्राणायामः। पूर्णज्ञानात्मने हृदयाय नमः इत्यादि षडंगानि। अस्य श्री परोमात्रयेति चतुर्दशर्चस्य सूक्तस्य वसिष्ठ ऋषिः शिरसि। त्रिष्टुप् च्छंदः मुखे। श्रीविष्णुर्देवता हृदये। जपे विनियोगः। ध्यानं—उद्यद्भास्वत्समाभासश्चिदानंदैकदेहवान्। चक्रशंखगदापद्मधरो ध्येयोऽहमीश्वरः। लक्ष्मीधराभ्यामाश्लिष्टः स्वमूर्तिगणमध्यगः। ब्रह्म-

---

भवेम। विदथं = ज्ञानप्रियं त्वां। आवदेम = शिष्येभ्यो व्याख्यास्यामः तव महिमानं प्रथयाम इति यावत्॥ १५ ॥

७३. मंत्रोद्धारः—वासिष्ठं च परोमात्रयेति ज्ञानविमुक्तिदं। अर्थः—परोमात्रयेत्यादि [ऋग्वेदे ५। ६। २४] त्मकं चतुर्दशर्चं सूक्तं च प्रभोः मंत्रः। तच्च सूक्तं वासिष्ठं। वसिष्ठर्षिणा दृष्टं। ब्रह्मज्ञानप्रदं तद्द्वारा विमुक्तिप्रदं च।

वायुशिवाहीशविपैः शक्रादिकैरपि । सेव्यमानोऽधिकं भक्त्या नित्यनिःशेषशक्तिमान् ॥ श्रीविष्णुप्रेरणया विष्णुप्रीत्यर्थं परोमात्रयेति सूक्तमंत्रजपं करिष्ये । ॐ परो मात्रया तन्वा वृधान न ते महित्वमन्वश्नुवंति । उभे ते विद्म रजसी पृथिव्या विष्णो देव त्वं परमस्य वित्से ॥ १ ॥ न ते विष्णो जायमानो न जातो देव महिम्नः परमंतमाप । उदस्तभ्ना नाकमृष्वं बृहंतं दाधर्थ प्राचीं ककुभं पृथिव्याः ॥ २ ॥

---

१. परोमात्रया—हे विष्णो देव = त्वं । मात्रया = मात्रायाः मितेः । परः = परस्तात् वर्तसे । अपरिमितगुण इति यावत् । यद्वा-मात्रया = इंद्रियगणात् परः । तन्वा वृधान = न केवलं गुणतोऽपरिमितस्त्वं अपि तु तन्वा = शरीरेणापि । वृधान = अभिवृद्ध हे विष्णो । ते महित्वं = तव महिमानं । केऽपि नाश्नुवंति = साकल्येन न जानंति । त्रैविक्रमसमये यत्तव माहात्म्यं तत्सर्वैरपि जनैर्ज्ञातुं न शक्यत इत्यर्थः । ते = त्वदीयायाः । पृथिव्याः = प्रकृतेः । उभे रजसी = पुण्यपापे केवलं । विद्म = जानीमो वयं । परमस्य=सर्वोत्तमस्य । ते महिमानं । हे देव । त्वमेव वित्से जानासि ।॥१॥

२. न तेविष्णो —हे विष्णो देव ते महिम्नः = परं अंतं = सीमानं । जायमानः नाप्नोति । जातो नाप । जनिष्यमाणोऽपि न प्राप्स्यति । तन्महिमानं शृंगग्राहिकयाऽऽह-ऋष्वं = प्रकाशरूपं । बृहंतं । नाकं = द्युलोकं । उदस्तभ्नाः = अधो यथा

ास- इरावती धेनुमती हि भूतं सूयवसिनी मनुषे दशस्या । व्यस्तभ्ना रोदसी प्रति-
३४॥ विष्णवेते दाधर्थ पृथिवीमभितो मयूखैः ॥ ३ ॥ उरुं यज्ञाय चक्रथुरु लोकं मंत्राः
जनयंता सूर्यमुषासमग्निं । दासस्य चिद्वृषशिप्रस्य माया जघ्नथुर्नरा पृतनाज्येषु ॥ ४ ॥

---

न पतति तथा तमूर्ध्वमधारयः । किं च—पृथिव्याः = षष्ठी द्वितीयार्थे । पृथिवीं । दाधर्थ=यथा जले न निमज्जति तथा धृतवानसि । यद्वा—पृथिव्याः=पृथिव्यात्मकब्रह्मांडस्य संबंधिनीं प्राचीं ककुभं च = उपलक्षणया दश दिशोऽपि दाधर्थ ॥ २ ॥

३. इरावती—हे विष्णो । इरावती = अन्नवत्यौ । धेनुमती = गोमत्यौ । सूयवसिनी = शोभनतृणवत्यौ तृणोपलक्षितसर्वभोग्यपदार्थवत्यौ । मनुषे = स्तुवते मनुष्याय । दशस्या = इष्टं दातुमिच्छया युते । एते = इमे । रोदसी = द्यावापृथिव्यौ । व्यस्तभ्नाः = विविधमधारयः । द्यामधोमुखत्वेन पृथिवीं चोर्ध्वमुखत्वेनेत्यर्थः । किंच – पृथिवीमभितः = सर्वतः । मयूखैः = सूर्यमयूखगस्वमयूखैः । (पर्वतैर्वा) दाधर्थ । धृतवानसि ॥ ३ ॥

४. उरुं यज्ञाय—सूर्यं = सर्वस्य प्रेरकमादित्यं । उषसं = तमोनिवारकं उषः ॥३४॥
कालाभिमानिनं देवं । अग्निं च । जनयंता = जनयंतौ पुनः प्रादुर्भावयंतौ । नरा=अक्षीणौ । इंद्राविष्णू युवां । यज्ञाय = युष्मत्पूजकाय यजमानाय । उरुलोकं वैकुंठाख्यं । चक्रथुः = निर्मितवंतौ । उ खलु । किंच वृषशिप्रस्य = एतन्नाम्नः । दासस्य चित्=

इंद्रा॑विष्णू दृंहि॒ताः शंब॑रस्य॒ नव॒ पुरो॑ नव॒तिं च॑ श्नथिष्टम् । श॒तं व॒र्चिन॑: स॒हस्रं॑ च सा॒कं ह॑थो अ॑प्र॒त्यसु॑रस्य वी॒रान् ॥ ५ ॥ इ॒यं म॑नी॒षा बृ॒ह॒ती बृ॒हन्तो॑रुक्र॒मा त॒वसा॑ व॒र्धय॑न्ती ॥ र॒रे वां॒ स्तोमं॑ वि॒दथे॑षु विष्णो॒ पिन्व॑त॒मिषो॑ वृ॒जने॑ष्विन्द्र ॥ ६ ॥ वष॑ट्

---

उपक्षयितुरसुरस्य । मायाः = तत्कृतोपद्रवान् । पृतनाज्येषु = युद्धेषु । जघ्नथुः = हिंसितवंतौ स्थः नाशितवंताविति भावः ॥ ४ ॥

५. इंद्राविष्णू—हे इंद्राविष्णू । दृंहिताः = दृढीकृताः । नवनवतिं = नवाधिकनवतिसंख्याकाः । शंबरस्य युष्मद्वैरिणः असुरस्य । पुरः = शरीराणि (नगराणि वा) श्नथिष्टं = अहिंसिष्टं । किंच—वर्चिनः = तन्नाम्नोऽसुरस्य । शतं सहस्रं = तावत्संख्याकान् । वीरान् = भटान् । अप्रति = न विद्यते प्रति प्रतिद्वंद्वो यस्मिन्कर्मणि तद्यथा भवति तथा । साकं = युगपदेव संघश एव । हथः = संहृतवंतौ ॥ ५ ॥

६. इयं मनीषा—हे विष्णो हे इंद्र युवां बृहंता = बृहन्तौ । उरुक्रमा = विपुलपादविन्यासौ । तवसा = बलवंतौ एवं भूतौ भवंतौ । वर्धयंतौ = एधयमाना । बृहती = महती । इयं मनीषा = मदीया धिषणा । विदथेषु = यज्ञेषु । वां = युवामुद्दिश्य । स्तोमं = स्तुतिं । ररे = ददे (अकार्षीत्) । वृजनेषु = अस्माकं बलमुद्दिश्य । इषः = अन्नं । पिन्वतं = अस्मभ्यं वर्धयतं । यद्वा—वृजनेषु पापेषु युष्मत्स्तवनेन निवृत्तेषु सत्सु । इषः = मोक्षान्नं पिन्वतम् ॥ ६ ॥

द्वास- ||३५||

ते विष्णवास आकृणोमि तन्मे जुषस्व शिपिविष्ट हव्यं। वर्धंतु त्वा सुष्टुतयो गिरो मे यूयं पात स्वस्तिभिः सदा नः ॥ ७ ॥ १ ॥ नू मर्तो दयते सनिष्यन्यो विष्णव उरुगायाय दाशत् । प्र यः सत्राचा मनसा यजात एतावंतं नर्यमाविवासात् ॥ ८ ॥ त्वं विष्णो सुमतिं विश्वजन्यामप्रयुतामेवयावो मतिं दाः ।

प्रति- मंत्राः

७. वषट् ते विष्णो—शिपिविष्ट = शिपिषु यज्ञपशुषु प्रविष्ट। 'यज्ञो वै विष्णुः पशवः शिपिः। यज्ञ एव शिपिषु प्रतितिष्ठति' इति हि श्रुतिः। यद्वा—सूर्यरश्मिषु प्रविष्ट। तादृश हे विष्णो। ते=त्वदुद्देशेन। हव्यं वषट् करोमि = वषट्कारेण हविर्हापयामि। मे = मदीयं। तत् = हव्यं। आसः = आस्येन मुखेन। जुषस्व = सेवस्व स्वीकुरु। मे सुष्टुतयः = स्तुतिरूपाः गिरः। त्वा = त्वां। वर्धंतु = वर्धयंतु। महागुणैर्युक्तं त्वां व्यंजयंतु। यूयं नः = अस्मान्। स्वस्तिभिः = संततसौख्यैः। सदा पात = रक्षत ॥ ७ ॥

८. नू मर्तः— यः मर्तः = मनुष्यः। उरुगायाय = ब्रह्मादिभिः कीर्तनीयाय विष्णवे। दाशत् = हवींषि दद्यात्। यश्च सत्राचा = सत्रा सह अंचति पूजयतीति सत्राङ्। तेन भक्तियुक्तेनेत्यर्थः। मनसा = साक्षिणा। प्रयजाते = प्रयजते प्रकर्षेण पूजयेत्। नर्यं = नरेभ्यो हितं विष्णुं। आविवासात् = नमस्कारादिभिः परिचरेत्। यद्वा ||३५||

पर्चो यथा नः सुवितस्य भूरेरश्वावतः पुरुश्चंद्रस्य रायः ॥ ९ ॥ त्रिर्देवः पृथिवीमेष एतां विचक्रमे शतर्चसं महित्वा । प्रविष्णुरस्तु तवसस्तवीयान्त्वेषं ह्यस्य स्थविरस्य नाम ॥ १० ॥ विचक्रमे पृथिवीमेष एतां क्षेत्राय विष्णु-

---

आविवासात् = अवगमयितुमिच्छेत् । स मनुष्यः सनिष्यन् = धनमिच्छन्नेव हविरादिकं । नु = क्षिप्रं । एतावंतं = लोकं । दयते = रक्षति ॥ ८ ॥

९. त्वं विष्णो सुमतिं—हे विष्णो । एवयावः = एवाः नित्यगंतारो वायवः । तान् यावयतीति तथा । भीषास्माद्वातः पवत इति श्रुतेः । यद्वा—एवाः कामाः । तान्यावयति प्रापयतीति एवयावः । त्वं विश्वजन्यां = सर्वजनहितां । अप्रयुतां = दोषैर्वियुक्तां । सुमतिं = जीवेश्वरभेदादिपंचभेदज्ञानयुक्तां बुद्धिं । दाः = अस्मभ्यं देहि । सुवितस्य = सुभद्रस्य (सुष्ठु प्राप्तव्यस्य) भूरेः = बहुलस्य । अश्वावतः = अश्ववतः । पुरुश्चंद्रस्य = बहूनामाह्लादकस्य । रायः = धनस्य मोक्षस्य च । पर्चः = संपर्कः । यथा नो भवति तथा सुमतिं देहीत्यन्वयः ॥ ९ ॥

१०. त्रिर्देवः—एषः = इच्छारूपः । देवः = विष्णुः । एतां पृथिवीं = पृथिव्युपलक्षितांल्लोकान् । त्रि = त्रिवारं । महित्वा = स्वमहिम्ना । विचक्रमे = त्रिभिः पदैर्विक्रांतवान् । स विष्णुः । तवसः = देशकालपरिच्छिन्नात् सूर्यादितेजसः सकाशात् । तवी-

द्वास· मनुषे दशस्यन् । ध्रुवासो अस्य कीरयो जनास उरुक्षितिं सुजनिमा चकार ॥ ११ ॥ प्रति-
॥३६॥ प्रतत्ते अद्य शिपिविष्ट नामार्यः शंसामि वयुनानि विद्वान् । तं त्वा गृणामि तवस- मंत्राः
मतव्यान्क्षयंतमस्य रजसः पराके ॥ १२ ॥ किमित्ते विष्णो परिचक्ष्यं भूत्प्र

यान् = तेजस्वितरः । प्रास्तु = प्रकर्षेण भवतु । अस्य स्थविरस्य = अनादिकालीनस्य त्वेषं = कांतिमत् । इति नाम । शतर्चसं = शतर्चेषु सर्ववेदेषु सारभूतं । तस्मात्कारणात् स विष्णुः प्रास्तु = प्रभवतु ॥ १० ॥

११. विचक्रमे—एषः विष्णुः वामनात्मा सन् । मनुषे = स्तोत्रे इंद्राय । पृथिवीं = महाबलिनापहृतां भूमिं तदुपलक्षितांस्त्रींल्लोकांश्च । क्षेत्राय = निवासार्थं । दशस्यन् = दास्यन् सन् । विचक्रमे = त्रिविक्रमरूपेण विक्रांतवान् । सुजनिमा = शोभनजन्मवान् वामनः । उरु = यथा तथा । क्षितिं = निवासं । स्तोतृभ्यः चकार = करोति । अस्य कीरयः = स्तोतारः । जनासः = जनाः । ध्रुवासः = निश्चलाः ऐहिकामुष्मिकयोर्लाभेन स्थिरा भवंतीत्यर्थः ॥ ११ ॥

१२. प्रतत्ते अद्य—हे शिपिविष्ट = शिपिभिः रश्मिभिः विष्ट सकलं जगत् ॥३६॥
रक्षणार्थं प्रविष्ट । सर्वेश विष्णो । ते = तव । तत् = प्रसिद्धं । नाम = नारायणादिकं । विद्वान् = प्रवृत्तिनिमित्तपौष्कल्यवत्त्वेन जानन् । अर्यः = स्वामी । जडमपेक्ष्य प्रभुः अहं । अद्य = इदानीं । शंसामि = प्रशंसामि । अतव्यान् अवृद्धतरः अत्यल्पीयानपीति

यद्वंवक्षे शिपिविष्टो अस्मि। मा वर्पो अस्मदपगूह एतद्यदन्यरूपः सामुथ बभूथ ॥ १३ ॥

वषट् ते विष्णवास आकृणोमि तन्मे जुषस्व शिपिविष्ट हव्यं। वर्धंतु त्वा सुष्टुतयो गिरोमे यूयं पात स्वस्तिभिः सदा नः ॥ १४ ॥ इति मंत्रजपः।

---

भावः। गृणामि = त्वां स्तौमि। कीदृशं त्वां। रजसः = सर्वलोकानां इदमप्युपलक्षणं गुणत्रयस्यापि। पराके = दूरे निवसंतं। तवसं = बलरूपं त्वां गृणामीति संबंधः ॥१२॥

१३. किमित्ते विष्णो—हे विष्णो। त्वं अहं शिपिविष्टः = शं सुखं। तृतीयोऽतिशये। शिं अतिशयितसुखं पिबंतीति शिपयो मुक्ताः। तेषु विष्टः प्रविष्टः मुक्तनियामक इति यावत्। इति यत् = यस्मात्। प्रववक्षे = प्रब्रूषे। तत् = नाम। किमित् = किमिति। परिचक्ष्यं भूत् = कथमिव प्रख्यापनीयं भवति। किंतु अस्मत् = अस्मभ्यं। एतद्वर्पः = वरणीयत्वात्पालकत्वाच्च वर्पशब्दावाच्यं बिंबरूपं। मापगूहः = संवृतं मा कार्षीः। समिथे = समीहिते त्वदीयसृष्टिस्थित्यादिरूपे कार्ये। अन्यरूपः = तत्तत्कालोचितरामकृष्णाद्यनेकावतारवान्सन्। बभूथ = पूर्वं प्रत्यक्षो बभूविथ तद्वयं दृष्टवंत एव। तथापि अस्मत्समीहिते मोक्षे विषये। तेषां रूपाणाममोचकत्वात्। बिंबरूपस्यैव मोचकत्वाच्च बिंबरूपमेवास्माकं प्रदर्श्य शिपिविष्ट इति त्वदीयं नाम स्थिरीकुर्विति तात्पर्यार्थः ॥ १३ ॥

१४. वषट्ते विष्णो—अर्थः सप्तमे मंत्रे गतः ॥ १४ ॥

द्वास- पुनः प्राणायामः। षडंगन्यासः ऋष्यादिन्यासः उद्यद्भास्वत्समाभास इत्यादि ध्यानं प्रति-
॥३७॥ च। श्रीविष्णुप्रेरणया श्रीविष्णुप्रीत्यर्थं परोमात्रयेति सूक्तमंत्रजपः संपूर्णः। प्रत्यृचं मंत्राः
तर्पणं। इति परोमात्रयेति सूक्तमंत्रः ॥ ३१ ॥

## अथ विश्वँकर्मसूक्तमंत्रः ॥ ३२ ॥

श्रीगुरुभ्यो नमः। एकादशस्थाने श्रीविश्वकर्मनामकविष्णवे नमः। ॐ ❀ ॐ नमो नारायणाय ❀ ॐ। इति प्राणायामः॥ ॐ पूर्णज्ञानात्मने हृदयाय नमः। इत्यादि षडंगन्यासः। अस्य श्री चतुर्दशर्चस्य विश्वकर्मसूक्तस्य भौवनो विश्वकर्मा ऋषिः शिरसि। त्रिष्टुप् च्छंदः मुखे। विश्वकर्मनामकविष्णुर्देवता हृदये। जपे विनियोगः। ध्यानं—उद्यद्भास्वत्समाभासश्चिदानंदैकदेहवान्। चक्रशंखगदापद्मधरो ध्येयोऽहमीश्वरः लक्ष्मीधराभ्यामाश्लिष्टः स्वमूर्तिगणमध्यगः। ब्रह्मवायुशिवाहीशविपैः शक्रादिकैरपि।

---

७४. मंत्रोद्धारः—भौवनीयं सर्वकाममोक्षदं य इमेत्यपि। अर्थः—य इमेति = ॥३७॥
य इमा विश्वा भुवनानि इत्यादि [ऋग्वेदे ८।३।१६-१७] तमकं चतुर्दशार्चं सूक्तं। भौवनीयं = भौवनो विश्वकर्मा। तेन दृष्टं। अतः स एवास्य सूक्तस्य ऋषिः। तत् सर्वकामदं मोक्षदं च।

सेव्यमानोऽधिकं भक्त्या नित्यनिश्शेषशक्तिमान् ॥ श्रीविश्वकर्मनामकविष्णुप्रेरणया श्रीविश्वकर्मनामकविष्णुप्रीत्यर्थं चतुर्दशर्चविश्वकर्मसूक्तमंत्रजपं करिष्ये । ॐ * यइमा विश्वा भुवनानि जुह्वदृषिर्होता न्यसीदत्पिता नः । स आशिषा द्रविणमिच्छमानः प्रथमच्छदवराँ आ विवेश ॥ १ ॥ किं स्विदासीदधिष्ठानमारंभणं कतमत्स्वित्कथासीत् । यतो

---

७२. एवमेवाखिला वेदा ज्ञातव्या विष्णुतत्पराः । अर्थः—एवमेव = विश्वकर्मसूक्तवदेव । रुद्रसूक्तादयोऽपि विष्णुतत्पराः = विष्णुसूक्ता एव ।

१. य इमा विश्वा—यः विश्वकर्मा = सर्वजगत्स्रष्टा विष्णुः । इमा = इमानि सत्यत्वेन प्रमितानि । विश्वा भुवनानि = पृथिव्यादीन्सप्तलोकान् । जुह्वत् = प्रलयकाले स्वोदरस्थानि चकार । ऋषिः = त्रिकालज्ञानी ज्ञानस्वरूपी वा । होता = संहाररूपहोमकर्ता । नः = अस्माकं । पिता = जनकः । पुनः = सृष्ट्यारंभकाले स्वोदरस्थजगतः स्रष्टा सन् । न्यसीदत् = एक एव आसीत् । सः = तादृशो भगवान् । आशिषा = वहुः स्यां प्रजायेयेतीच्छया । द्रविणं = धनोपलक्षितं स्वभोगं । इच्छमानः = इच्छन् सन् । प्रथमच्छत् = स्वीयं व्यापकं रूपं प्रथमं आवृण्वन्सन् । अवरान् = स्वसृष्टान् ब्रह्मादिजीवान् । आविवेश = अंतर्यामिरूपेण आविष्टवान् ॥ १ ॥

भूमिं जनयन्विश्वकर्मा विद्यामौर्णोन्महिना विश्वचक्षाः ॥ २ ॥ विश्वतश्चक्षुरुत विश्वतो मुखो विश्वतो बाहुरुत विश्वतस्पात् ॥ संबाहुभ्यां धमति संपतत्रैर्द्यावाभूमी जनयन्देव एकः । ३ ।



---

२. किं स्विदासीत्—पूर्वमंत्रे भगवान् जगत्सृष्ट्वा तत्र प्राविशदित्युक्तं। तस्य तदानीं अधिष्ठानाद्यभावात् सृष्टिरेवानुपपन्नेत्याक्षिपति—अधिष्ठानं किं स्विदासीत् = जगत्स्रष्टुस्तस्य उपविश्य स्रष्टुं किं स्थानमासीत्? न किंचिदासीदित्यर्थः। आरंभणं = करणं वा। कतमत्स्विदासीत् = कतमद्भवेत्? तदपि नेत्यर्थः। अस्तु वा तत्। कथाऽऽसीत् = कथं रूपमासीत् स्वाधीनमनधीनं वा? नोभयमप्युपपन्नं। नान्यत्किंचन मिषत् इति श्रुतेः। विश्वकर्मा = हरिः। यतः = येनाधिष्ठानादिना। भूमिं द्यां च जनयन्। वि = विशेषेण। बभूवेत्यध्याहारः। येन च महिना = स्वमहिमरूपाधिष्ठानादिना। विश्वचक्षाः = विश्वतश्चक्षुः सर्वेष्ववयवेषु सर्वेंद्रियशक्तिमान्। स हरिः। भूमिं द्यां च। और्णोत् = प्रलयकाले आवृणोत्। तत्किं स्विदासीदिति संबंधः ॥२॥

३. विश्वतश्चक्षुः—अधिष्ठानाद्यभावेऽपि हरिः स्रष्टुं शक्नोत्येवेति परिहारमाह—विश्वतश्चक्षुः = सर्वतो व्याप्तचक्षुः सर्वावयवेष्वपि चक्षुःकार्यदर्शनादिशक्तिमानिति वा। उत = अपि च। विश्वतोमुखः। तथा विश्वतोबाहुः। उत विश्वतस्पात् = हस्ताद्यवयवैरपि गमनादिशक्तिमान्। देवः = एवं विधेतरविलक्षणशक्तिमान्विष्णुः। एकः = असहाय एव। बाहुभ्यां = स्वीयप्रधानबाहुद्वयेन। पतत्रैः = इतरबाहुभिश्च

किं स्विद्वनं क उ स वृक्ष आस यतो द्यावापृथिवी निष्टतक्षुः। मनीषिणो मनसा पृच्छतेदु तद्यदध्यतिष्ठद् भुवनानि धारयन् ॥ ४ ॥ या ते धामानि परमाणि यावमा या मध्यमा विश्वकर्मन्नुतेमा। शिक्षा सखिभ्यो हविषि स्वधावः स्वयं यजस्व तन्वं

---

स्वरूपसामर्थ्यविशेषेणेति यावत्। द्यावाभूमी = तदभिमानिदेवान्। संजनयन् = उत्पादयन्। संधमति = स्वस्वकार्येषु प्रेरयति ॥ ३ ॥

४. किं स्विद्वनं—पूर्वमंत्रे हरिरेव द्यावापृथिव्यादिकारणमित्युक्तं तदेव पुनराक्षिप्य द्रढयति। लोके गृहादिनिर्मातॄणां वृक्षादिकमपेक्षितं। तद्वृक्षादिकं च कस्मिंश्चिद्वने स्यात्। तान्वृक्षांस्तक्ष्णा संतक्ष्यैव गृहादिकं निर्मेयं। एवं स्थिते अतिमहत्यो द्यावापृथिव्योर्निर्मातुर्भगवतः किं साधनमभूदित्याक्षिपति—किंस्विद्वनं = कीदृशं कुत्रस्थं वा तद्वनं। क उ स वृक्ष आसीत् = द्यावापृथिव्यादिमहापदार्थनिर्माणयोग्यो महान्वृक्षः कोऽभूत्। यतः = यस्माद्वनाद्यादृशं वृक्षं संगृह्य द्यावापृथिवी = द्यावापृथिव्यौ। भगवान्। निष्टतक्षुः = निस्ततक्ष। बहुवचनमेकवचनार्थे। हे मनीषिणः = आक्षेप्तारो यूयं। मनसा = जिज्ञासायुक्तेन चेतसा पृच्छतेदु = [पृच्छत इत् उ इति पदच्छेदः] पृच्छतैव। किंच भुवनानि धारयन् यत् = स्थानं। अध्यतिष्ठत्तदपि पृच्छत। सर्वस्योत्तरं तु भगवानेव स्वस्य विचित्रशक्त्या सर्वमपि सृष्टवानिति ॥ ४ ॥

वृधानः ॥ ५ ॥ विश्वकर्मन्हविषा वावृधानः स्वयं यजस्व पृथिवीमुत द्याम् । मुह्यन्त्वन्ये अभितो जनास इहास्माकं मघवा सूरिरस्तु ॥ ६ ॥ वाचस्पतिं विश्वकर्माणमूतये मनोजुवं



५. याते धामानि—ऋषिः जगत्कारणं विश्वकर्मनामकं भगवंतं स्तौति। हे स्वधावः = स्वरूपभूतसुखाख्यान्नवन्। विश्वकर्मन् विष्णो। त्वं। स्वयं हविषि = तृतीयार्थे सप्तमी; भक्तदत्तहविषा। तन्वं = स्वदेहं। वृधानः = भक्तानुग्रहार्थं तेन हविषा प्रवृद्ध इव प्रीतः सन्। स्वयं = त्वमेव। यजस्व = याजय अंतर्णीतणिच्। मया त्वत्पूजां कारय। त्वं तां पूजां स्वीकृत्य। सखिभ्यः = भक्तेभ्यः अस्मभ्यं। ते = त्वदधीनानि। या = यानि। परमाणि = उत्कृष्टः। धामानि = वैकुंठादिलोकाः। या मध्यमा = ये सत्यादिलोकाः। याऽवमा = ये अधमाः स्वर्गादिलोकाः। उतेमा = तानिमाँल्लोकान् शिक्ष = अस्मद्योग्यतानुसारेण देहि।

६. विश्वकर्मन्—हे विश्वकर्मन् = विष्णो। हविषा = त्वत्प्रेरितेन मया दत्तेन हविरादिना। स्वयं वावृधानः = वृद्धिं प्राप्त इवास्मासु कृपया स्वयं प्रीतः सन्। अस्माकं = भक्तेभ्यः। पृथिवीमुत द्यां = अस्मद्योग्यं पूर्वमंत्रोक्तलोकत्रयेष्वन्यतमं लोकं। यजस्व = देहीत्यर्थः। अन्ये=त्वत्पूजामकुर्वन्तो मिथ्याज्ञानिनः। जनासः = जनाः। अभितो मुह्यंतु = नितरां मोहं प्राप्य अधोगतिं प्राप्नुवंतु। इह = भक्तवर्गे। एवं तव पूजां कुर्वतां जनानां। मघवा = महामहिमोपेतो भवान्। सूरिः = पूर्वोक्तोत्तमलोकादिकस्य प्रेरकः। अस्तु = भवतु ॥ ६ ॥

वाजे॑ अ॒द्या हु॑वेम। स नो॒ विश्वा॑नि॒ हव॑नानि जोषद्वि॒श्वश॑म्भू॒रव॑से सा॒धुक॑र्मा ॥ ७ ॥ १ ॥
चक्षु॑षः पि॒ता मन॑सा॒ हि धीरो॑ घृ॒तमे॑ने अजन॒न्नम्न॑माने। य॒देदन्ता॒ अद॑दृंह॒न्त पूर्व॒ आदि-
द्द्यावा॑पृथि॒वी अ॑प्रथेताम् ॥ ८ ॥ वि॒श्वक॑र्मा॒ विम॑ना॒ आद्विहा॑या धा॒ता विधा॒ता प॑र॒मोत

---

७. वाचस्पतिं—वाचस्पतिं = वेदस्वामिनं सर्ववेदवेद्यं। विश्वकर्माणं = सर्वजगत्स्रष्टारं। मनोजुवं = मनोवेगसमानवेगवंतं। देवं = नारायणं। अद्य = अस्मिन्दिने। वाजे = यज्ञे। ऊतये = पूजार्थं। हुवेम = आह्वयामः। सः = देवः। अस्माकं = अस्माभिः पूजार्थं संपादितानि। विश्वा हवनानि = सर्वाणि चरुपुरोडाशादिद्रव्याणि। जोषत् = सेवतां आस्वादयतां। किमर्थं अवसे = अस्मद्रक्षणाय। स कीदृशः विश्वशंभूः = सर्वभक्तानां सुखोत्पादकः साधुकर्मा च = अवितथजगत्सृष्ट्यादिकर्ता ॥ ७ ॥

८. चक्षुषः पिता—चक्षुषः=चक्षुरुपलक्षितसर्वेन्द्रियाणां तदभिमानिनां देवानां च। पिता उत्पादयिता प्रेरयिता च। धीरः = महाबुद्धिशाली। स विश्वकर्मा। प्रथमं मनसा घृतं = उदकं। अजनत् = अजनयत् 'अप एव ससर्जादौ' इति स्मृतेः। (तस्मिञ्जले ब्रह्मांडं तस्मिन्द्यावापृथिव्यौ च अजनयत्) अथ नम्नमाने = इतस्ततः संचलंत्यौ। एने = एते। द्यावापृथिवी=द्यावापृथिव्यौ। यदेदंताः=ब्रह्मांडपर्यंतं विद्यमानाः। पूर्वे = पूर्वकल्पीयसदृशाः। प्रदेशाश्च। अददृहंत = यथा न चलंति तथा दृढीभूताः।

द्वास- ||४०||

प्रति-मंत्राः

सं॒दृक् । तेषा॑मि॒ष्टानि॒ समि॒षा म॑दंति॒ यत्रा॑ सप्तऋ॒षीन्प॒र एक॑मा॒हुः ॥ ९ ॥ यो नः॑ पि॒ता ज॑नि॒ता यो वि॑धा॒ता धामा॑नि॒ वेद॒ भुव॑नानि॒ विश्वा॑ । यो दे॒वानां॑ नाम॒धा एक॑ ए॒व तं सं॑प्र॒श्नं भुव॑नायंत्य॒न्या ॥ १० ॥ त आयं॑जंत॒ द्रवि॑णं॒ सम॑स्मा॒ ऋष॑यः॒ पूर्वे॑ जरि॒तारो॒ न

---

आ॑दित् = अनेन दृढीकरणानंतरमेव । अप्रयेतां = द्यावापृथिव्यादयः प्रतिष्ठिता अभूवन् ॥ ८ ॥

९. विश्वकर्मा विमना—विश्वकर्मा = सर्वजगत्स्रष्टा हरिः । विमनाः = विशिष्टज्ञानवान् । आत् विहायाः = सर्वतो महान् । धाता = जगतो धारणकर्ता । विधाता = विशेषेण पोषकः । उत = किं च । परमा संदृक् । परमज्ञानरूपः । यत्र = यं नारायणं । सप्त ऋषीन् । पंचम्यर्थे द्वितीया । सर्पणस्वभावेभ्यः ज्ञानग्राहिभ्यः इंद्रियेभ्यः तदभिमानिदेवेभ्यः । एकं परं = मुख्यतोऽनुपचारेणोत्तमं । आहुः = विद्वांस इति शेषः । तेषां = इंद्रियाभिमानिदेवानां । इष्टानि = दर्शनादिशक्तयः । समिषा = अन्नेन परमात्मप्रसादरूपेण । मदंति = मोदंते वर्धते । तं = हरिं । एकं = अद्वितीयं । परः = परं सर्वोत्तमं । आहुः ब्रह्मादयः ॥ ९ ॥

||४०||

१०. यो नः पिता—यः = विश्वकर्मा । नः = अस्मदुपलक्षितसर्वजगतां । पिता = पालकः । न केवलं दत्तपुत्रस्येवायं पिता । किंतु जनिता = जनयिता च । यः विधाता = विशेषेण धारणपोषणकर्ता च । विश्वा = सर्वाणि । भुवनानि ।

भूना। असूर्ते सूर्ते रजसि निषत्ते ये भूतानि समकृण्वन्निमानि ॥ ११ ॥ परो दिवा पर एना पृथिव्या परो देवेभिरसुरैर्यदस्ति। कं स्विद्गर्भं प्रथमं दध्र आपो यत्र देवाः

---

धामानि च = तद्गतस्थानानि जीवस्वरूपाणि वा। वेद = जानाति। किं बहुना— यः देवानां = ब्रह्मरुद्रेंद्रप्रभृतीनां। नामधाः = नामधारकः। एक एव = नान्यः। तत्तन्नामप्रवृत्तिनिमित्तपौष्कल्यस्य परमात्मन्येव विद्यमानत्वात्। एवं स्थिते अन्या- भुवना = ज्ञानिभिन्नानि अज्ञानिभूतजातानि। तं = देवं प्रति। प्रश्नं संयंति = जगत ईश्वरोऽस्ति वा न वा। अस्तिचेदुपलभ्येत नोपलभ्यते। अतो नास्त्येव। अस्तु वेश्वरः। स अस्मदाद्यन्यतम एव कुतो न स्यात् इत्यादि प्रश्नं कुर्वंति ॥ १० ॥

११. त आयजंत—ते पूर्वे ऋषयः = ज्ञानिनः। अस्मै = विश्वकर्मनामक- हरये। द्रविणं चरुपुरोडाशादिलक्षणं धनं। सं = सम्यक्। आ अयजंत = भगवतो महत्त्वज्ञानपूर्वकमयजंत। जरितारो न = स्तोतारो यथा। भूना = भूम्ना महता स्तोत्रेण यजंति तद्वत्। ये = महर्षयः। असूर्ते = सरणवर्जिते। सूर्ते = सरणयुक्ते स्थावरजंगमात्मके। निषत्ते = निश्चलतयाऽवस्थिते। रजसि = लोके विद्यमानानि इमानि भूतानि = प्राणिनः। समकृण्वन् = अन्नादिनाऽपोषयन्। ते ऋषय इति योजना ॥ ११ ॥

६

द्वास- ॥४१॥

समपश्यंत विश्वे ॥ १२ ॥ तमिद्गर्भं प्रथमं दध्र आपो यत्र देवाः समगच्छंत विश्वे ।
अजस्य नाभावध्येकमर्पितं यस्मिन्विश्वानि भुवनानि तस्थुः ॥ १३ ॥ न तं विदाथ य

प्रति- मंत्राः

१२. परो दिवा—यत् = यो विश्वकर्मा । दिवा = द्युलोकात् । परः = परस्ताद्वर्तमानः । उत्तम इति यावत् । तथा एना = एतस्याः । पृथिव्या = भूम्युपलक्षिताधोलोकेभ्यश्च । परः । तथा देवेभिः = ब्रह्मादिभ्यश्च । परः । असुरैश्च = असुरेभ्यश्च । यत् = परः । यत्र = यस्य भगवतः । गर्भं विश्वे = सर्वे । देवाः = समपश्यंत = संगता बभूवुः उत्पन्नाः । तादृशं भगवन्तमपि । आपः = प्रलयकालीनाः । गर्भं = गर्भत्वेन । प्रथमं = सृष्टेः पूर्वं । कंस्वित् दध्रे = कथमिव धृतवत्यः । इदं तथ्यं किमिति भावः ? इति कश्चित्तत्वज्ञानी जानन्नेव पप्रच्छ ॥ १२ ॥

१३. तमिद्गर्भं—कश्चिदन्यस्तत्त्ववित् पूर्वमंत्रे कृतस्य प्रश्नस्योत्तरमदात् । तमित् = तमेव विश्वकर्माणं । आपः = प्रलयकालीनाः । प्रथमं = सृष्टेः पूर्वं । गर्भं = गर्भमिव इतरालक्षितं धृतवत्यः । यत्र = अपां गर्भभूतस्य गर्भे जठरे । विश्वे देवाः । समगच्छंत = संगता अभूवन् उदभूवन्नित्यर्थः । तादृशमहामहिमोपेतमपि आपो धृतवत्य एव । तदेव विवृणोति—अजस्य = कर्मायत्तदेहयोगादिरहितत्वेपि प्रलयजले पद्मनाभ रूपेण दीपाद्दीपांतरोत्पत्तिरिवाविर्भूतस्य विश्वकर्मणः । नाभौ अधि = नाभिमंडलमध्ये । एकं = पद्माख्यं वस्तु । अर्पितं = भगवदिच्छयोदभूत् । यस्मिन् = पद्मे । विश्वा ॥४१॥

इमा जजानान्यद्युष्माकमंतरं बभूव । नीहारेण प्रावृता जल्प्या चासुतृप उक्थशासश्चरंति ॥ ॐ ॥ १४ ॥ २ ॥ इति मंत्रजपः । पुनः प्राणायामः षडंगन्यासः ऋष्यादिन्यासः उद्यद्भास्वदिति ध्यानं च । श्री विश्वकर्मनामकविष्णुप्रेरणया श्री विश्वकर्मनामकविष्णुप्रीत्यर्थं चतुर्दशर्चेविश्वकर्मसूक्तमंत्रजपः संपूर्णः । प्रत्यृचं तर्पणं ॥ इति श्री विश्वकर्मसूक्त-मंत्रः ३२ ॥

---

भुवनानि तस्थुः = अतिष्ठन् उदभूवन्निति यावत् । अघटितघटनापटीयसो भगवतः किमिव दुर्घटमित्युत्तरम् ॥ १३ ॥

१४. न तं विदाथ—हे नराः । यः = विश्वकर्मा । इमा = इमानि भूतानि । जजान = उत्पादितवान् । यत् = यः । युष्माकं सर्वप्राणिनां । अंतरं बभूव = अंतर्यामि-रूपेण वर्तते । तं न विदाथ = समीपस्थमपि भगवंतं यूयं न जानीथ । कुतो वयं न जानीम इति चेत् श्रूयतां । यूयं नीहारेण = नीहारसदृशेन परमाच्छादिकारूपेणाज्ञानेन । प्रावृताः = आच्छन्नाः । न केवलमेतावत् । जल्प्या च = ईश्वरोऽहं आढ्योऽहं बलवानहं कोऽन्योस्ति सदृशो मया इत्याद्यनृतजल्पनेन च आवृताः । किंच यूयं असुतृपः = केनाप्युपायेन प्राणांस्तर्पयंत उदरंभरयः । उक्थशासश्च = नश्वरस्वर्गभोग-प्राप्त्यर्थमेव यज्ञे प्रउगनिष्केवल्यादिकं शंसंतः । चरंति = संचरथ । अतो विश्वकर्माणं न जानीथ । तदर्थं यतध्वं ॥ १४ ॥

द्वास- तंत्रसारभावार्थचंद्रिकास्थाः केचन वैष्णवमंत्राः सिंहावलोकनन्यायेन अत्रोच्यन्ते— प्रति-

## [अथ षडक्षरसुदर्शननृसिंहमंत्रः ॥ ३२-अ ॥

॥४२॥ मंत्राः

श्रीगुरुभ्यो नमः। एकादशस्थाने श्रीसुदर्शननृसिंहाय नमः। ॐ * सहस्रार हुं फट् * ॐ। इति मंत्रेण प्राणायामः। ॐ सं अ चक्राय हृदयाय नमः। ॐ हं वि चक्राय शिरसे स्वाहा। ओं स्रां सु चक्राय शिखायै वौषट्। ओं रं धी चक्राय कवचाय हुं। ओं हुं स चक्राय नेत्राभ्यां वषट्। ओं फट् ज्वालाचक्राय अस्त्राय फट्। इति दिग्बंधः। वर्णन्यासः—ओं सं नमः भ्रूमध्ये। ओं हं नमः मुखे। ओं स्रां नमः हृदये। ओं रं नमः पादयोः। ओं हुं नमः जान्वोः। ओं फट् नमः गुह्ये। अस्य श्रीषडक्षरसुदर्शननृसिंहमंत्रस्य अहिर्बुध्न्य ऋषिः शिरसि। अनुष्टुप् च्छंदः मुखे। श्रीसुदर्शननृसिंहो देवता हृदये। जपे विनियोगः ओं सं बीजं। ओं हुं शक्तिः। ऐंद्र्यादिदिक्षु बध्नामि ओं सुदर्शनाय नमश्चक्राय स्वाहा ओं। इति। पुनर्दिग्बंधः। पुनः ओं भूर्भुवःस्वरात्मक त्रैलोक्यं रक्ष रक्ष हुं फट् स्वाहा ओं। ॥४२॥ इति मंत्रेण छोटिकामुद्रया पुनर्दिग्बंधनं कुर्यात्। ध्यानं-शंखं चक्रं च चापं परशुम सिमिषुं शूलपाशांकुशाब्जं बिभ्राणं वज्रखेटं हलमुसलगदाकुंतमत्युग्रदंष्ट्रं। ज्वालाकेशं

त्रिणेत्रं ज्वलदनलनिभं हारकेयूरभूषं ध्यायेत्षट्कोणसंस्थं सकलरिपुजनप्राणसंहारचक्रं ॥ अव्याद्भास्करसप्रभाभिरखिला भाभिर्दिशो भासयन्भीमाक्षः स्फुरदट्टहासविकसद्दंष्ट्राप्रदीप्ताननः । दोर्भिश्चक्रदरौ गदाब्जमुसलान् शार्ङ्गं च पाशांकुशौ बिभ्रत्पिंगशिरोरुहोऽतिधवलश्चक्राभिधानो हरिः ॥ [भगवतो बहुबाहूरुपादत्वात् प्रथमे ध्यानश्लोके षोडशबाहुत्वं द्वितीये अष्टब हुत्वं चोक्तं ज्ञेयं ।] श्रीसुदर्शननरसिंहप्रेरणया श्रीसुदर्शननरसिंहप्रीत्यर्थं षडक्षरश्रीसुदर्शनमंत्रजपं करिष्ये । ॐ ❁ सहस्रार हुं फट् ❁ ॐ । इति मंत्रजपः । पुनरुपसंहारार्थं षडंगन्यासः वर्णन्यासः दिग्बंधद्वयं ध्यानं च । मंत्रमुक्त्वाश्रीसुदर्शननृसिंहं तर्पयामि । इति षडक्षरसुदर्शननृसिंहमंत्रः ॥ ३२-अ ॥

## अथ षोडशाक्षरमहासुदर्शननृसिंहमंत्रः ॥ ३२-आ ॥

श्रीगुरुभ्यो नमः । ११ स्थाने महासुदर्शनाय नमः । ॐ ❁ ॐ नमो भगवते महासुदर्शनाय हुं फट् ❁ ॐ । इति मंत्रेण प्राणायामः । ओं सं अ चक्राय हृदयाय नमः । ओं हं वि चक्राय शिरसे स्वाहा । ओं स्रां सु चक्राय

द्वास- शिखायै वौषट् । ओं रं र्धा चक्राय कवचाय हुं । ओं हुं स चक्राय नेत्राभ्यां वषट् । प्रति-
॥४३॥ ओं फट् ज्वालाचक्राय अस्त्राय फट् । इति दिग्बंधः । अस्य श्रीषोडशाक्षरसुदर्शननृसिंहमंत्रस्य मंत्राः
अहिर्बुध्न्य ऋषिः शिरसि । अनुष्टुप् छंदः मुखे । श्रीसुदर्शननृसिंहो देवता हृदये । जपे विनियोगः । ओं सं बीजं । ओं हुं शक्तिः । ऐंद्र्यादिदिक्षु बध्नामि ओं सुदर्शनाय नमश्चक्राय स्वाहा ओं इति पुनर्दिग्बंधः । पुनः ओं भूर्भुवःस्वरात्मक त्रैलोक्यं रक्ष रक्ष हुं फट् स्वाहा ओं इति च दिग्बंधः । ध्यानं-पूर्ववत् । ॐ ❁ ॐ नमो भगवते महासुदर्शनाय हुं फट् ❁ ॐ । इति मंत्रजपः । पुनः प्राणायामादि । मंत्रमुक्त्वा तर्पणं ।

मंत्रद्वयस्यापि यंत्रं ।

षट्कोणं विलिखेत्पूर्वं तन्मध्ये प्रणवं लिखेत् । कोणे मूलं लिखेत्संधौ षडंगं सर्वकामदं । भूतारिमारिकाचोरविषशस्त्रास्त्रजालकाः । नश्यंति तत्क्षणादेव नात्र
कार्या विचारणा । अर्थः—मूलं=सहस्रारहुंफट् इति षड्वर्णाः । प्रणवसहिताः । षडंगं= ॥४३॥
ओं सं अचक्राय । ओं हं विचक्राय इत्यादयः षण्मंत्राः । इति महासुदर्शननृसिंह-मंत्रः ॥ ३२-आ ॥]

## अथ अंभृणीसूक्तमंत्रः ३३ ॥

श्रीगुरुभ्यो नमः । एकादशस्थाने अंभृणीनामकमहालक्ष्म्यै नमः ।

---

## [अथ सुदर्शनगायत्री ॥ ३२-इ ॥

सुदर्शनाय विद्महे महाज्वालाय धीमहि । तन्नश्चक्रः प्रचोदयात् ।

## अथ सुदर्शनमालामंत्रः ॥ ३२-ई ॥

ॐ * ओं नमो भगवते महासुदर्शनाय महाचक्राय महाज्वालाय महादीप्तरूपाय सर्वतो मां रक्ष रक्ष महाज्वालाय स्वाहा हुं फट् * ओं ॥

इति सुदर्शनमालामंत्रः ॥ ३२-ई ॥]

७६. मंत्रोद्धारः—स्वदृष्टं सूक्तमखिलकामदं हरितुष्टिदं । वाचोंऽभृण्याः श्रियोंऽगानि श्रीलक्ष्मीमंदिरा रमा । अर्थः—वाचः = वाङ्नियामकत्वेन वागाख्यायाः । अंभृण्याः = अं विष्णुं बिभर्तीति अंभृणीनामिकायाः । श्रियः = महालक्ष्म्याः प्रतिपादकं । स्वदृष्टं = स्वया = लक्ष्म्या दृष्टं । सूक्तं । एतन्मंत्रस्य श्रीः लक्ष्मीः इत्यादि पंचांगानि । अखिलकामदं = तज्जपतॄणां सर्वाभीष्टदं च ।

न्यास-मंत्राः ॥४४॥

ॐ ❀ श्रीं ❀ ॐ इति एकाक्षरश्रीबीजमंत्रेण प्राणायामः। अथवा ॐभूः ॐभुवः ॐस्वः ॐमहः ॐजनः ॐतपः ॐसत्यं ॐ तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि। धियो यो नः प्रचोदयात्। ओमापो ज्योतीरसो अमृतं ब्रह्म भूर्भुवस्वरोम्। इति दशतारकयुतगायत्र्या वा प्राणायामः। ओं श्रियै हृदयाय नमः। ओं लक्ष्म्यै शिरसे स्वाहा। ओं मायै शिखायै वौषट्। ओं इंदिरायै कवचाय हुं। ओं रमायै अस्त्राय फट्। इति दिग्बंधः। अस्य श्रीअष्टर्चस्य अंभृणीसूक्तमंत्रस्य लक्ष्मीर्ऋषिः शिरसि। त्रिष्टुप् छंदः मुखे। द्वितीया जगती। अंभृणीनामकलक्ष्मीर्देवता हृदये। जपे विनियोगः। ध्यानं—कौशेयपीतवसनामरविंदनेत्रां पद्मद्वयाभयवरोद्यतपद्महस्तां। उद्यच्छतार्कसदृशीं परमांकसंस्थां ध्यायेद्विधीशनतपादयुगां जनित्रीं। अंभृणीनामकलक्ष्मीप्रेरणया अंभृणीनामकलक्ष्मीप्रीत्यर्थं अष्टर्चांभृणीसूक्तमंत्रजपं करिष्ये। ॐ ❀

---

७७ ध्यानश्लोकार्थः—कौशेयपीतवसनां = पीतकौशेयं वसानां। पद्मद्वयाभयवरोद्यतपद्महस्तां = पद्मद्वयेन अभयवरमुद्राभ्यां च उद्यताः ऊर्ध्वं कृताः पद्मवत्प्रशस्ताः हस्ताः यस्याः सा तथा तां। परमस्य = विष्णोः अंके स्थितां। विधीशौ = ब्रह्मरुद्रौ। जनित्रीं = सर्वजगन्मातरं॥ ॥४४॥

अहं रुद्रेभिर्वसुभिश्चराम्यहमादित्यैरुत विश्वदेवैः । अहं मित्रावरुणोभा बिभर्म्यहमिंद्राग्नी अहमश्विनोभा ॥ १ ॥ अहं सोममाहनसं बिभर्म्यहं त्वष्टारमुत पूषणं भगं । अहं दधामि द्रविणं हविष्मते सुप्राव्ये३ यजमानाय सुन्वते ॥ २ ॥ अहं राष्ट्री संगमनी

१. अहं रुद्रेभिः—अहमर्थस्य देवदेवीचेतनस्य क्षीरनीरवत्सपिंडत्वेन परममुख्यमुख्यवृत्तिभ्यां द्वयोरपि वाचकत्वात् श्रीदेवी ऋषिः स्वस्यांतर्यामिविवक्षया अहं चरामीत्यादि वक्ति । अहं = अंभृणी । रुद्रेभिः = एकादशरुद्रैः । वसुभिः = अष्टवसुभिः । आदित्यैः = विष्णुव्यतिरिक्तैरेकादशादित्यैः । विश्वदेवैरुत = पुरूरवार्द्रवादिभिः दशभिर्विश्वैर्देवैरपि । अथवा उत = एकोनपंचाशन्मरुद्भिः सह । चरामि = तन्नियामकतया परिवारभूतैस्तैः सह वर्ते इत्यर्थः । अहं उभा = उभौ । मित्रावरुणा = मित्रावरुणौ । बिभर्मि = धारयामि पोषयामि च । अहं इंद्राग्नी बिभर्मि । अहं उभा अश्विना = अश्विनौ । बिभर्मि । अहमिति पुनरुक्तिरुपचारनिवृत्त्यर्था । उभाविति मुक्तामुक्तराश्यपेक्षयोक्तमिति वा ज्ञेयं ॥ १ ॥

२. अहं सोममाहनसं—अहं । आहनसं = अभिषूयमाणं । सोमं = सोमलतां तदभिमानिनं चंद्रं च । बिभर्मि । उत = किं च । त्वष्टारं पूषणं भगं च अहं बिभर्मि । हविष्मते = पुरोडाशादिहविर्भिर्युक्ताय । सुप्राव्ये = शोभनं हविर्देवानां प्रापयित्रे ।

द्वास- वसूनां चिकितुषीं प्रथमा यज्ञियानां । तां मा देवा व्यदधुः पुरुत्रा भूरिस्थात्रां भूर्यावे- प्रति-
॥४५॥ शयंतीं ॥ ३ ॥ मया सो अन्नमत्ति यो विपश्यति यः प्राणिति य ईं शृणोत्युक्तम् । मंत्राः
अमंतवो मां त उपक्षियंति श्रुधि श्रुत श्रद्धिवं ते वदामि ॥ ४ ॥ अहमेव स्वयमिदं वदामि

सुन्वते = सोमाभिषवं कुर्वते । यजमानाय = यष्ट्रे । द्रविणं = ज्ञानरूपं धनरूपं च दैवमानुषं वित्तं । दधामि = ददामि । दातुं धारयामीति वा ॥ २ ॥

३. अहं राष्ट्री—राष्ट्री = सर्वस्वामिनी । वसूनां = दैवमानुषवित्तानां । संगमनी = संगमयित्री उपासकानां प्रापयित्री । चिकितुषी = जगन्निर्मात्री । यद्वा ज्ञानवती सर्वज्ञा । सर्वत्र कृतनिवासा वा । यज्ञियानां = यज्ञार्हाणां । यज्ञैराराध्यानां देवानां वा मध्ये । प्रथमा । यज्ञीयानां वसूनां संगमनीति वा । एवंगुणविशिष्टां भूरिस्थात्रां = बहुरूपतया दुर्गा अंबिका काली भगवतीत्यादिनानारूपत्वेन वर्तमानां । तथापि चंडिकाकाल्यादिर्जीवैर्न ममैक्यमित्याह—भूरि = भूरीणि बहूनि चंडिकादिजीवजातानि । आवेशयंतीं = स्वार्थे णिच् । तेष्वाविश्य तिष्ठंतीं । तां मा = तादृशगुणविशिष्टां मां । देवाः = भक्ताः । पुरुत्रा = विंध्यकरवीरादिबहुस्थलेषु । व्यदधुः = नानाविधजनैः पूज्यतया प्रतिष्ठापितवंतः ॥ ३ ॥ ॥४५॥

४. मया सो अन्नमत्ति—यः अन्नमत्ति सः मया = मत्प्रेरित एव मद्दत्तभोक्तृ शक्तिमानेव । अन्नं अत्ति । यः विपश्यति = विविधवस्तुजातं पश्यति । सः मयैव

जुष्टं॑ दे॒वेभि॑रु॒त मानु॑षेभिः । यं का॒मये॒ तंत॑मु॒ग्रं कृ॑णोमि॒ तं ब्र॒ह्माणं॒ तमृषिं॒ तं सु॑मे॒धां ॥ ५ ॥ अ॒हं रु॒द्राय॒ धनु॒रात॑नोमि ब्रह्म॒द्विषे॒ शर॑वे॒ हंत॒वा उ॑ । अ॒हं जना॑य स॒मदं॑

प्रेरितो मद्दत्तसामर्थ्येन पश्यति । यः प्राणिति = श्वासोच्छ्वासं करोति सोऽपि मयैव । यः उक्तं = परेणोच्चारितं वाक्यं । शृणोति सोऽपि । मया ईं = मयैव शृणोति । एवं सर्वप्रेरकतया सर्वांतस्थां मां । अमंतवः = निरपराधाः । ये ते उपक्षियंति = मत्समीपे वर्तंते मां भजंतीति यावत् । यद्वा—अमंतवः = एतादृशां मां अजानंतः ममाभक्ता इति यावत् । उपक्षियंति = क्षीणा भवंति ॥ तस्मात् हे श्रुत = प्रख्यात इति साधुवर्ग-संबोधनं । श्रद्धिवं = श्रद्धापूर्वकश्रवणादिगम्यं परमात्मानं । ते = तुभ्यं । वदामि = वेदाभिमानित्वादहं 'विज्ञानमानंदं ब्रह्म' त्यादिवेदमुखेनोपदिशामि । श्रुधि = शृणु ॥ ४ ॥

५. अहमेव—देवेभिः = ब्रह्मादिभिः । मानुषेभिरुत = मनुष्यैरपि । यद्वा - उत = ऋषिगंधर्वादिभिरपीति वा । जुष्टं = सेवितं । इदं = वक्ष्यमाणं । अहमेव स्वयं = साक्षादनुपचारेण । वदामि । नान्योक्तमनुवदामीत्येवकारार्थः । तत्किमित्यत आह—अहं यं यं उग्रं = रुद्रं । कामये = कर्तुमिति शेषः । तं तं रुद्रं कृणोमि = करोमि । यं ब्रह्माणं = विरिंचं कर्तुं कामये तं ब्रह्माणं करोमि । यमृषिं = वसिष्ठादिकं कर्तुं कामये । तं ऋषिं करोमि । यं सुमेधां = सुमेधसं । कर्तुं कामये । तं सुमेधसं करोमि । रुद्रादिपदप्राप्तिरपि तत्तत्पदयोग्यानां मदधीनैवेत्यर्थः । तदुक्तं—'ब्रह्मेशशक्रविधर्म

द्वास- कृणोम्यहं द्यावापृथिवी आ विवेश ।। ६ ।। अहं सुवे पितरमस्य मूर्धन्मम योनिरप्स्व१न्तः समुद्रे । ततो वि तिष्ठे भुवनानु विश्वोतामूं द्यां वर्ष्मणोप स्पृशामि ।। ७ ।। प्रति-

॥४६॥ मंत्राः

शशांकपूर्वगीर्वाणसंततिरियं यदपांगलेशं । आश्रित्य विश्वविजयं विसृजति' इति ॥ ५ ॥

६. अहं रुद्राय—अहं शरवे = हिंसकाय । ब्रह्मद्विषे = चतुर्मुखस्य पंचममुखच्छेत्रे । रुद्राय = द्वितीयार्थे चतुर्थी । एवंविधं रुद्रं । हंतवै उ = हंतुमेव । धनुः = चापं । संतनोमि=संदधामि संधानं करोमीत्यर्थः। अहं जनाय=भक्तजनं। द्वितीयार्थे चतुर्थी। समदं = ऐश्वर्यादिदानेन उत्साहयुक्तं । कृणोमि = करोमि । अहं द्यावापृथिवी = द्यां भूमिं च उपलक्षणया ऊर्ध्वाधोलोकांश्च । आविवेश = अहमेव प्रविश्य धारयामि ॥ ६ ॥

७. अहं सुवे—अहं अस्य=जगतः । पितरं = ब्रह्माणं । मूर्धन् = मूर्ध्नि । सर्वोत्कृष्टतया । सुवे = जनयामि । न केवलमहं ब्रह्माणं पूर्वोक्तप्रकारेण पदे स्थापयामि किंतु जनयामि चेत्यर्थः । सर्वश्रेष्ठो ब्रह्माऽपि मत्पुत्र इति भावः । एवंभूताया ममापि जनयिता कश्चिदस्तीत्याह—मम योनिरित्यादिना । मम योनिः = कारणभूतः ॥४६॥
भगवान् समुद्रे अप्सु अंतः = समुद्रजलमध्ये तिष्ठतीति शेषः । 'गुरोर्नाम न गृह्णीयाच्छिष्यो भार्या पतेरपी'ति स्मृत्या न तन्नाम जग्राह । किंतु लक्षणमुखेनाकथयत् । महोदधिशयोंतक इत्यादिस्मृत्या स एव नारायण इति ज्ञेयं । अत्र कश्चिद्विशेषः—

अहमेव वात इव प्र वाम्यारभमाणा भुवनानि विश्वा। परो दिवा पर एना पृथिव्यैतावती महिना संबभूव ॥ ८ ॥ पुनः प्राणायामः पंचांगन्यासः • ऋष्यादिन्यासः कौशेयपी-

---

अंभृण्या 'मम कारणमप्स्वंतः समुद्रे' इति वक्तुं शक्येऽपि गुह्यार्थकथानिशब्दः प्रायुंजि। अतस्तत्र लज्जया अप्स्वं १ तः समुद्रे' इति कंपो जातः। 'कंपोऽशेषग्रहे क्वापि लज्जायां वा पुरातने' इति ऋग्भाष्योक्तस्मृतेः। ततः = यतोऽहं सर्वस्वामिनी चतुर्मुखमाता च सती नारायणैकायत्ता ततः = हेतोः। विश्वा भुवना = भुवनानि लोकान्। अनु = विष्णोरनंतरं। वितिष्ठे = व्याप्य तिष्ठामि। तस्यैव विवरणं—अमुं द्यां = उपरितनलोकान्। उत = अधस्तनलोकांश्च। वर्ष्मणा = देहेन। उपस्पृशामि=व्याप्य तिष्ठामि ॥ ७ ॥

८. अहमेव वात इव—अहमेव विश्वा भुवनानि आरभमाणा=उत्पादयंती। न केवलमहं आकाशादिवद्व्याप्य वर्तमाना किंतु उत्पादयंत्यपि। वात इव = वायुरिव। अहं प्रवामि = निर्लेपा सती संचरामि सर्वमुत्पाद्य तत्र स्थिताऽप्यहं तत्तद्दोषलिप्ता नास्मीत्यर्थः। उक्तं स्व माहात्म्यं भगवन्माहात्म्येनोपसंहरति - यो मम योनिः समुद्रेंतरुक्तः। सः दिवा = द्युलोकात्। परः = उत्तमः। एना पृथिव्या = एतस्याः पृथिव्याश्च परः। उपलक्षणमेतत्। 'परो देवेभिरसुरैर्यदस्ति'—इति विश्वकर्मसूक्तोक्तदिशा देवासुरेभ्योऽपि परः। अहं तु महिना = महिम्ना। एतावती = परिमिता। सं बभूव = अहं परिमितमहिमैवास्मि। मम कारणभूतो नारायणस्तु अपरिमितकल्याणगुणगणपूर्णः ॥ ८ ॥

द्वास- तत्वसनामरविंदनेत्रां पद्मद्वयाभयवरोद्यतपद्महस्तां । उद्यच्छतार्कसदृशीं परमांकसंस्थां प्रति-
॥४७॥ ध्यायेद्विधीशनतपादयुगां जनित्रीं। श्री अंभृणीनामकलक्ष्मीप्रेरणया श्री अंभृणीनामकलक्ष्मी- मंत्राः
प्रीत्यर्थं अष्टर्चांभृणीसूक्तमंत्रजपः संपूर्णः। प्रत्यृचं तर्पणं। इति अष्टर्चांभृणीसूक्त-
मंत्रजपः ॥ ३३ ॥

## अथ एकाक्षरह्रीमंत्रः ॥ ३४ ॥

श्रीगुरुभ्यो नमः। एकादशस्थाने ह्रींनामकमहालक्ष्म्यै नमः। ॐ ❁ ह्रीं ❁ ॐ। इति मंत्रेण प्राणायामः। ओं ह्रां हृदयाय नमः। ओं ह्रीं शिरसे स्वाहा। ओं ह्रूं

---

७८. दुर्गाबीजश्रीबीजभूतयोर्लक्ष्मीमंत्रयोर्युगपदुद्धारमाह—लज्जाबीजं च तद्बीजं तस्या एवाभिधायकं। पाशांकुशौ रक्तवस्त्रे लज्जाबीजं विशिष्यते। अर्थः—लज्जाबीजं = ह्रीं इति। तद्बीजं = तस्याः श्रियः बीजं श्रीं इति। एतद्द्वयं। प्रत्येकं तस्या लक्ष्म्या एव। अभिधायकं = वाचकं। एतन्मंत्रद्वयस्य पूर्वोक्तमेव ध्यानं। तत्र लज्जाबीजे ध्यानविशेषमाह—पाशांकुशौ = पद्मद्वयस्थाने पाशांकुशनामकावायुधविशेषौ ज्ञेयौ। ॥४७॥
पीतवस्त्रस्थाने रक्तवस्त्रं च ज्ञेयं।

७९. अंगन्यासोद्धारः—अमध्ययुग्मस्वरगं तेनैवांगमुदाहृतं। अर्थः—युग्मशब्दो द्वितीयपरः। तथाच अयुग्मस्वराः आ ई ऊ ॠ ॡ ऐ औ अः इत्यष्टौ। तेषु मध्यौ

शिखायै वौषट् । ओं हैं कवचाय हुं । ओं ह्रौं नेत्राभ्यां वषट् । ओं हः अस्त्राय फट् । इति दिग्बंधः । अस्य श्रीएकाक्षरलज्जाबीजलक्ष्मीमंत्रस्य वसिष्ठपुत्रः शक्तिर्ऋषिः शिरसि । निचृद्गायत्री च्छंदः मुखे । ह्रीनामकलक्ष्मीर्देवता । जपे विनियोगः । ध्यानं—कौशेयरक्तवसनामरविंदनेत्रां पाशांकुशाभयवरोद्यतपद्महस्तां । उद्यच्छतार्कसदृशीं परमांकसंस्थां ध्यायेद्विधीशनतपादयुगां जनित्रीं ॥ ह्रीनामकलक्ष्मीप्रेरणया ह्रीनामकलक्ष्मीप्रीत्यर्थं एकाक्षरलज्जाबीजात्मकह्रीनामकलक्ष्मीमंत्रजपं करिष्ये । ॐ ⊛ ह्रीं ⊛ ॐ । इति मंत्रजपः । पुनः प्राणायामः षडंगन्यासः ऋष्यादिन्यासः ध्यानं च । ह्रीनामकलक्ष्मीप्रेरणया ह्रीनामकलक्ष्मीप्रीत्यर्थं एकाक्षरलज्जाबीजात्मकह्रीनामकलक्ष्मीमंत्रजपः संपूर्णः । ॐ ⊛ ह्रीं ⊛ ॐ । ह्रीनामकश्रीलक्ष्मीं तर्पयामि ॥ इति एकाक्षरलज्जाबीजमंत्रः ॥ ३४ ॥

---

ऋ ऌ वर्णौ । ताभ्यां भिन्नाः अयुग्ममध्यस्वराः । तान् गच्छति प्राप्नोतीति अयुग्ममध्यस्वरगः । तादृशं च तत् तच्च ह्रीं बीजं च । तेन षडंगमुदाहृतं । तद्यथा—ह्रीं + आ = ह्रां । ह्रीं + ई = ह्रीं । ह्रीं + ऊ = ह्रूं इत्यादि द्रष्टव्यम् । यण् सवर्णदीर्घाद्यभावो निरुक्तत्वात् ।

द्वास- ॥४८॥

# अथ एकाक्षरश्रीबीजमंत्रः ॥ ३५ ॥

प्रति- मंत्राः

श्रीगुरुभ्यो नमः। एकादशस्थाने श्रीनामकलक्ष्म्यै नमः। ॐ ❁ श्रीं ❁ ॐ। इति मंत्रेण प्राणायामः। ॐ श्रां हृदयाय नमः। ॐ श्रीं शिरसे स्वाहा। ॐ श्रूं शिखायै वौषट्। ॐ श्रैं कवचाय हुं। ओं श्रौं नेत्राभ्यां वषट्। ॐ श्रः अस्त्राय फट्। इति दिग्बंधः। अस्य श्रीएकाक्षरश्रीबीजमंत्रस्य भृगुर्ऋषिः शिरसि। निचृद्गायत्री च्छंदः मुखे। श्रीनामकलक्ष्मीर्देवता हृदये। जपे विनियोगः। ध्यानं-कौशेयपीतवसनामरविंदनेत्रां पद्मद्वयाभयवरोद्यतपद्महस्तां। उद्यच्छतार्कसदृशीं परमांकसंस्थां ध्यायेद्विधीशनतपादयुगां जनित्रीं। श्रीनामकलक्ष्मीप्रेरणया श्रीनामकलक्ष्मीप्रीत्यर्थं एकाक्षरश्रीबीजमंत्रजपं करिष्ये। ॐ ❁ श्रीं ❁ ॐ। इति मंत्रजपः। पुनः प्राणायामः। ॐ श्रीं शिरसे स्वाहा इत्यादिषडंगन्यासः ऋष्यादिन्यासः ध्यानं च। श्रीनामकलक्ष्मीप्रेरणया श्रीनामकलक्ष्मीप्रीत्यर्थं एकाक्षरश्रीबीज- ॥४८॥

---

८०. श्रीबीजमंत्रोद्धारः न्यासोद्धारश्च ह्रीबीजमंत्रोद्धारेण गतार्थः। ध्यानं तु— अंभृणीसूक्तवत्।

मंत्रजपः संपूर्णः। ॐ ❁ श्रीं ❁ ओं। श्रीनामकलक्ष्मीं तर्पयामि ॥ इति एकाक्षरश्रीबीजमंत्रः ॥ ३५ ॥

---

[अथ तंत्रसार भावार्थचंद्रिकास्थाः चत्वारो मंत्राः]

## [अथ श्रीद्वादशाक्षरकमलवासिनीमंत्रः ॥ ३५-अ ॥

श्रीगुरुभ्यो नमः। ११ स्थाने कमलवासिन्यै महालक्ष्म्यै नमः। ॐ ❁ क्लीं श्रीं नमः कमलवासिनि स्वाहा ❁ ॐ। इति मंत्रेण प्राणायामः। ओं क्लीं हृदयाय नमः। ओं श्रीं शिरसे स्वाहा। ओं नमः शिखायै वौषट्। ओं कमलवासिनि कवचाय हुं। ओं स्वाहा अस्त्राय फट्। इति दिग्बंधः। अस्य श्रीद्वादशाक्षरकमलवासिनीमंत्रस्य दक्षप्रजापतिर्ऋषिः। विराट् च्छंदः। श्रीकमलवासिनी देवता। जपे विनियोगः। ध्यानं—पद्मस्था पद्मनेत्रा कमलयुगवराभीतियुग्दोःसरोजा देहोत्थाभिः प्रभाभिस्त्रिभुवनमखिलं भासुरा भासयंती। मुक्ताहाराभिरामोन्नतकुचकलशा रत्नमंजीरकांचीग्रैवेयोर्म्यंगदाढ्या धृतमणिमकुटा श्रेयसे श्रीर्भवेद्वः ॥ श्रीकमलवासिनीनामकमहालक्ष्मीप्रेरणया श्रीकमलवासिनीनामकमहालक्ष्मीप्रीत्यर्थं द्वादशाक्षरकमलवासिनीमंत्रजपं करिष्ये। ॐ ❁ क्लीं श्रीं नमः कमलवासिनि स्वाहा ❁ ॐ।

द्वास- [इति मंत्रजपः। उपसंहारार्थं पूर्ववत् मंत्रेण प्राणायामः पंचांगन्यासः ऋष्यादिन्यासः ध्यानं च। कमलवासिनीनामकमहालक्ष्मीप्रेरणया० प्रीत्यर्थं द्वादशाक्षरकमलवासिनी- प्रति-
॥४९॥ मंत्रजपः संपूर्णः। मंत्रमुक्त्वा तर्पणं। लक्षजपः पुरश्चरणं। सूर्यसोमोपरागे पौर्णमास्यां सितपंचम्यां वा सिताब्जसहस्रहोमेन कुबेरसदृशो भवेत्। इति श्री द्वादशाक्षर- मंत्राः
कमलवासिनीमंत्रः ॥ ३५—अ ॥

## अथ श्रीद्वात्रिंशदक्षरराज्यप्रदसीतालक्ष्मीमंत्रः ॥ ३५-आ ॥

श्रीगुरुभ्यो नमः। ११ स्थाने श्रीसीतालक्ष्म्यै नमः। ॐ ❀ श्रीं ह्रीं श्रीं सीतामहालक्ष्मि रामवामांकसंस्थिते राजराजेश्वरि त्रैलोक्यमोहिनि क्लीं स्वाहा ❀ ॐ। इति मंत्रेण प्राणायामः। ओं श्रीं ह्रीं श्रीं हृदयाय नमः। ओं सीतामहालक्ष्मि शिरसे स्वाहा। ओं रामवामांकसंस्थिते शिखायै वौषट्। ओं राजराजेश्वरि कवचाय हुं। ओं त्रैलोक्यमोहिनि नेत्राभ्यां वषट्। ओं क्लीं स्वाहा अस्त्राय ॥४९॥
फट्। इति दिग्बंधः। अस्य श्रीद्वात्रिंशदक्षरराज्यप्रदसीतालक्ष्मीमंत्रस्य ब्रह्मा ऋषिः शिरसि। गायत्री च्छंदः मुखे। श्रीसीतालक्ष्मीर्देवता हृदये। जपे

विनियोगः । ध्यानं—माणिक्यमंजीरपदारविंदां रामांकसंसक्तमुखारविंदां । रत्न(राज्य)प्रदातृत्वकरारविंदां देवीं भजे राघववल्लभां तां। श्रीसीतालक्ष्मीप्रेरणया श्रीसीतालक्ष्मीप्रीत्यर्थं द्वात्रिंशदक्षरसीतालक्ष्मीमंत्रजपं करिष्ये। ॐ ❁ श्रीं ह्रीं श्रीं सीतामहालक्ष्मि रामवामांकसंस्थिते राजराजेश्वरि त्रैलोक्यमोहिनि क्लीं स्वाहा ❁ ॐ। इति मंत्रजपः। पुनः पूर्ववत् प्राणायामः षडंगन्यासः ऋष्यादिन्यासः ध्यानं च। श्रीसीतालक्ष्मीप्रेरणया श्रीसीतालक्ष्मीप्रीत्यर्थं द्वात्रिंशदक्षरसीतालक्ष्मीमंत्रजपः संपूर्णः। मंत्रमुक्त्वा तर्पणं। मऐश्वर्यप्राप्तिर्जपफलं। इति श्रीसीतालक्ष्मीमंत्रः॥ ३५-आ॥

## अथाष्टाक्षरमहालक्ष्मीमंत्रः॥ ३५-इ॥

श्रीगुरुभ्यो नमः। ११ स्थाने श्रीमहालक्ष्म्यै नमः। ॐ ❁ श्रीं श्रीमहालक्ष्म्यै नमः ❁ ॐ। इति मंत्रेण प्राणायामः। ओं श्रां श्रियै हृदयाय नमः। ओं श्रीं लक्ष्म्यै शिरसे स्वाहा। ओं श्रूं मायै शिखायै वौषट्। ओं श्रैं इंदिरायै कवचाय हुं। ओं श्रौं लोकमात्रे नेत्राभ्यां वषट्। ओं श्रः रमायै अस्त्राय फट्। इति दिग्बंधः। अस्य श्रीअष्टाक्षरमहालक्ष्मीमंत्रस्य भार्गवऋषिः शिरसि। अनुष्टुप् च्छंदः मुखे। श्रीमहा-

[लक्ष्मीर्देवता हृदये। श्रीं बीजं। नमः शक्तिः। जपे विनियोगः ध्यानं—वंदे लक्ष्मीं परशिवमयीं शुद्धजांबूनदाभां तेजोरूपां कनकवसनां सर्वभूषोज्ज्वलांगीं। बीजापूरं कनककलशं हेमपद्मं दधानामाद्यां शक्तिं सकलजननीं विष्णुवामांकसंस्थां। श्रीमहालक्ष्मीप्रेरणया श्रीमहालक्ष्मीप्रीत्यर्थं अष्टाक्षरमहालक्ष्मीमंत्रजपं करिष्ये। ॐ ❁ श्रीं श्रीमहालक्ष्म्यै नमः ❁ ॐ। इति मंत्रजपः। पुनरुपसंहारार्थं प्राणायामः षडंगन्यासः ऋष्यादिन्यासः ध्यानं च। श्रीमहालक्ष्मीप्रेरणया श्रीमहालक्ष्मीप्रीत्यर्थं अष्टाक्षरमहालक्ष्मीमंत्रजपः संपूर्णः। मंत्रमुक्त्वा तर्पणं। इति अष्टाक्षरमहालक्ष्मीमंत्रः ॥ ३५-इ ॥

## अथ श्रीद्वादशाक्षरतुलसीमंत्रः ॥ ३५-ई ॥

श्रीगुरुभ्यो नमः। ११ स्थाने श्रीतुलसीनामकमहालक्ष्म्यै नमः। ओं ❁ श्रीं क्लीं तुलसि सुरसुंदरि स्वाहा ❁ ओं। इति मंत्रेण प्राणायामः। ओं श्रां श्रियै हृदयाय नमः। ओं क्लीं लक्ष्म्यै शिरसे स्वाहा। ओं तुलसि मायै शिखायै वौषट्। ओं सुरसुंदरि इंदिरायै नेत्राभ्यां वषट्। ओं स्वाहा रमायै अस्त्राय फट्। इति दिग्बंधः। अस्य श्रीद्वादशाक्षरतुलसीनामकमहालक्ष्मीमंत्रस्य नारद ऋषिः शिरसि।

## अथ ऐंकाक्षरभूमंत्रः ॥ ३६ ॥

श्रीगुरुभ्यो नमः। एकादशस्थाने भुवे नमः । ॐ ❁ भूं ❁ ॐ ।

---

[गायत्री च्छंदः मुखे। तुलसीरूपिणी श्रीमहालक्ष्मीर्देवता हृदये। श्रीं बीजं। क्लीं शक्तिः। श्रीतुलसीप्रेरणया श्रीतुलसीप्रीत्यर्थं जपे विनियोगः। ध्यानं—बृंदावनस्थां विधिशर्ववंदितां विद्याधराद्यर्चितपादपंकजां। विष्णुप्रियां श्यामलकोमलांगीं भजामि नित्यं तुलसीं सुरेश्वरीं। ओं ❁ श्रीं क्लीं तुलसि सुरसुंदरि स्वाहा ❁ ओं। इति मंत्रजपः। पुनर्मंत्रोपसंहारार्थं प्राणायामः षडंगन्यासः ऋष्यादिन्यासः ध्यानं च। श्रीतुलसीप्रेरणया श्रीतुलसीप्रीत्यर्थं द्वादशाक्षरतुलसीमंत्रजपः संपूर्णः। मंत्रमुच्चार्य तर्पणं। सर्वाभीष्टप्रदोऽयं मंत्रः। विशेषतः स्त्रीभिर्जप्योऽयं मंत्रः। ओंकारस्थाने श्रींकारस्तासां। इति तुलसीमंत्रः ॥ ३५-ई ॥]

८१. एकाक्षरभूदुर्गामंत्रोद्धारः—सत्ताबीजं च दुर्बीजं तद्वदेव प्रकीर्तितं। अर्थः—महालक्ष्म्या एवापरं मंत्रद्वयमाह सत्ताबीजमिति—सत्ताबीजं = सत्तार्थकं बीजं भूं इति। द्वितीयं दुः इति बीजं। एतद्द्वयं। तद्वदेव = पूर्वोक्त ह्रीं श्रीं मंत्रवदेव लक्ष्मीवाचकं प्रकीर्तितं। षडंगन्यासः—भ्रां भ्रीं द्रां द्रीं इत्यादिभिः।

द्वास- इति मंत्रेण प्राणायामः। ओं भां हृदयाय नमः। ओं भीं शिरसे स्वाहा। ओं भूं प्रति-
॥५१॥ शिखायै वौषट्। ओं भैं कवचाय हुं। ओं भौं नेत्राभ्यां वषट्। ओं भः अस्त्राय मंत्राः
फट्। इति दिग्बंधः। ओं श्रियै हृदयाय नमः। ओं लक्ष्म्यै शिरसे स्वाहा। ओं
मायै शिखायै वौषट्। ओं इंदिरायै कवचाय हुं। ओं रमायै अस्त्राय फट्। इति
दिग्बंधः। इति वा न्यासः। अस्य श्रीएकाक्षरभूमंत्रस्य भृगुर्ऋषिः शिरसि।
निचृद्गायत्री च्छंदः मुखे। भूनामकलक्ष्मीर्देवता हृदये। जपे विनियोगः। ध्यानं—
कौशेयपीत (नील) वसनामरविंदनेत्रां तांबूलनीलकुसुमाभयसद्वरेतां। श्यामांगकांतिसहि-
तां परमांकसंस्थां ध्यायेद्विधीशनतपादयुगां जनित्रीं। भूनामकलक्ष्मीप्रेरणया भूनामक-
लक्ष्मीप्रीत्यर्थं एकाक्षरभूबीजमंत्रजपं करिष्ये। ॐ ❀ भूं ❀ ॐ। इति मंत्रजपः।

---

८२. ध्यानश्लोकोद्धारः—वर्णः श्यामो विशेषोऽत्र तांबूलं नीलमुत्पलं।
शंखचक्रौ तर्जनं च शूलमित्यपरत्र च। अर्थः—पूर्वोक्तह्रीं श्री एकाक्षरमंत्रध्यानात्
एकाक्षरभूदुर्गामंत्रध्याने विशेषमाह। अत्र = मंत्रद्वयेऽपि। वर्णः श्यामः = उद्यच्छतार्कस-
दृशीमिति स्थाने श्यामांगकांतिसहितामिति विशेषः। तांबूलं नीलमुत्पलं = भूमंत्रे पद्म- ॥५१॥
द्वयाभयवरोद्यतपद्महस्तामिति स्थाने तांबूलनीलकुसुमाभयसद्वरेतामिति विशेषः। अप-
रत्र = दुर्गाबीजे। पद्मद्वयादिस्थाने शंखचक्रादिकं विशेषः। चक्राब्जतर्जनसुशूलयुता-
ब्जहस्तां इति।

पुनः प्राणायामः। षडंगन्यासः पंचांगन्यासो वा। ऋष्यादिन्यासः। ध्यानं च। भूनामकलक्ष्मीप्रेरणया भूनामकलक्ष्मीप्रीत्यर्थं एकाक्षरभूबीजमंत्रजपः संपूर्णः। ॐ ❀ भूं ❀ ॐ। भूनामकलक्ष्मीं तर्पयामि। इति एकाक्षरभूमंत्रः ॥ ३६ ॥

## अथ [८३] एकाक्षरदुर्गाबीजमंत्रः ॥ ३७ ॥

श्रीगुरुभ्यो नमः। एकादशस्थाने दुर्गायै नमः। ॐ ❀ दुः ❀ ॐ। इति मंत्रेण प्राणायामः। ओं दां हृदयाय नमः। ओं दीं शिरसे स्वाहा। ओं दूं शिखायै वौषट्। ओं दैं कवचाय हुं। ओं दौं नेत्राभ्यां वषट्। ओं दः अस्त्राय फट्। इति दिग्बंधः। अस्य श्रीएकाक्षरदुर्गाबीजमंत्रस्य कश्यप ऋषिः शिरसि। निचृद्गायत्री च्छंदः मुखे। दुर्गा देवता हृदये। जपे विनियोगः। ध्यानं—कौशेयपीतवसनां कमलत्रिणेत्रीं[८४] चक्राब्जतर्जनसुशूलयुताब्जहस्तां।

---

८३. मंत्रोद्धारः—भूबीजमंत्रे गतः।

८४. त्रिणेत्रत्वं च दुर्गायाः प्रायः इति वक्ष्यमाणप्रमाणेन अरविंदनेत्रां इति स्थाने कमलत्रिणेत्रामित्युक्तं।

न्यास- ॥५२॥

श्यामांगकांतिसहितां परमांकसंस्थां ध्यायेद्विधीशनतपादयुगां जनित्रीं । श्रीदुर्गाप्रेरणया श्रीदुर्गाप्रीत्यर्थं एकाक्षरदुर्गाबीजमंत्रजपं करिष्ये । ॐ ❁ दुः ❁ ॐ । इति मंत्रजपः । पुनः प्राणायामः । ॐ दां हृदयाय नम इत्यादि षडंगन्यासः ऋष्यादिन्यासः ध्यानं च ॥ श्रीदुर्गाप्रेरणया श्रीदुर्गाप्रीत्यर्थं एकाक्षरदुर्गाबीजमंत्रजपः संपूर्णः ॥ ॐ ❁ दुः ❁ ॐ । दुर्गां तर्पयामि । इति एकाक्षरदुर्गामंत्रः ॥ ३७ ॥

प्रति- मंत्राः

## अथ श्रीपंचाक्षरभूमंत्रः ॥ ३८ ॥

श्रीगुरुभ्यो नमः । एकादशस्थाने भुवे नमः । ॐ ❁ भूं भुवे नमः ❁ ॐ । इति मंत्रेण प्राणायामः । ॐ भूं हृदयाय नमः । ॐ भुं शिरसे स्वाहा । ओं वें शिखायै वौषट् । ओं नं कवचाय हुं । ओं मः अस्त्राय फट् । इति दिग्बंधः । अस्य श्रीपंचाक्षरभूमंत्रस्य भृगुर्ऋषिः शिरसि । पंक्तिश्छंदः मुखे । भूनामक-

---

८५. मंत्रोद्धारः—नमोंतं स्वेन सहितं तदेवान्यो मनुः स्मृतः । अर्थः—तदेव=भूः इति बीजमेव । स्वेन = भूशब्देन । सहितं । नमोंतं च = ततः नमःशब्द इत्यर्थः । नमःशब्दयोगाद्भूशब्दस्य चतुर्थ्यंतत्वं च । अन्यः = केवलबीजमंत्रापेक्षयाऽन्यः । मनुः = लक्ष्म्या एव मंत्रः । अयं पंचाक्षरः । ॥५२॥

लक्ष्मीर्देवता हृदये । जपे विनियोगः । ध्यानं—कौशेयंपीतवसनामरविंदनेत्रां तांबूलनीलकुसुमाभयसद्वरेतां । श्यामांगकांतिसहितां परमांकसंस्थां ध्यायेद्विधीशनतपादयुगां जनित्रीं ॥ भूनामकलक्ष्मीप्रेरणया भूनामकलक्ष्मीप्रीत्यर्थं पंचाक्षरभूमंत्रजपं करिष्ये । ॐ ❀ भूं भुवे नमः ❀ ॐ । इति मंत्रजपः । पुनः प्राणायामः पंचांगन्यासः ऋष्यादिन्यासः ध्यानं च। भूनामकलक्ष्मीप्रेरणया भूनामकलक्ष्मीप्रीत्यर्थं पंचाक्षरभूमंत्रजपः संपूर्णः। ॐ ❀ भूं भुवे नमः ❀ ॐ। भूनामकलक्ष्मीं तर्पयामि । इति पंचाक्षरभूमंत्रः ॥ ३८ ॥

## अथ श्रीषडक्षरदुर्गामंत्रः ॥ ३९ ॥

श्रीगुरुभ्यो नमः । एकादशस्थाने श्रीदुर्गायै नमः। ॐ ❀ दुः दुर्गायै

---

८६. ध्यानंतु—एकाक्षरभूबीजमंत्रवत् । तंत्रांतरोक्तं ध्यानं—शुक्रांभोजे निषण्णाऽरुणचरणतला श्यामलांगी मनोज्ञा चंचत्स्थाल्यग्रचुंबच्छुककलितकरा प्राप्तनीलोत्पला च । रक्ताकल्पाऽभिरामा मणिमयमुकुटा चित्रवस्त्रा प्रसन्ना दिश्याद्विश्वंभरा वः सततमभिमतं वल्लभा कैटभारेः । इति ।

८७. मंत्रोद्धारः—नमोऽतं स्वेन सहितं तदेवान्यो मनुः स्मृतः। अर्थः—स्वेन =

नमः ॐ । इति मंत्रेण प्राणायामः । ॐ दुः हृदयाय नमः । ओंदुं शिरसे स्वाहा । ओं र्गां शिखायै वौषट् । ओं यैं कवचाय हुं । ओं नं नेत्राभ्यां वषट् । ओं मः अस्त्राय फट् । इति दिग्बंधः । अस्य श्रीषडक्षरदुर्गामंत्रस्य कश्यपऋषिः शिरसि । गायत्री च्छंदः मुखे । श्रीदुर्गा देवता हृदये । जपे विनियोगः । ध्यानं-कौशेयपीतवसनामरविंदनेत्रां तांबूलनीलकुसुमाभयसद्वरेतां । श्यामांगकांतिसहितां परमांकसंस्थां ध्यायेद्विधीशनतपादयुगां जनित्रीं ॥ दुर्गांतर्गतपरमात्मप्रेरणया दुर्गांतर्गतपरमात्मप्रीत्यर्थं श्रीषडक्षरदुर्गामंत्रजपं करिष्ये । ॐ दुः दुर्गायै नमः ॐ । इति मंत्रजपः । पुनः प्राणायामः षडंगन्यासः ऋष्यादिन्यासः ध्यानं च । दुर्गांतर्गतपरमात्मप्रेरणया दुर्गांतर्गतपरमात्मप्रीत्यर्थं श्रीषडक्षरदुर्गामंत्रजपः संपूर्णः । ॐ दुः दुर्गायै नमः ॐ । दुर्गांतर्गतपरमात्मानं तर्पयामि ॥ इति षडक्षरदुर्गामंत्रः ॥ ३९ ॥

---

दुर्गाशब्देन । सहितं । नमोंतं = अंते नमःशब्दयुतं । नमःशब्दयोगात् चतुर्थ्यंतं च तदेवान्यो मनुः = लक्ष्म्या एवायमपरो मंत्रः । षड्वर्णेनांगमुच्यते ।

## [सप्तदशाक्षरः श्रीशूलिनीदुर्गामंत्रः ॥ ३९—अ ॥

श्रीगुरुभ्यो नमः । ११ स्थाने शूलिनीदुर्गायै नमः । ॐ ❀ ह्रीं दुं ज्वल ज्वल शूलिनि दुष्टग्रह हुंफट् स्वाहा ❀ ॐ । इति मंत्रेण प्राणायामः । ओं शूलिनि दुर्गे हुफट् हृदयाय नमः । ओं शूलिनि वरदे हुंफट् शिरसे स्वाहा । ओं शूलिनि विंध्यवासिनि हुंफट् शिखायै वौषट् । ओं शूलिन्यसुरमर्दिनि युद्धप्रिये त्रासय हुंफट् कवचाय हुं । ओं शूलिनि देवसिद्धपूजिते नंदिनि रक्ष रक्ष महायोगीश्वरि अस्त्राय फट् इति दिग्बंधः । अस्य श्रीसप्तदशाक्षरशूलिनीदुर्गामंत्रस्य दीर्घतमा ऋषिः शिरसि । ककुप् च्छंदः मुखे । श्रीशूलिनीदुर्गा देवता हृदये । हुं बीजं । स्वाहा शक्तिः । जपे विनियोगः । ध्यानं-बिभ्राणा शूलबाणास्यरिसदरगदाचापपाशान्कराब्जैर्मेघश्यामा किरीटोल्लसितशशिकला भीषणा भूषणाढ्या । सिंहस्कंधाधिरूढा चतसृभिरसिखेटान्विताभिः परीता कन्याभिर्भिन्नदैत्या भवतु भवभयध्वंसिनी शूलिनी वः । श्रीशूलिनीदुर्गांतर्गतश्री नृसिंहप्रेरणया श्रीशूलिनीदुर्गांतर्गतश्रीनृसिंहप्रीत्यर्थं सप्तदशाक्षरशूलिनीमंत्रजपं करिष्ये ।

# अथ जातवेदस इति वैदिकदुर्गामंत्रः ॥ ४० ॥



श्रीगुरुभ्यो नमः । एकादशस्थाने दुर्गांतर्गतश्रीपरशुरामरूपिपरमात्मने नमः । ॐ * जातवेदसे सुनवामसोममरातीयतो निदहाति वेदः । सनः पर्षदतिदुर्गाणि विश्वा नावेव सिंधुं दुरितात्यग्निः * ॐ । इति मंत्रेण प्राणायामः । ओं जातवेदसे

---

[ॐ ❀ ह्रीं दुं ज्वल ज्वल शूलिनि दुष्टग्रह हुं फट् स्वाहा ❀ ॐ । इति मंत्रजपः । पुनः प्राणायामः पंचांगन्यासः ऋष्यादिन्यासः ध्यानं च । श्रीशूलिनीदुर्गांतर्गतश्रीलक्ष्मीनृसिंहप्रेरणया श्रीलक्ष्मीनृसिंहप्रीत्यर्थं सप्तदशाक्षरशूलिनीदुर्गामंत्रजपः संपूर्णः ॥ मंत्रमुक्त्वा तर्पणं । इति शूलिनीदुर्गामंत्रः । ३९-अ ॥]

८८. मंत्रोद्धारः—दुर्गा त्रिष्टुप् कश्यपोक्ता तत्र वर्णोऽग्निवत्स्मृतः । त्रिणेत्रत्वं च दुर्गायाः प्रायः सर्वत्र कथ्यते । अर्थः—त्रिष्टुप् = त्रिष्टुप्छंदस्का । कश्यपोक्ता = कश्यपर्षिणा दृष्टा । जातवेदस इति ऋक् [ऋग्वेदे १ । ७ । ७] । दुर्गा = दुर्गाया मंत्रः । ध्याने अग्निवर्णो विशेषः । तथाच भ्राजद्धनंजयनिभां इति । दुर्गायाः ध्याने प्रायः त्रिणेत्रत्वं कथ्यते । अतएव कमलत्रिणेत्रां इति । त्रिणेत्रत्वस्यातिकोपव्यंजकत्वात् विद्याद्यपेक्षया जपसमये द्विनेत्रत्वेनापि ध्यानं कर्तुं शक्यमिति द्योतकः प्रायः शब्दः ।

सुनवाम सोमं हृदयाय नमः । ओं अरातीयतो निदंहाति वेदः शिरसे स्वाहा । ओं सनः पर्षदति दुर्गाणि विश्वा शिखायै वौषट् । ओं नावेव सिंधुं दुरितात्यग्निः कवचाय हुं । ओं जातवेदसे सुनवामसोममिति संपूर्णर्चा अस्त्राय फट् । इति दिग्बंधः । अस्य श्रीवैदिकदुर्गामंत्रस्य कश्यपऋषिः शिरसि । त्रिष्टुप् छंदः मुखे । दुर्गांतर्गत श्रीपरशुरामरूपी परमात्मा देवता हृदये । जपे विनियोगः । ध्यानं—कौशेयपीतवसनां कमलत्रिणेत्रां चक्राब्जतर्जनसुशूलयुताब्जहस्तां । भ्राजद्धनंजयनिभां परमांकसंस्थां ध्यायेद्विधीशनतपादयुगां जनित्रीं ॥ दुर्गांतर्गतश्रीपरशुरामरूपिपरमात्मप्रेरणया श्रीदुर्गांतर्गत-श्रीपरशुरामरूपिपरमात्मप्रीत्यर्थं एकर्चसूक्तदुर्गामंत्रजपं करिष्ये ॥

ॐ । जातवेदसे सुनवामसोममरातीयतो निदंहाति वेदः । स नः पर्षदति

---

८९. पादैः समस्तेन तथा षड्वर्णेनांगमुच्यते । अर्थः—पादैः = व्यस्तैः चतुर्भिः पादैः । समस्तेन = विशिष्टमंत्रेण चेति पंचांगानि । तथा षड्वर्णेनांगमुच्यत इति पूर्वोक्तषडक्षरदुर्गामंत्रस्य ।

९०. मुख्यतो जामदग्न्यस्तु देवताऽस्य मनोः स्मृतः । अर्थः—सुगमः । जाम-दग्न्यः परशुरामः ।

९१. जातवेदस इति ऋगर्थः—जातवेदसे = जातं सर्वं वेत्तीति जातवेदाः तस्मै ।

द्वास- दुर्गाणि विश्वा नावेव सिंधुं दुरितात्यग्निः ❀ ॐ । इति मंत्रजपः । पुनः प्रात-
।।५५।। प्राणायामः पंचांगन्यासः ऋष्यादिन्यासः ध्यानं च । श्रीदुर्गांतर्गतपरमात्मप्रेरणया मंत्राः
श्रीदुर्गांतर्गतपरमात्मप्रीत्यर्थं एकर्चदुर्गामंत्रजपः संपूर्णः । ॐ ❀ जातवेदसे सुनवाम
सोममरातीयतो निदहाति वेदः । सनः पर्षदति दुर्गाणि विश्वानावेव
सिंधुं दुरितात्यग्निः ❀ ॐ । दुर्गांतर्गतपरमात्मानं तर्पयामि ।। इत्येकर्चसूक्तात्मको
[९२] दुर्गामंत्रः ।। ४० ।।

---

(अग्नये दुर्गायै तामुद्दिश्य तत्प्रीत्यर्थं) सोमं = सोमलतां । सुनवाम = अभिषुणवाम । सः वेदः = सर्वज्ञा दुर्गा देवी । पुंलिंगेनोच्यते स्त्री च पुंवच्छक्तिमती यदि । इति वचनात्पुल्लिंगोपपत्तिः । अरातीयतः = दुःखकारित्वेन अस्मान् शत्रुवदाचरतः रागादिदोषान् । निदहाति = नितरां भस्मीकरोतु । अग्निः = अग्न्यत्वादग्निनाम्नी दुर्गा । नः= अस्मान् । विश्वा = सर्वाणि । दुर्गाणि = भोक्तुमशक्यानि । दुरितानि = दुःखहेतुभूतानिपापानि । ।।५५।।
सिंधुं नावेव = ग्राहादिदुष्टसत्त्वैराकुलितां नदीं कर्णधारो यथा नावा तारयति तथा । अतिपर्षत् = उत्तारयतु ।

९२. अत्र कश्चिद्विशेषः–रमाया एव रूपाणि त्वेतानि हि विदो विदुः । अर्थः - एतानि

# अथ श्रीहिरण्यगर्भमंत्रः[93] ॥ ४१ ॥

श्रीगुरुभ्यो नमः। एकादशस्थाने हिरण्यगर्भाय नमः। ॐ हिरण्यगर्भाय नमः * ओं इति प्राणायामः। ओं ब्रह्मणे हृदयाय नमः। ओं धात्रे शिरसे स्वाहा। ओं विरिंचाय शिखायै वौषट्। ओं अजाय कवचाय हुं। ओं पाद्माय अस्त्राय फट्। इति दिग्बंधः। अस्य श्रीपंचदशर्चस्य हिरण्यगर्भः समवर्तताग्रे इति सूक्तस्य भृगुर्ऋषिः शिरसि। त्रिष्टुप् च्छंदः मुखे। हिरण्यगर्भांतर्यामिपरमात्मा देवता हृदये। जपे विनियोगः। ध्यानं—ध्यायेन्निषण्ण[94]मजमच्युतनाभिपद्मे प्रोद्यद्दिवाकर-

---

रूपाणि = अंभृणी ह्री श्री भू दुर्गादिरूपाणि। रमाया एव = मुख्यतो महालक्ष्म्या एव। न तु पंचभूतावराया धरायाः नापि शिवदुर्गाख्याया गौर्याश्च।

९३. मंत्रोद्धारः—हिरण्यगर्भसूक्तं च भृगुदृष्टं प्रकीर्तितं। ब्रह्मधातृविरिंचा-जपाद्मैरंगमुदाहृतं। अर्थः—हिरण्यगर्भसूक्तं = हिरण्यगर्भः समवर्तताग्रे इति सूक्तं। ऋग्वेदे [८। ७। ३॥] चतुर्मुखब्रह्मणो मंत्ररूपमिति शेषः। इदं भृगुदृष्टं = अस्य भृगुर्ऋषिः। अस्य मंत्रस्य ब्रह्मादिपंचशब्दैः पंचांगानि।

९४. ध्यानश्लोकार्थः—अच्युतनाभिपद्मे=पद्मनाभनाभिकमले। निषण्णं=आसीनं। मातृप्रकारकरं=मातुः लक्ष्म्याः। करप्रकारः कराणां प्रकारः पद्मद्वयाभयवरयुतत्वरूपः

समूहनिकाशमग्र्यं । मातृप्रकारकरमुत्तमकांतिमद्भिर्वक्त्रैः सृजंतमखिलैः परमार्थविद्याः । हिरण्यगर्भांतर्यामिपरमात्मप्रेरणया हिरण्यगर्भांतर्यामिपरमात्मप्रीत्यर्थं हिरण्यगर्भसूक्तमंत्रजपं करिष्ये । ॐ * हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत् । स दाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम ॥ १ ॥

---

यस्य स तथा। करशब्दस्य परनिपातः। परमार्थविद्याः=ऋगादिरूपाः। वक्त्रैः = चतुर्भिर्मुखैः। सृजंत=उच्चारयंत। ध्यायेत्।

१. मंत्रार्थः-हिरण्यगर्भः—हिरण्यगर्भः = हिरण्यनामकं ब्रह्मांडं गर्भे यस्य सः। महदादितत्वसप्तकमध्ये तस्य स्थितत्वात्। हिरक् सुखरूपं चेष्टारूपं। यं ज्ञानरूपं ब्रह्म गर्भे जठरे यस्येति वा ब्रह्मा। हिरण्यगर्भः कः इत्यादि शब्दाः महायोगविद्वद्रूढिभ्यां विरिंचतदंतर्याम्युभयपराः। अग्रे भूतस्य = अनादिकालतो विद्यमानस्य हरेः सकाशात्। एकः = असहायः। अग्रे = सृष्टेरादौ। जातः = उत्पन्नः। समवर्तत = अतिष्ठत्। अंतर्यामिणो ब्रह्मनामकस्य हरेर्जननं रूपांतरेण प्रादुर्भावः। तस्य महिमानमाह—भूतस्य= प्राणिजातस्य। पतिः = स्वामी। आसीत्। किंच—सः = हिरण्यगर्भः। इमां ॥५६॥ पृथिवीं उपलक्षणयाऽधस्तनसप्तलोकान्। द्यामुत = स्वर्गाद्युपरितनलोकांश्च। दाधार = धृतवान्। देवाय = क्रीडादिगुणयुक्ताय। कस्मै = कांय। छांदसं सर्वनामत्वं। कशब्दवाच्याय। हविषा = हविरादिपूजाद्रव्येण। विधेम = परिचरेम ॥ १ ॥

य आत्मदा बलदा यस्य विश्वं उपासते प्रशिषं यस्य देवाः। यस्य छायामृतं यस्य मृत्युः कस्मै देवाय हविषा विधेम ॥ २ ॥ यः प्राणतो निमिषतो महित्वैक इद्राजा जगतो बभूव। य ईशे अस्य द्विपदश्चतुष्पदः कस्मै देवाय हविषा विधेम ॥ ३ ॥ यस्येमे हिमवन्तो महित्वा

---

२. य आत्मदाः—यः = हिरण्यगर्भः। आत्मदाः = आकारान्तोऽयं शब्दः। परमात्मोपदेष्टा। बलदाः = बलप्रदश्च। विश्वे = सर्वे जनाः। देवाः = देवाश्च। यस्य = हिरण्यगर्भस्य। प्रशिषं = अनुशासनं। उपासते = उपतिष्ठंति। अमृतं = मृत्यभावः। मृत्युः = मृतिश्च। यस्य च्छाया = छायेव अधीनौ। न विद्यते मृतं मरणं यस्मात् इत्यमृतं पालकजातमिंद्रादिः। मृत्युः = मारको रुद्रादिश्च यस्य छायेव प्रतिबिंबभूताः। तस्मै कस्मै देवाय हविषा विधेम ॥ २ ॥

३. यः प्राणतः—यः = हिरण्यगर्भः। प्राणतः = प्रश्वसतः। निमिषतः = अक्षिपक्ष्मचालनं कुर्वतः। जगतः = जंगमस्य। महित्वा = महित्वेन माहात्म्येन। एक इत् = अद्वितीय एव। बभूव। यः = हिरण्यगर्भः। अस्य = प्रमाणप्रमितस्य। द्विपदः = मनुष्यस्य। चतुष्पदः = पश्वादेश्च। कर्मणि षष्ठी। ईशे = ईष्टे। तस्मै कस्मै देवाय हविषा विधेम ॥ ३ ॥

द्वास- यस्य॑ समु॒द्रं र॒सया॑ स॒हाहुः। यस्ये॒माः प्र॒दिशो॒ यस्य॑ बा॒हू कस्मै॑ दे॒वाय॑ ह॒विषा॑ विधेम ॥ प्रति-

॥५७॥ ४ ॥ येन॒ द्यौरु॒ग्रा पृ॑थि॒वी च॑ दृ॒ळ्हा येन॒ स्वः॑ स्तभि॒तं येन॒ नाकः॑। मंत्राः

यो अ॒न्तरि॑क्षे॒ रज॑सो वि॒मानः॒ कस्मै॑ दे॒वाय॑ ह॒विषा॑ विधेम ॥ ५ ॥ यं क्रन्द॑सी॒ अव॑सा

---

४. यस्येमे — हिमवन्तः = बहुवचनमाद्यर्थे। हिमवदादयः। इमे = परिदृश्यमानाः सर्वे पर्वताः। यस्य = हिरण्यगर्भस्य। महित्वा = ऐश्वर्यमित्याहुरार्याः। रसया = रसो जलं। मतुबर्थे अर्शआदिभ्योऽजित्यच् प्रत्ययः। जातावेकवचनं। नदीभिः सह। समुद्रं = सर्वान्समुद्रान्। यस्य महित्वमाहुः। इमाः प्रदिशः = कोणदिशः। यस्य महित्वमाहुः। यस्येति पुनःश्रवणात् ऐंद्र्याद्याः प्रधानदिशश्च। यस्य बाहू = बाहुभ्यां जाताः। तस्मै कस्मै देवाय हविषा विधेम ॥ ४ ॥

५. येन द्यौरुग्रा — येन = हिरण्यगर्भेण। द्यौः = द्युलोकं। उग्रा = गहनं। कृतेति शेषः। येन पृथिवी च दृळ्हा = दृढीकृता। येन स्वः स्वर्गलोकश्च। स्तभितः = यथाऽधो न पतति तथोपर्यवस्थापितः। तथा नाकः = तत उपरितनो लोकश्च तथा कृतः। यश्चांतरिक्षे = अंतरिक्षलोके। रजसः = रजस्तमः प्रकृतिपिशाचादिप्राणिनः। विमानः = निर्मिमाणो वर्तते। रक्षःपिशाचादीनंतरिक्षचारिणः कुर्वाण इत्यर्थः। तस्मै कस्मै देवाय हविषा विधेम ॥ ५ ॥ ॥५७॥

तस्तभाने अभ्यैक्षेतां मनसा रेजमाने। यत्राधि सूर उदितो विभाति कस्मै देवाय हविषा विधेम ॥ ६ ॥ आपो ह यद्बृहतीर्विश्वमायन्गर्भं दधाना जनयन्तीरग्निम्। ततो देवानां समवर्ततासुरेकः कस्म देवाय हविषा विधेम ॥ ७ ॥ यश्चिदापो महिना पर्यपश्यद्दक्षं दधाना जनयन्तीर्यज्ञम्। यो देवेष्वधि देव एक असीत्कस्मै देवाय हविषा

---

६. यं क्रंदसी—क्रंदसी = स्तुतिं कुर्वंत्यौ द्यावापृथिव्यौ। अवसा = लोकस्य रक्षणेन हेतुना रक्षणार्थं। तस्तभाने = लब्धस्थैर्ये सत्यौ। रेजमाने = दीप्यमाने सत्यौ। यं = हिरण्यगर्भं। मनसा=बुद्ध्या। अभ्यैक्षेतां = आवयोर्महित्वं कृतमनेनेति बहुमानबुद्ध्या अपश्यतां। यत्राधि = यस्मिन्नाधारभूते प्रजापतौ। सूरः सूर्यः। उदितः = उदयं प्राप्तः सन्। विभाति। तस्मै कस्मै देवाय हविषा विधेम ॥ ६ ॥

७. आपो ह यत्—बृहतीः = बृहत्यः महत्यः। अग्निं = उपलक्षणया वियदादिभूतानि। जनयंतीः = जनयंत्यः। गर्भं = ब्रह्मांडस्य गर्भीभूतं हिरण्यगर्भं। दधानाः = धारयंत्यः। आपो ह = आप एव। विश्वमायन् = सर्वं जगद्व्याप्नुवन्। यत् = यस्माद्धेतोः। ततः = हिरण्यगर्भात्। देवानामसुः = प्राणभूतः। एकः वायुः समवर्तत। तस्मै कस्मै देवाय हविषा विधेम ॥ ७ ॥

विधेम ॥ ८ ॥ मा नो हिंसीज्जनिता यः पृथिव्या यो वा दिवं सत्यधर्मा जजान। यश्चापश्चन्द्रा बृहतीर्जजान कस्मै देवाय हविषा विधेम ॥ ९ ॥ प्रजापते न त्वदेतान्यन्यो विश्वा जातानि परि ता बभूव। यत्कामास्ते जुहुमस्तन्नो अस्तु वयं स्याम पतयो

---

८. यश्चिदापः—यज्ञं = अग्निष्टोमादियज्ञं। जनयंतीः = उत्पादयंतीः। वैदिकाग्निसंपादनानंतरं तदंगं यज्ञं कुर्वाणाः। दक्षं = प्रजापालने समर्थं प्रजापतिं हिरण्यगर्भं तदंतर्यामिणं विष्णुं च। दधानाः = हृदये धारयित्रीः। आपः = प्रलयकालीना अपः। महिना = महिम्ना स्वमाहात्म्येन। यश्चित् = योऽपि ब्रह्मा। पर्यपश्यत् = परितो दृष्टवान्। यश्च देवेषु अधि = अधिक एव आसीत्। तस्मै कस्मै देवाय हविषा विधेम ॥ ८ ॥

९. मा नो हिंसीत्—सः = प्रजापतिः। नः = अस्मान्। मा हिंसीत् = मा बाधतां। यः पृथिव्याः = अधस्तनसप्तलोकानां। जनिता = जनयिता स्रष्टा। ॥५८॥
यो वा = यश्च। सत्यधर्मा = अवितथजगद्धारणादिकर्मवान्। दिवः = उपरितनसप्तलोकान्। जजान =सृष्टवान्। यश्च बृहतीः = महतीः। चंद्राः = आह्लादिनीः। अपः = उदकानि। जजान। तस्मै कस्मै देवाय हविषा विधेम ॥ ९ ॥

र॒यी॒णां ॥ १० ॥ वसुं॒ न[*] चि॒त्रमं॑हसं गृ॒णीषे वा॒मं शेव॒मति॑थिमद्वि॒षेण्यं॑ । स रा॑सते शु॒रुधो॑ वि॒श्वधा॑यसो॒ ऽग्निर्होता॑ गृ॒हप॑तिः सु॒वीर्यं॑ ॥ ११ ॥ जु॒षा॒णो अ॑ग्ने॒ प्रति॑ हर्य मे॒ वचो॒ विश्वा॑नि वि॒द्वान्व॒युना॑नि सुक्रतो । घृत॑निर्णि॒ग्ब्रह्म॑णे गा॒तुमेर॑य॒ तव॑ दे॒वा अ॑जनय॒न्ननु॑ व्र॒तं ॥ १२ ॥ स॒प्त धामा॑नि परि॒यन्नम॑र्त्यो॒ दाश॑द्दा॒शुषे॑ सु॒कृते॑ मामहस्व । सु॒वीरे॑ण र॒यिणा॑ ऽग्ने स्वा॒भुवा॒ यस्त॒ आन॑ट् स॒मिधा॒ तं जु॑षस्व ॥ १३ ॥ य॒ज्ञस्य॑ के॒तुं प्र॑थ॒मं पु॒रोहि॑तं ह॒विष्म॑न्त ईळते स॒प्तवा॒जिनं॑ । शृ॒ण्वन्त॑म॒ग्निं घृ॒तपृ॑ष्ठमु॒क्षणं॑ पृ॒णन्तं॑ दे॒वं पृ॑ण॒ते सु॒वीर्यं॑ ॥ १४ ॥

---

१०. प्रजापते न त्वत्—हे प्रजापते । त्वत् = त्वत्तः । अन्यः = कश्चित् । एतानि = सत्यत्वेन प्रमितानि । जातानि = कार्यभूतानि । ता = तानि । विश्वा = विश्वानि भूतजातानि । न परिबभूव = तत्परिभूय स्थितो नाभूत् । ततोऽतिशयित-शक्तिमान्नाभूत् । तानि त्वमेव परिबभूविथेति भावः । त्वमेव तत्स्वामित्वेन वर्तस इति यावत् । वयं च । यत्कामाः = यत्फलं कामयमानाः संतः । ते = तुभ्यं त्वदर्थं । जुहुमः = हवींषि प्रयच्छामः । तत् = फलं । नः = अस्माकं । अस्तु = भवतु । तथा वयं रयीणां = धनानां । पतयः = ईश्वराः । स्याम = भवेम ॥ १० ॥

[*] वसुं न चित्रमित्यादिपंचर्चानां सर्वानुक्रमण्यामग्निसूक्तत्वेन परिगणनात्कथमासां हिरण्यगर्भपरत्वं इति चेत् । एतस्य समाधानं वक्ष्यमाणबळित्थासूक्ते द्रष्टव्यं ॥ मंत्रार्थः ग्रंथांतरादवगंतव्यः ।

द्वास- त्वं दूतः प्रथमो वरेण्यः सहूयमानो अमृताय मत्स्व । त्वां मर्जयन्मरुतो दाशुषो गृहे त्वां प्रति-
॥५९॥ स्तोमेभिर्भृगवो विरुरुचुः ॥ १५ ॥ पुनः प्राणायामः । ओं ब्रह्मणे हृदयाय नमः इत्यादि मंत्राः
पंचांगन्यासः । ऋष्यादिन्यासः । ध्यायेन्निषण्णमजमच्युतनाभिपद्मे प्रोद्यद्दिवाकरसमूहनिकाशमग्र्यं । मातृप्रकारकरमुत्तमकांतिमद्भिर्वक्त्रैः सृजंतमखिलैः परमार्थविद्याः । श्री हिरण्यगर्भांतर्यामिपरमात्मप्रेरणया श्री हिरण्यगर्भांतर्यामिपरमात्मप्रीत्यर्थं श्री हिरण्यगर्भसूक्तमंत्रजपः संपूर्णः । प्रत्यृचं तर्पणं । इति श्री हिरण्यगर्भमंत्रः ॥ ४१ ॥

## अथ श्रीपंचाक्षरहिरण्यगर्भमंत्रः ॥ ४२ ॥

श्रीगुरुभ्यो नमः । एकादशस्थाने श्रीहिरण्यगर्भाय नमः । ॐ ❀ ब्रह्मणे नमः ❀ ॐ । इति मंत्रेण प्राणायामः । ओं ब्रह्मणे हृदयाय नमः । ओं धात्रे शिरसे स्वाहा । ओं विरिंचाय शिखायै वौषट् । ओं अजाय कवचाय हुं । ओं पद्मजाय ॥५९॥

---

९५. मंत्रोद्धारः—स्वयमुद्देशनतिमांस्तस्य पंचाक्षरो मनुः । अर्थः—स्वयं=ब्रह्मा । उद्देशः = चतुर्थ्यंतः । नतिमान् = अंते नतिशब्दार्थकनमःशब्दयुतः । तथाच ब्रह्मणे नमः इति । पंचाक्षरो मंत्रः ।

अस्त्राय फट् । इति दिग्बंधः । अस्य श्रीपंचाक्षरहिरण्यगर्भमंत्रस्य भृगुर्ऋषिः शिरसि । पंक्तिश्च्छंदः मुखे । श्री हिरण्यगर्भांतर्गतपरमात्मा देवता हृदये । जपे विनियोगः । ध्यानं—ध्यायेन्निषण्णमजमच्युतनाभिपद्मे प्रोद्यद्दिवाकरसमूहनिकाशमय्यं । मातृमकारकरमुत्तमकांतिमद्भिर्वक्त्रैः सृजंतमखिलैः परमार्थविद्याः ॥ श्री हिरण्यगर्भांतर्यामिपरमात्मप्रेरणया श्री हिरण्यगर्भांतर्यामिपरमात्मप्रीत्यर्थं पंचाक्षरहिरण्यगर्भमंत्रजपं करिष्ये ॥ ॐ ❀ ब्रह्मणे नमः ❀ ॐ । इति मंत्रजपः । पुनः प्राणायामः । पंचांगन्यासः ऋष्यादिन्यासः ध्यानं च । श्रीहिरण्यगर्भांतर्यामिपरमात्मप्रेरणया श्रीहिरण्यगर्भांतर्यामिपरमात्मप्रीत्यर्थं पंचाक्षरहिरण्यगर्भमंत्रजपः संपूर्णः । ॐ ❀ ब्रह्मणे नमः ❀ ॐ । ब्रह्माणं तर्पयामि ॥ इति श्री पंचाक्षरहिरण्यगर्भमंत्रः ॥ ४२ ॥

## अथ अष्टाक्षरहिरण्यगर्भमंत्रः[९६] ॥ ४३ ॥

श्रीगुरुभ्यो नमः । एकादशस्थाने श्री हिरण्यगर्भाय नमः ॐ ❀ हिरण्यगर्भाय

---

९६. मंत्रोद्धारः—स्वयमेवापरोऽष्टार्णस्तादृशः परिकीर्तितः । अर्थः—स्वयमेव = हिरण्यगर्भशब्द एव । तादृशः = उद्देशानतिमान् । हिरण्यगर्भाय नमः । इति अष्टार्णः = अष्टाक्षरः । अपरः = पूर्वोक्तादन्यः । मनुः=मंत्रः । परिकीर्तितः ।

द्वास- ॥६०॥

नमः ❁ ॐ । इति मंत्रेण प्राणायामः । ॐ ब्रह्मणे हृदयाय नमः । ओं धात्रे शिरसे स्वाहा । ओं विरिंचाय शिखायै वौषट् । ॐ अजाय कवचाय हुं । ओं पाद्माय अस्त्राय फट् । इति दिग्बंधः । अस्य श्रीअष्टाक्षरहिरण्यगर्भमंत्रस्य भृगुर्ऋषिः शिरसि । गायत्री च्छंदः मुखे । हिरण्यगर्भांतर्यामिपरमात्मा देवता हृदये । जपे विनियोगः । ध्यानं—ध्यायेन्निषण्णमजमच्युतनाभिपद्मे प्रोद्यद्दिवाकरसमूहनिकाशमग्र्यं । मातृप्रकारकरमुत्तमकांतिमद्भिर्वक्त्रैः सृजंतमखिलैः परमार्थविद्याः ॥ श्री हिरण्यगर्भांतर्गतपरमात्मप्रेरणया श्री हिरण्यगर्भांतर्गतपरमात्मप्रीत्यर्थं अष्टाक्षरहिरण्यगर्भमंत्रजपं करिष्ये । ॐ ❁ हिरण्यगर्भाय नमः ❁ ॐ । इति मंत्रजपः । पुनः प्राणायामः । पंचांगन्यासः ऋष्यादिन्यासः ध्यानं च । श्री हिरण्यगर्भांतर्यामिपरमात्मप्रेरणया श्री हिरण्यगर्भांतर्यामिपरमात्मप्रीत्यर्थं अष्टाक्षरहिरण्यगर्भमंत्रजपः संपूर्णः । ॐ ❁ हिरण्यगर्भाय नमः ❁ ॐ । श्रीहिरण्यगर्भं तर्पयामि ॥ इति श्री अष्टाक्षरहिरण्यगर्भमंत्रः ॥ ४२ ॥

प्रति- मंत्राः

॥६०॥

## ॥ अथ मुख्यवायुमंत्रः ॥ ४४ ॥

(अथवा प्राणाग्निनामकमुख्यप्राणमंत्रः ॥)

श्रीगुरुभ्यो नमः। एकादशस्थाने प्राणाग्निनामकमुख्यप्राणांतर्गतपरमात्मने नमः। प्राणाय नमः इतिवा। ॐ भूः। ॐ भुवः। ॐ स्वः। ॐ महः। ॐ जनः। ॐ तपः। ॐ सत्यं। ॐ तत्स॑वि॒तुर्वरे॑ण्यं॒ भर्गो॑ दे॒वस्य॑ धीमहि। धियो॒ यो नः॑ प्रचो॒दया॑त्।

---

१७. मंत्रोद्धारः—बलाद्यं भृगुणा दृष्टं प्राणाग्नेः सूक्तमुच्यते। प्राणाद्यैः पंचभिस्तस्याप्यंगान्युक्तानि सूरिभिः। अर्थः—बळाद्यं = बट् इति पदं आद्यं यस्य तत्। पंचदश र्चं सूक्तं प्राणाग्नेः प्राणश्चासावग्निश्च प्राणाग्निः। तस्य सूक्तमुच्यते मुख्यप्राणस्य मंत्ररूपमित्यर्थः। प्राणाद्यैः पंचभिः पदैः। चतुर्थ्यंतैः। पंचांगानि। अत्रेदमवश्यमवधेयं—बळित्थेति सूक्तस्य सर्वानुक्रमण्यामग्निसूक्तत्वेन परिगणनात्कथं तस्य वायुपरत्वमिति चेदुच्यते। अपकृष्टेष्वग्न्यादिषूत्कृष्टानां वाय्वादीनां नियामकतया स्थितत्वेन वायुप्रतिपादकताया अविरोधात्। किंच सर्वानुक्रमण्युक्तमेवांगीकार्यमिति न नियमः। अन्यथा (तथात्वे) अग्निर्मूर्धादिव इत्यादीनामपि सर्वानुक्रमण्यामाग्नेयत्वादिना पठितत्वात् स्मृतिकाराद्युक्ता मंगळादिग्रहपरताऽपि न स्यात्। किंच अनुक्रमण्यां अग्निशब्दं प्राणाग्निपरतयाऽपि व्याख्यातुं शक्यं। प्राणाग्नय एवैतस्मिन्पुरे जाग्रतीति श्रुतेः।

द्वास- ओमापो ज्योतीरसोऽमृतं ब्रह्म भूर्भुवः स्वरोम् । इति दशतारकयुतगायत्र्या वा प्राणायामः। प्रति-
॥६१॥ ॐ प्राणाय हृदयाय नमः। ॐ अपानाय शिरसे स्वाहा। ओं व्यानाय शिखायै मंत्राः
वौषट्। ओं उदानाय कवचाय हुं। ओं समानाय अस्त्राय फट्। इति दिग्बंधः। अस्य
श्रीत्रयोदशर्चस्य प्राणाग्निनामकमुख्यप्राणसूक्तस्य भृगुर्ऋषिः शिरसि। अंत्ये त्रिष्टुभौ
शेषा जगत्यः मुखे। प्राणाभ्यंतर्गतप्राणाग्निनामकपरमात्मा देवता हृदये। जपे विनियोगः।
ध्यानं—उद्यद्रविप्रकरसंनिभमच्युतांके स्वासीनमस्य नुतिनित्यवचःप्रवृत्तिं। ध्या-
येद्गदाभयकरं सुकृतांजलिं तं प्राणं यथेष्टतनुमुन्नतकर्मशक्तिं॥ प्राणाग्निनामकमुख्य-
प्राणांतर्गततन्नामकपरमात्मप्रेरणया परमात्मप्रीत्यर्थं प्राणाग्निनामकमुख्यप्राणसूक्तमंत्रजपं

---

९८. ध्यानश्लोकार्थः--उद्यद्रविप्रकरसंनिभं = उद्यदादित्यप्रकृष्टरश्मिभिः सदृशं।
उद्यद्रविसमूहसदृशं वा। स्वासीनं = सुष्ठु आसीनं। अस्य = अच्युतस्य। नुतिरूपं =
स्तुतिरूपं। यन्नित्यवचः = वेदवाक्यं। तस्य प्रवृत्तिर्यस्मात् सः तं। गदाभयकरं =
ताभ्यां युक्तहस्तं। सुकृतांजलिं = सुष्ठु कृता मुकुलीकृता अंजलिः संहतकरयुगलं येन ॥६१॥
तं। प्राणं = प्रकृष्टचेष्टकं। यथेष्टतनुं = इष्टं इच्छा। भावे क्तः। इष्टमनतिक्रम्य स्थिता
तनुर्यस्य तं। कामरूपमित्यर्थः। उन्नतकर्मशक्तिं = उत्कृष्टजगद्धारणादिसामर्थ्योपेतं।
ध्यायेत्॥

करिष्ये ॥ ओं * बळित्था तद्वपुषे धायि दर्शतं देवस्य भर्गः सहसो यतो जनि ।
यदीमुप ह्वरते साधते मतिर्ऋतस्य धेना अनयंत सस्रुतः ॥ १ ॥ पृक्षो वपुः पितुमान्नित्य आशये द्वितीयमा सप्तशिवासु मातृषु । तृतीयमस्य वृषभस्य दोहसे दशप्रमतिं जनयंत योषणः ॥ २ ॥ निर्यदीं बुध्नान्महिषस्य वर्पस ईशानासः शवसा क्रंत सूरयः ।

---

१. बळित्था—सहसः = ओजोबलरूपस्य । देवस्य = क्रीडादिगुणसंपन्नस्य । वायोः यत् मूलरूपं बट् = बलात्मकं । दर्शतं = ज्ञानरूपं । भर्गः = (भृ) जगद्भरणं (ग) गमनं तद्वत् । तत् = रूपं । इत्था = इत्थंभूतमेव । न पुनरन्यथेत्यर्थः । वपुषे = रूपत्रयावताराय । यतः = यस्मात् भगवता । धायि = अधायि । निहितं = धृतं प्रेरितं । तस्मात् जनि = अजनि अवतीर्णं । यद्वा यतः = वायोः । भगवान्व्यक्तोऽभूत्तस्य वायोरिति संबंधः । प्रथमावतारस्वरूपमाह । यदीमिति । यदीं = यदेव । मतिः = हनुमदाख्यं प्रथमं रूपं । उपह्वरते = रामस्य समीपे तिष्ठति । साधते = रामकार्याणि साधयति । तेन रूपेण = हनुमता । ऋतस्य = सत्यरूपस्य रामस्य । सस्रुतः । अमृतस्रावयुक्ताः । धेनाः = वाचः । अनयंत = अनीयंत सीतां प्रतीति शेषः ॥ १ ॥

२. द्वितीयावतारं प्रस्तौति पृक्षोवपुः—द्वितीयं वपुः = भीमाख्यं = भीमः । पृक्षः = पृतनाक्षयकारी । पितुमान् = अन्नवान् । बहुभुगिति यावत् । नित्यः = नित्यं ।

द्वास यदीमनु प्रदिवो मध्व आधवे गुहा संतं मातरिश्वा मथायति ॥ ३ ॥ प्रयत्पितुः प्रति-
॥६२॥ परमान्नीयते पर्या पृक्षुधो वीरुधो दंसु रोहति ॥ उभा यदस्य जनुषं यदिन्वत आदि- मंत्राः

---

सप्तशिवासु मातृषु = परममंगलासु सप्तसु मातृषु प्रमाणभूतासु ऋगादिषु । आशये = शेते ऋगर्थनिर्णयाय तान्विचारयतीत्यर्थः। अनेन द्वितीयावतारवाचकभीमशब्दार्थ उक्तो भवति। तृतीयावतारस्वरूपमाह। तृतीयमिति। अस्य वृषभस्य = श्रेष्ठस्य वायोः। तृतीयं वपुः। दोहसे = ज्ञानदोहनाय। दशप्रमतिं = पूर्णप्रज्ञनामकं [मध्वाचार्यान्] योषणः = नार्यः मध्यगेहभट्टाचार्यस्य भार्या। गुरुपत्नीत्वाद्बहुवचनं। जनयंत = अजनयंत ॥ २ ॥

३. निर्यदीं—बुध्नात् = ज्ञानरूपात्। यत् ईं = यस्मादेव। महिषस्य = महितषड्गुणस्य हरेः। वर्पसः = वरणीयत्वात्पालकत्वाद्वर्पोनामकान् गुणान्। ईशानासः = रुद्राद्या देवाः। सूरयः = अन्ये ज्ञानिनश्च। शवसा = सुखेन। निराकंत = ज्ञातवंतः। तत्तृतीयं वपुरिति पूर्वेण संबंधः। यदीमिति। यदीं = य एव। प्रदिवः = प्रकृष्टप्रकाशरूपः। मध्वः = आनंदतीर्थाख्यः। मातरिश्वा = वायुः। गुहासंतं = जीवेश्वरैक्यं वदद्भिर्गूहितमपि सर्वोत्तमत्वेन संतं हरिं। आधवे = आसमंतात्पतित्वे। मथायति = ॥६२॥ मथ्नाति। शास्त्राण्यालोड्य विचार्य निश्चित्य विष्णुरेवसर्वोत्तम इति शिष्येषु प्रथयति च ॥ ३ ॥

यविष्ठो अभवद्घृणा शुचिः ॥ ४ ॥ आदिन्मातॄराविशद्यास्वा शुचिरहिंस्यमान उर्विया । वि वावृधे ॥ अनु यत्पूर्वा अरुहत्सनाजुवो नि नव्यसीष्ववरासु धावते ॥ ५ ॥

---

४. प्रयत्पितुः—यत् = रूपत्रयं । पितुः = स्वोत्पादकात् । परमात् = उत्तमाद्विष्णोः । (विष्णुना) प्रणीयते = प्रकर्षेण प्रेर्यते । पृक्षुधः = प्रश्नरूपान् । वीरुधः = स्तंबादीन् । दंसु = दंतेषु । पर्यारोहति = चर्वितवच्छकलीकरोतीत्यर्थः । उभेति । यत् = यस्मात् । (च) अस्य जनुषं = जन्मावतारं । उभा = उभौ लक्ष्मीनारायणौ । इन्वतः = प्रेरयतः । तस्मात् । घृणाशुचः = कृपया शुद्धः । स आदित् = आभ्यां लक्ष्मीनारायणाभ्यामेव । यविष्ठः = अवरः । नत्वन्येभ्यः । अभवदित्यर्थः ॥ ४ ॥

५. आदिन्मातॄः—तस्य वायोः गर्भसंबंधनिमित्तदुःखलेशोऽपि नास्तीत्याह । आदिति । यतो वायुरादित् = प्रकृतलक्ष्मीनारायणप्रेरणादेव । मातॄः (मातरं) आविशत् = न पुनरस्य गर्भवासादिनिमित्तं विक्रमास्तीति भावः । यासु = मातृषु (मातरि) । आशुचिः = आसमंताच्छुचित्वमेव । उर्वियेति । उर्विया = उत्कृष्टया गर्भवासपीडया । अहिंस्यमानः = अबाध्यमानः । विवावृधे = विशेषेणाभिवृद्धोऽभूदित्यर्थः । पूर्वं सप्तशिवासु मातृष्वित्युक्त—तत्र विशेषमाह । अन्विति । सनाजुवः = सनातनं भगवंतं जुषंते प्रतिपादयंतीति सनाजुवः । पूर्वाः ऋगाद्याः आरुहदिति यत् । तत् अनु = क्रमादेव उपक्रमादिलिंगैः क्रमेणैव ऋगादिवेदचतुष्टयार्थं विचारयामासेत्यर्थः । नव्यसीषु =

द्वास- आदिद्धोतारं वृणते दिविष्टिषु भगमिव पपृचानास ऋंजते ॥ देवानयत्क्रत्वा मज्मना पुरुष्टुतो प्तत-
॥६३॥ मर्तं शंसं विश्वधावेति धायसे ॥ ६ ॥ वि यदस्थाद्यजतो वातचोदितो ह्वारो न वक्वा मंत्राः
जरणा अनाकृतः । तस्य पत्मन्दक्षुषः कृष्णजंहसः शुचिजन्मनो रज आ व्यध्वनः ॥७॥
रथो न यातः शिक्वभिः कृतो द्यामंगेभिररुषेभिरीयते । आदस्य ते कृष्णासो दक्षि सूरयः
शूरस्येव त्वेषथादीषते वयः ॥ ८ ॥ त्वया ह्यग्ने वरुणो धृतव्रतो मित्रः शाशद्रे अर्यमा
सुदानवः । यत्सीमनु क्रतुना विश्वथा विभुररान्न नेमिः परिभूरजायथाः ॥ ९ ॥
त्वमग्ने शशमानाय सुन्वते रत्नं यविष्ठ देवतातिमिन्वसि । तं त्वा नु नव्यं सहसो
युवन्वयं भगं न कारे महिरत्न धीमहि ॥ १० ॥ अस्मे रयिं न स्वर्थं दमूनसं भगं दक्षं
न पपृचासि धर्णसिं । रश्मींरिव यो यमति जन्मनी उभे देवानां शंसमृत आ च सुक्रतुः

---

पौरुषेयत्वेन नूतनासु अपि । अवरासु = प्रमाणतया श्रेष्ठासु त्रिषु इतिहासपुराणपंच-
रात्राख्यासु मातृषु । निधावते = उपक्रमादिपर्यालोचनं विनैव शीघ्रमेवार्थं विचारयती- ॥६३॥
त्यर्थः ॥ ९ ॥

९९. अयं मंत्रः बळित्थातद्वपुषे धायीत्यारभ्य पंचऋगात्मक एवेति बहवः । अतोऽन्यासामष्टानां ऋचामर्थोऽत्र नोच्यते ।

॥ ११ ॥ उत नः सुप्रोत्माजीराश्वो होता मंद्रः शृणवच्चंद्ररथः । स नो नेषन्नेषतमैरमूरोग्निर्वामं सुवितं वस्यो अच्छ ॥ १२ ॥ अस्ताव्यग्निः शिमीवद्भिरर्कैः साम्राज्याय प्रतुरं दधानः । अमी च ये मघवानो वयं च मिहं न सूरो अति निष्टतन्युः ॥ १३ ॥ पुनः प्राणायामः । ओं प्राणाय हृदयाय नमः इत्यादिपंचांगन्यासः । ऋष्यादिन्यासः । उद्यद्रविप्रकरसंनिभमच्युतांके स्वासीनमस्य नुतिनित्यवचःप्रवृत्तिं । ध्यायेद्गदाभयकरं सुकृतांजलिं तं प्राणं यथेष्टतनुमुन्नतकर्मशक्तिं । इति ध्यानं । प्राणाग्निनामकमुख्यप्राणांतर्गततन्नामकश्रीपरमात्मप्रेरणया श्रीपरमात्मप्रीत्यर्थं प्राणाग्निनामकमुख्यप्राणसूक्तमंत्रजपः संपूर्णः । प्रत्यृचं तर्पणं । प्राणाग्निनामकमुख्यप्राणांतर्गतं तन्नामकपरमात्मानं तर्पयामि । इति [1]बैंळित्थासूक्तमंत्रः ॥ ४४ ॥

---

१००. एवमेव वेदिषदे प्रियधामाय सुद्युते इत्यादीन्यनेकानि सूक्तानि मुख्यप्राणपराणि संति । तानि च पैठीनसीनारायणाचार्यैः मध्वमंत्रार्थमंजर्यां व्याख्यातानि द्रष्टव्यानि ।

द्वास- प्रति-

॥६४॥ मंत्राः

# अथ पंचाक्षरप्राणमंत्रः[101] ॥ ४५ ॥

श्रीगुरुभ्यो नमः। एकादशस्थाने प्राणाय नमः। ॐ ❀ प्राणाय नमः ❀ ॐ। इति मंत्रेण प्राणायामः। ओं प्राणाय हृदयाय नमः। ओं अपानाय शिरसे स्वाहा। ओं व्यानाय शिखायै वौषट्। ओं उदानाय कवचाय हुं। ओं समानाय अस्त्राय फट्। इतिदिग्बंधः। अस्य श्री प्राणमंत्रस्य भृगुर्ऋषिः शिरसि। पंक्तिश्छंदः मुखे। प्राणनामकमुख्यप्राणांतर्गतश्रीनारायणो देवता हृदये। जपे विनियोगः। ध्यानं— उद्यद्रविप्रकरसन्निभमच्युतांके स्वासीनमस्य नुतिनित्यवचःप्रवृत्तिं। ध्यायेद्गदाभयकरं सुकृतांजलिं तं प्राणं यथेष्टतनुमुन्नतकर्मशक्तिं ॥ प्राणनामकमुख्यप्राणांतर्गत श्रीनारायण-प्रेरणया प्राणनामकमुख्यप्राणांतर्गतश्रीनारायणप्रीत्यर्थं पंचाक्षरप्राणमंत्रजपं करिष्ये।

---

१०१. प्राणादिमंत्रपंचकोद्धारः—प्राणाद्याः पंच मंत्राश्च तस्य देवस्य वाचकाः। उच्यते हरिरप्येतैः साक्षान्नारायणादिकः। अर्थः—प्राणापानाद्याः पृथक् पंच मंत्राश्च॥ ॥६४॥
तस्य देवस्य = वायुदेवस्य ॥ एतैः = पंचभिर्मंत्रैः। नारायणादिकः = नारायण वासुदेव संकर्षण प्रद्युम्ना निरुद्धाख्यपंचस्वरूपः। हरिरेव साक्षात् प्राणापानाद्यंतर्गतः प्राणापानादिनामक एव। उच्यते।

ॐ ❀ प्राणाय नमः ❀ ॐ । इति मंत्रजपः । पुनः प्राणायामः । पंचांगन्यासः । ऋष्यादिन्यासः ध्यानं च । प्राणनामकमुख्यप्राणांतर्गतश्रीनारायणप्रेरणया श्रीनारायणप्रीत्यर्थं पंचाक्षरप्राणमंत्रजपः संपूर्णः ॥ ॐ ❀ प्राणाय नमः ❀ ॐ । प्राणं तर्पयामि । इति प्राणमंत्रः ॥ ४५ ॥

## अथ षडक्षरअपानमंत्रः ॥ ४६ ॥

श्रीगुरुभ्यो नमः । ११ स्थाने अपानाय नमः । ॐ ❀ अपानाय नमः ❀ ॐ इति मंत्रेण प्राणायामः । ओं प्राणाय हृदयाय नमः । ओं अपानाय शिरसे स्वाहा । ओं व्यानाय शिखायै वौषट् । ओं उदानाय कवचाय हुं । ओं समानाय अस्त्राय फट् । इति दिग्बंधः । अस्य श्रीषडक्षरअपानमंत्रस्य भृगुर्ऋषिः शिरसि । गायत्रीच्छंदः मुखे । अपाननामकमुख्यप्राणांतर्गतवासुदेवो देवता हृदये। जपे विनियोगः । ध्यानं— उद्यद्रविप्रकरसन्निभमच्युतांके स्वासीनमस्य नुतिनित्यवचःप्रवृत्तिं । ध्यायेद्गदाभयकरं सुकृतांजलिं तं प्राणं यथेष्टतनुमुन्नतकर्मशक्तिं । अपाननामकमुख्यप्राणांतर्गतश्रीवासुदेवप्रेरणया श्रीवासुदेवप्रीत्यर्थं अपानमंत्रजपं करिष्ये । ॐ ❀ अपानाय

द्वास- नमः ❀ ॐ । पुनः प्राणायामः पंचांगन्यासः ऋष्यादिन्यासः ध्यानं च । अपान- प्रति-
६५॥ नामकश्रीवासुदेवप्रेरणया अपाननामकश्रीवासुदेवप्रीत्यर्थं षडक्षरअपानमंत्रजपः संपूर्णः । मंत्राः
ॐ ❀ अपानाय नमः ❀ ॐ । अपानं तर्पयामि ॥ इति अपान-
मंत्रः ॥ ४६ ॥

## अथ पंचाक्षरव्यानमंत्रः ॥ ४७ ॥

श्रीगुरुभ्यो नमः । ११ स्थाने श्रीव्यानाय नमः । ॐ ❀ व्यानाय नमः ❀ ॐ । इति मंत्रेण प्राणायामः । ॐ प्राणाय हृदयाय नमः । ॐ अपानाय शिरसे स्वाहा । ॐ व्यानाय शिखायै वौषट् । ॐ उदानाय कवचाय हुं । ओं समानाय अस्त्राय फट् । इति दिग्बंधः । अस्य श्रीपंचाक्षरव्यानमंत्रस्य भृगुर्ऋषिः शिरसि । पंक्तिश्छंदः मुखे । व्याननामकमुख्यप्राणांतर्गतश्रीसंकर्षणो
देवता हृदये । जपे विनियोगः । ध्यानं—उद्यद्रविप्रकरसन्निभमच्युतांके स्वासी- ॥६५॥
नमस्य नुतिनित्यवचःप्रवृत्तिं । ध्यायेद्गदाभयकरं सुकृतांजलिं तं प्राणं यथेष्टतनुमुन्नत-
कर्मशक्तिं । व्याननामकमुख्यप्राणांतर्गतश्रीसंकर्षणप्रेरणया श्रीसंकर्षणप्रीत्यर्थं पंचाक्षर-

व्यानमंत्रजपं करिष्ये । ॐ ❁ व्यानाय नमः ❁ ॐ । इति मंत्रजपः । पुनः प्राणायामः पंचांगन्यासः ऋष्यादिन्यासः ध्यानं च । व्याननामकश्रीसंकर्षणप्रेरणया व्याननामकश्रीसंकर्षणप्रीत्यर्थं व्यानमंत्रजपः संपूर्णः । ॐ ❁ व्यानाय नमः ❁ ॐ । व्यानं तर्पयामि । इति व्यानमंत्रः ॥ ४७ ॥

## अथ षडक्षरउदानमंत्रः ॥ ४८ ॥

श्रीगुरुभ्यो नमः । ११ स्थाने उदानाय नमः । ॐ ❁ उदानाय नमः ❁ ॐ । इति मंत्रेण प्राणायामः । ओं प्राणाय हृदयाय नमः । ओं अपानाय शिरसे स्वाहा । ओं व्यानाय शिखायै वौषट् । ओं उदानाय कवचाय हुं । ओं समानाय अस्त्राय फट् इति दिग्बंधः । अस्य श्रीउदानमंत्रस्य भृगुर्ऋषिः शिरसि । गायत्रीच्छंदः मुखे । उदाननामकश्रीप्रद्युम्नो देवता हृदये । जपे विनियोगः । ध्यानं—उद्यद्रविप्रकरसन्निभमच्युतांके स्वासीनमस्य नुतिनित्यवचःप्रवृत्तिं । ध्यायेद्गदाभयकरं सुकृतांजलिं तं प्राणं यथेष्टतनुमुन्नतकर्मशक्तिं । उदाननामकश्रीप्रद्युम्नप्रेरणया श्रीप्रद्युम्नप्रीत्यर्थं षडक्षरउदानमंत्रजपं करिष्ये । ॐ ❁ उदानाय नमः ❁ ॐ ।

द्वास- इति मंत्रजपः। पुनः प्राणायामः । पंचांगन्यासः ऋष्यादिन्यासः ध्यानं च । प्रति-
।६६।। उदाननामकश्रीप्रद्युम्नप्रेरणया श्रीप्रद्युम्नप्रीत्यर्थं षडक्षरउदानमंत्रजपः संपूर्णः । मंत्राः
ॐ ❁ उदानाय नमः ❁ ॐ । उदानं तर्पयामि । इति उदानमंत्रः ॥ ४८ ॥

## अथ षडक्षरसमानमंत्रः ॥ ४९ ॥

श्रीगुरुभ्यो नमः। ११ स्थाने समानाय नमः। ॐ ❁ समानाय
नमः ❁ ॐ । इति मंत्रेण प्राणायामः। ओं प्राणाय हृदयाय नमः। ओं
अपानाय शिरसे स्वाहा। ओं व्यानाय शिखायै वौषट्। ओं उदानाय कवचाय हुं।
ओं समानाय अस्त्राय फट् । इति दिग्बंधः । अस्य श्रीसमानमंत्रस्य भृगुर्ऋषिः
शिरसि । गायत्रीच्छंदः मुखे । श्रीसमानो देवता हृदये । जपे विनियोगः।
ध्यानं—उद्यद्रविप्रकरसन्निभमच्युतांके स्वासीनमस्य नुतिनित्यवचःप्रवृत्तिं । ध्याये-
द्वराभयकरं सुकृतांजलिं तं प्राणं यथेष्टतनुमुन्नतकर्मशक्तिम् । समाननामकश्रीअनिरुद्धप्रे- ।।६६।।
रणया श्रीअनिरुद्धप्रीत्यर्थं षडक्षरसमानमंत्रजपं करिष्ये । ॐ ❁ समानाय
नमः ❁ ॐ । पुनः प्राणायामः । पंचांगन्यासः ऋष्यादिन्यासः ध्यानं च ।

समाननामकश्रीअनिरुद्धप्रेरणया श्रीअनिरुद्धप्रीत्यर्थं समानमंत्रजपः संपूर्णः । ॐ ❁ समानाय नमः ❁ ॐ । समानं तर्पयामि । इति समानमंत्रः ॥ ४९ ॥ [प्राणादिपंचमंत्रा वराहादिमंत्रवत् केवलविष्णुमंत्रा अपि भवंति] ॥

---

## [अथ अष्टादशाक्षरश्रीहनुमन्मंत्रः ॥

[तंत्रसारभावार्थचंद्रिकास्थः]

श्रीगुरुभ्यो नमः । ११ स्थाने श्रीहनुमते नमः । ओं * नमो भगवते आंजनेयाय महाबलाय स्वाहा * ओं । इति प्राणायामः । ओं आंजनेयाय हृदयाय नमः । ओं रुद्रमूर्तये शिरसे स्वाहा । ओं वायुपुत्राय शिखायै वौषट् । ओं अग्निवर्णाय कवचाय हुं । ओं रामदूताय नेत्राभ्यां वषट् । ओं ब्रह्मास्त्रनिवारणाय अस्त्राय फट् । इति दिग्बंधः । अस्य श्री अष्टादशाक्षरहनुमन्मंत्रस्य श्रीरामचंद्र ऋषिः शिरसि । धृतिश्छंदः मुखे । हनुमदंतर्गतश्रीरामचंद्रो देवता हृदये । जपे विनियोगः । ध्यानं—दहनतप्तसुवर्णसमप्रभं भयहरं हृदये विहितांजलिं । श्रवणकुंडलशोभिमुखांबुजं नमत वानरराजमिहाद्भुतं । हनुमदंतर्गतश्रीरामचंद्रप्रेरणया श्रीरामचंद्रप्रीत्यर्थं अष्टादशाक्षरश्रीहनुमन्मंत्रजपं करिष्ये । ओं * नमो भगवते आंजनेयाय महाबलाय स्वाहा * ओं । इति मंत्रजपः । उपसंहारार्थं पुनः मंत्रेण प्राणायामः षडंगन्यासः ऋष्यादिन्यासः ध्यानं च ।]

[हनुमदंतर्गतश्रीरामचंद्रप्रेरणया श्रीरामचंद्रप्रीत्यर्थं अष्टादशाक्षरश्रीहनुमन्मंत्रजपः संपूर्णः। मंत्रमुच्चार्य तर्पणं ॥ यः कपीशं सदा गेहे पूजयेज्जपतत्परः। आयुर्लक्ष्म्यौ प्रवर्धेते तस्य नश्यंत्युपद्रवाः। भूतप्रेतपिशाचादिभयं नास्ति कदाचन ॥

इति अष्टादशाक्षरश्रीहनुमन्मंत्रः ॥

[अथ तंत्रांतरोक्ताः अवतारत्रयमंत्राः]

# अथ सप्ताक्षरश्रीहनुमन्मंत्रः।

श्रीगुरुभ्यो नमः। एकादशस्थाने श्रीहनुमते नमः। ओं * हं हनुमते नमः * ओं। इति प्राणायामः। ओं हं हृदयाय नमः। ओं हं शिरसे स्वाहा। ओं नुं शिखायै वौषट्। ओं मं कवचाय हुं। ओं तें नेत्राभ्यां वषट्। ओं नमः अस्त्राय फट्। इति दिग्बंधः। अस्य श्रीसप्ताक्षरहनुमन्मंत्रस्य भृगुर्ऋषिः शिरसि। गायत्री च्छंदः मुखे। हनुमदंतर्गत-श्रीरामचंद्रो देवता हृदये। जपे विनियोगः। ध्यानं—ध्यायेद्बालदिवाकरद्युतिनिभं देवारिदर्पापहं देवेंद्रप्रमुखैः प्रशस्तयशसं देदीप्यमानं रुचा। सुग्रीवादिसमस्तवानरयुतं सुव्यक्ततत्वप्रियं संरक्तारुणलोचनं पवनजं पीतांबरालंकृतं ॥ श्रीहनुमदंतर्गतश्रीरामचंद्रप्रेरणया श्रीरामचंद्रप्रीत्यर्थं सप्ताक्षरहनुमन्मंत्रजपं करिष्ये। ओं * हं हनुमते नमः * ओं। इति मंत्रजपः। उपसंहारार्थं पुनः प्राणायामः षडंगन्यासः ऋष्यादिन्यासः ध्यानं च।]

[हनुमदंतर्गतश्रीरामचंद्रप्रेरणया श्रीरामचंद्रप्रीत्यर्थं सप्ताक्षरहनुमन्मंत्रजपः संपूर्णः।
मंत्रमुक्त्वा श्रीहनुमंतं तर्पयामि । इति सप्ताक्षरश्रीहनुमन्मंत्रः ॥

# अथ षडक्षरश्रीभीममंत्रः ।

श्रीगुरुभ्यो नमः। ११ स्थाने श्रीभीमसेनाय नमः। ओं * भीं भीमाय नमः * ओं। इति मंत्रेण प्राणायामः। ओं भीं हृदयाय नमः। ओं भीं शिरसे स्वाहा। ओं मां शिखायै वौषट् । ओं यं कवचाय हुं। ओं नं नेत्राभ्यां वषट्। ओं मः अस्त्राय फट्। इति दिग्बंधः। अस्य श्रीषडक्षरभीममंत्रस्य भृगुर्ऋषिः शिरसि। गायत्री छंदः मुखे। श्रीभीमो देवता हृदये। जपे विनियोगः। ध्यानं—आदित्यकोटिद्युतिमुग्रतेजसं किरीट-केयूरमहाविभूषणं । ध्यायेद्गदाभयकरामितबाहुवक्त्रं भीमं महाभयक(ह)रं सुरवैरिशत्रुं। भीमांतर्गतश्रीकृष्णप्रेरणया श्रीकृष्णप्रीत्यर्थं श्रीभीमषडक्षरमंत्रजपं करिष्ये। ओं * भीं भीमाय नमः * ओं। इति मंत्रजपः। पुनः प्राणायामः षडंगन्यासः ऋष्यादिन्यासः ध्यानं च। श्रीभीमांतर्गतश्रीकृष्णप्रेरणया श्रीकृष्णप्रीत्यर्थं भीमषडक्षरमंत्रजपः संपूर्णः।]
मंत्रमुच्चार्य तर्पणं। इति षडक्षरश्रीभीममंत्रः ॥

# अथ षडक्षरश्रीमध्वमंत्रः ॥

श्रीगुरुभ्यो नमः। ११ स्थाने श्रीमध्वाय नमः। ओं * मं मध्वाय नमः * ओं।]

# अथ वैदिकब्रह्माणीमंत्रः ॥ ५० ॥



श्रीगुरुभ्यो नमः। ११ स्थाने ब्रह्माण्यै नमः। ओं * गौरीर्मिमाय सलिलानि तक्षत्येकपदीद्विपदीसाचतुष्पदी । अष्टापदी नवपदीबभूवुषी सहस्राक्षरापरमे व्योमन

---

[इति मंत्रेण प्राणायामः। ओं मं हृदयाय नमः। ओं मं शिरसे स्वाहा। ओं ध्वां शिखायै वौषट्। ओं यं कवचाय हुं। ओं नं नेत्राभ्यां वषट्। ओं मः अस्त्राय फट्। इति दिग्बंधः। अस्य श्रीषडक्षरमध्वमंत्रस्य भृगुर्ऋषिः शिरसि। गायत्री छंदः मुखे। श्री मध्वो देवता हृदये। जपे विनियोगः। ध्यानं—नवार्ककोटिद्युतिसुंदराभं सुवर्णकौपीनभृतं वरिष्ठं। प्रबोधमुद्राभयपद्महस्तं नमामि विद्याधिपमादिमध्वं ॥ श्रीमध्वांतर्गतश्रीवेदव्यासप्रेरणया श्रीवेदव्यासप्रीत्यर्थं षडक्षरश्रीमध्वमंत्रजपं करिष्ये। ओं * मं मध्वाय नमः * ओं। इति मंत्रजपः। पुनः प्राणायामः षडंगन्यासः ऋष्यादिन्यासः ध्यानं च। श्रीमध्वांतर्गतश्रीवेदव्यासप्रेरणया श्रीवेदव्यासप्रीत्यर्थं षडक्षरश्रीमध्वमंत्रजपः संपूर्णः। मंत्रमुक्त्वा तर्पणं। इति षडक्षरश्रीमध्वमंत्रः॥]

२. मंत्रोद्धारः—ब्रह्माण्या अपि भारत्या गौरीर्यस्त इति श्रुतौ। मंत्रौ दीर्घतमोदृष्टौ सर्वाभीष्टप्रदायकौ। अर्थः—गौरीर्मिमायेति श्रुतिः ब्रह्माण्याः = तद्देवताका। यस्ते स्तनः शशयः इति श्रुतिः भारत्याः = भारतीदेवताका। इति मंत्रौ वेदे श्रुतौ = विख्यातौ। इमौ मंत्रौ। दीर्घतमोनामकऋषिणा दृष्टौ।

* ओं । इति मंत्रेण प्राणायामः । ओं ब्रह्माण्यै नमः इति वा । ओं गौरीर्मिमाय सलिलानि तक्षति हृदयाय नमः । एकपदी द्विपदी सा चतुष्पदी शिरसे स्वाहा । अष्टापदी नवपदी बभूवुषी शिखायै वौषट् । सहस्राक्षरा परमे व्योमन् कवचाय हुं । गौरीर्मिमाय सलि० परमे व्योमन् इति समस्तमंत्रेण अस्त्राय फट् । इति दिग्बंधः । अस्य श्री एकर्चस्य गौरीर्मिमायेति ब्रह्माणीमंत्रस्य दीर्घतमा ऋषिः शिरसि । जगती च्छंदः मुखे । ब्रह्माणी देवता हृदये । जपे विनियोगः । ध्यानं—उद्यद्दिवा-

---

३. अंगन्यासोद्धारः—पादैर्न्यस्तैः समस्तैश्च तदंगानि विदो विदुः । अर्थः पूर्वमुक्तः । तत्तन्मंत्राणां पादाद्यैरित्यर्थः ।

४. ध्यानश्लोकार्थः—उद्यद्दिवाकरसमूहनिभां । स्वभर्तुः=चतुर्मुखस्य (अंके स्थितां) अभयसद्वरबाहुयुग्मां = अभयः = अभयमुद्रा । सद्वरः = अमोघवरमुद्रा । ताभ्यां युतं बाहुयुग्मं यस्यास्तां । तत्वदृशये = तत्वज्ञानार्थं । या मुद्रा तां । वरपुस्तकं च = आत्मविद्यालिपिविलसत्पुस्तकं च । दोर्युग्मकेन = अन्यबाहुद्वयेन । दधतीं । तथाच—दक्षोर्ध्वकरे अभयमुद्रा । वामोर्ध्वकरे वरमुद्रा । दक्षाधःकरे ज्ञानमुद्रा । वामाधःकरे पुस्तकं चेति बाहुचतुष्टययुक्तां । आत्मविद्यां = ब्रह्मविद्याभिमानिनीं ब्रह्माणीं स्मरत ।

५. मंत्रार्थः—गौरीः = गौरी = जगद्गुरोर्ब्रह्मणो भार्या । सरस्वती । सलि-

द्वास- करसमूहनिभां स्वभर्तुरंके स्थितामभयसद्वरबाहुयुग्मां । मुद्रां च तत्वदृशये वरपुस्तकं च प्रति-
॥६९॥ दोर्युग्मकेन दधतीं स्मरतात्मविद्यां । ब्रह्माण्यंतर्गतश्रीपरमात्मप्रेरणया श्रीपरमात्म- मंत्राः
प्रीत्यर्थं ब्रह्माणीमंत्रजपं करिष्ये । ओं * गौरीर्मिमाय सलिलानि तक्षत्येकपदी द्विपदी सा चतुष्पदी । अष्टापदी नवपदी बभूवुषी सहस्राक्षरा परमे व्योमन् * ओं । [ऋग्वेदे २ । ३ । २२] इति मंत्रजपः ॥ पुनः प्राणायामः । पंचांगन्यासः ऋष्यादिन्यासः ध्यानं च । ब्रह्माण्यंतर्गतश्रीपरमात्मप्रेरणया श्रीपरमात्मप्रीत्यर्थं ब्रह्माणीमंत्रजपः संपूर्णः । गौरीर्मिमायेति मंत्रमुक्त्वा ब्रह्माणीं तर्पयामि । इति वैदिकब्रह्माणीमंत्रः ॥ ५० ॥

---

लानि = सलिलोपलक्षितानि भूम्यादीनि पंचभूतानि । मिमाय = निर्ममे । तानि तक्षति = ब्रह्मांडादिकार्यरूपतया तनुत्वेन करोति । एकपदी = एकपादात्मकच्छंदोबद्धमंत्राभिमानिनी । द्विपदी = पादद्वयात्मकच्छंदोबद्धमंत्राभिमानिनी । तथा चतुष्पदी अष्टापदी ॥६९॥
नवपदी । सहस्राक्षरा = अनियताक्षरच्छंदोबद्धमंत्राभिमानिनी । बभूवुषी = भवितुमिच्छती सती । परमे = सर्वोत्तमे । व्योमन् = व्योमनि = विशेषेणगुणैरोतत्वाद्व्योमन्शब्दवाच्ये भगवति प्रतिपादकतया वर्तते इत्यर्थः ।

# अथ वैदिकभारतीमंत्रः ॥ ५१ ॥

श्रीगुरुभ्यो नमः । ११ स्थाने श्रीभारत्यै नमः । ओं * यस्ते॒ स्तनः॑ शश॒यो यो म॑यो॒भूर्येन॒ विश्वा॒ पुष्य॑सि॒ वार्या॑णि । यो र॑त्न॒धा व॑सु॒विद्यः सु॒दत्रः॒ सर॑स्वति॒ तमि॒ह धात॑वे कः * ओं । इति मंत्रेण प्राणायामः । ओं यस्ते॒ स्तनः॑ शश॒यो यो म॑यो॒भूः हृद-यायै नमः । ॐ येन॒ विश्वा॒ पुष्य॑सि॒ वार्या॑णि शिरसे स्वाहा । ॐ यो र॑त्न॒धा व॑सु॒विद्यः सु॒दत्रः॒ शिखायै वौषट् । सर॑स्वति॒ तमि॒ह धात॑वे कः कवचाय हुं । यस्ते॒ स्तनः॑ शश॒यो० धात॑वेकः अस्त्राय फट् । इति दिग्बंधः । अस्य श्री एकर्चस्य यस्ते स्तन इति भारतीमंत्रस्य दीर्घतमा ऋषिः शिरसि । त्रिष्टुप् च्छंदः मुखे । भारत्यंतर्गत-श्रीपरमात्मा देवता हृदये । जपे विनियोगः । ध्यानं—उद्यद्दिवाकरसमूहनिभां स्वभर्तुरंके स्थितामभयसद्वरबाहुयुग्मां । मुद्रां च तत्वदृशये वरपुस्तकं च दोर्युग्मकेन दधतीं स्मरतात्मविद्यां । श्रीभारत्यंतर्गतश्रीपरमात्मप्रेरणया श्रीपरमात्मप्रीत्यर्थं वैदिकभारती-

---

६. मंत्रोद्धारः—ब्रह्माणीमंत्रे उक्तः । ७. अंगन्यासमंत्रोद्धारोपि पूर्वोक्त एव ।

८. ध्यानश्लोकार्थः—स्वभर्तुः = वासुदेवस्य । शिष्टं गतं पूर्वध्यानश्लोकार्थेन ।

द्वास- मंत्रजपं करिष्ये। [ऋग्वेदे २। ३। २३] ॐ * यस्ते स्तनः शशयो यो मयोभूर्येन प्रति-
विश्वा पुष्यसि वार्याणि। यो रत्नधा वसुविद्यः सुदत्रः सरस्वति तमिह धातवे कः *
॥७०॥ ओं। इति मंत्रजपः। पुनः प्राणायामः पंचांगन्यासः ऋष्यादिन्यासः ध्यानं च। मंत्राः
भारत्यंतर्गतश्रीपरमात्मप्रेरणया श्रीपरमात्मप्रीत्यर्थं वैदिकभारतीमंत्रजपः संपूर्णः। मंत्रमुक्त्वा भारतीं तर्पयामि। इति भारतीऋङ्मंत्रः॥ ५१॥

## अथ पंचाक्षरब्रह्माणीमंत्रः॥ ५२॥

श्रीगुरुभ्यो नमः। ११ स्थाने ब्रह्माण्यै नमः। ॐ ❁ ब्रह्माण्यै नमः ❁ ॐ।

---

९. मंत्रार्थः—हे सरस्वति = भारति। शशयः = अतिशयितसुखकरः। ते यः स्तनः। मयोभूः = मयः मयस्य = सर्वप्रधानस्य हरेः। भूः = संनिधानपात्रभूतः। यद्वा (भिन्नं पदं) मयः = सर्वप्रधानः। भूः = पूर्णः गुणैरिति शेषः। त्वं येन = स्तनेन। सर्वा= सर्वाणि। वार्याणि = पुत्रत्वेन स्वीकर्तुं योग्यानि गरुडशेषरुद्रादिदेवजातानि। पुष्यसि = पुष्णासि रक्षसि। यः = स्तनः। रत्नधाः = नवरत्नमयमालाधरः। वसुवित् = सुवर्ण-
मयाभरणप्राप्तिमान्। सुदत्रः = सुष्ठुपिबद्देवादिदंतसंबंधवान्। सम्यग्दाता रक्षकश्चेति ॥७०॥
वा। तं = स्तनं। इह = देवादिजीवजातविषये। धातवे = धातुं रक्षितुं। अकः = अकरोः करोषि करिष्यसि चेत्यर्थः।

१०. मंत्रोद्धारः—स्वयमुद्देशनत्यंतौ मंत्रौ द्वावपरौ तयोः। अर्थः—उद्देशनत्यंतौ =

इति मंत्रेण प्राणायामः। ॐ ब्रं हृदयाय नमः। ॐ ह्मां शिरसे स्वाहा। ॐ ण्यैं शिखायै वौषट्। ॐ नं कवचाय हुं। ॐ मः अस्त्राय फट्। इति दिग्बंधः। अस्य श्रीपंचाक्षरब्रह्माणीमंत्रस्य दीर्घतमा ऋषिः शिरसि। पंक्तिश्छंदः मुखे। ब्रह्माण्यंतर्गतश्रीपरमात्मा देवता हृदये। जपे विनियोगः। ध्यानं—उद्यद्दिवाकरसमूहनिभां स्वभर्तुरंके स्थितामभयसद्वरबाहुयुग्मां। मुद्रां च तत्वदशये वरपुस्तकं च दोर्युग्मकेन दधतीं स्मरतात्मविद्यां। ब्रह्माण्यंतर्गतश्रीपरमात्मप्रेरणया श्रीपरमात्मप्रीत्यर्थं पंचाक्षरब्रह्माणीमंत्रजपं करिष्ये। ॐ ❁ ब्रह्माण्यै नमः ❁ ॐ। इति मंत्रजपः। पुनः प्राणायामः पंचांगन्यासः ऋष्यादिन्यासः ध्यानं च। ब्रह्माण्यंतर्गतश्रीपरमात्मप्रेरणया श्रीपरमात्मप्रीत्यर्थं पंचाक्षरब्रह्माणीमंत्रजपः संपूर्णः। ॐ ❁ ब्रह्माण्यै नमः ❁ ॐ.। ब्रह्माणीं तर्पयामि। इति पंचाक्षरब्रह्माणीमंत्रः॥ ५२ ॥

---

चतुर्थीनमःशब्दांतौ। तयोः = ब्रह्माणीभारत्योः। अपरौ मंत्रौ। तथाच—ब्रह्माण्यै नमः। भारत्यै नमः इति। तत्तद्वर्णैः पंचांगानि।

११. मंत्रार्थः—ब्रह्मभार्यात्वाद्ब्रह्माणी। नमोऽस्तु।

द्वास- प्रति- मंत्राः

# अथ पंचाक्षरभारतीमंत्रः[12] ॥ ५२ ॥

॥७१॥ श्रीगुरुभ्यो नमः। एकादशस्थाने भारत्यै नमः ॥ ॐ ❁ भारत्यै नमः ❁ ॐ। इति मंत्रेण प्राणायामः। ॐ भां हृदयाय नमः। ओं रं शिरसे स्वाहा। ॐ त्यैं शिखायै वौषट्। ओं नं कवचाय हुं। ओं मः अस्त्राय फट्। इति दिग्बंधः। अस्य श्रीपंचाक्षरभारतीमंत्रस्य दीर्घतमा ऋषिः शिरसि। पंक्तिश्छंदः मुखे। भारत्यंतर्गतश्रीपरमात्मा देवता हृदये। जपे विनियोगः। ध्यानं—उद्यद्दिवाकरसमूहनिभां स्वभर्तुरंके स्थितामभयसद्वरबाहुयुग्मां। मुद्रां च तत्त्वदशये वरपुस्तकं च दोर्युग्मकेन दधतीं स्मरतात्मविद्यां ॥ श्रीभारतीप्रेरणया श्रीभारतीप्रीत्यर्थं श्रीभारतीपंचाक्षरमंत्रजपं करिष्ये। ॐ ❁ भारत्यै[13] नमः ❁ ॐ। इति मंत्रजपः। पुनः प्राणायामः। पंचां-

---

१२. मंत्रोद्धारः न्यासोद्धारश्च पूर्वमंत्रे उक्तौ।

१३. मंत्रार्थः—रतत्वाद्भात्मके विष्णौ भरतो वायुः। तस्य पत्नी भारती। तस्यै नमः। ॥७१॥

“मंत्रा ह्येते हरिप्रीतिदायकाः सर्वकामदाः। इष्टं दैवं हरिः साक्षाल्लक्ष्मीर्भाग्यस्य देवता। गुरुर्ब्रह्माऽथ वायुर्वा विद्यादेव्यौ प्रकीर्तिते। तस्मादेते प्रिया विष्णोरंतरंगतया

गन्यासः ऋष्यादिन्यासः ध्यानं च । श्रीभारतीप्रेरणया श्रीभारतीप्रीत्यर्थं पंचाक्षर-भारतीमंत्रजपः संपूर्णः । ॐ ⊛ भारत्यै नमः ⊛ ॐ । श्रीभारतीं तर्पयामि । इति पंचाक्षरभारतीमंत्रः ॥ ५३ ॥

## अथ पंचाक्षरशिवमंत्रः ॥ ५४ ॥

श्रीगुरुभ्यो नमः । ११ स्थाने शिवांतर्गतश्रीसंकर्षणाय नमः । ॐ ⊛ नमः शिवाय ⊛ ॐ । इति मंत्रेण प्राणायामः ॥ ॐ नं हृदयाय नमः । ॐ मः

---

सदा । ज्ञेयाश्चैव प्रपूज्याश्च विष्णोः प्रीतिमभीप्सता । " अर्थः—देव्यौ = ब्रह्माणीभारत्यौ । विद्या = विद्याभिमानिन्यौ । तस्मादेते = लक्ष्म्यादयः पंच । विष्णोः प्रीतिं कामयमानेन (अवश्यं)ज्ञेयाः प्रपूज्याश्च ।

१४. मंत्रोद्धारः—उद्देशनतियुङ् मंत्रः स्वयमेव शिवस्य तु । अर्थः—उद्देशनतियुक् = चतुर्थीनमःशब्दाभ्यां युक्तः । स्वयं = शिवशब्द एव । शिवस्य मंत्रः = ज्ञेय इति शेषः । 'नमः शिवाय' इत्येव मंत्रः ।

१५. अंगन्यासोद्धारः—वर्णैरेतैस्तदंगानि वामदेवो मुनिः स्मृतः । अर्थः—एतैः = पंचभिः । वर्णैः । तदंगानि= तन्मंत्रस्य पंचांगानि । मुनिः = ऋषिः । वामदेवः = उपमन्युनामा ॥

द्वास- शिरसे स्वाहा । ॐ शिं शिखायै वौषट् । ॐ वां कवचाय हुं । ॐ यं प्रति-
॥७२॥ अस्त्राय फट् । इति दिग्बंधः । अस्य श्रीपंचाक्षरशिवमंत्रस्य वामदेव ऋषिः मंत्राः
शिरसि । पंक्ति[१६]छंदः मुखे । शिवांतर्यामिश्रीसंकर्षणो देवता हृदये । जपे विनियोगः । ध्यानं—ध्येयः पंच[१७]मुखो रुद्रः स्फटिकामलकांतिमान् । विद्युच्छुभ्रासितरजः श्यामान्यस्य मुखानि च । जटावबद्धेंदुकलः प्रियायुङ् नागभूषणः । शिवांतर्यामि-

---

१६. पंक्तिशब्दार्थविज्ञाने नहि चछंदसि संशयः । अर्थः—छंदः किमितिजिज्ञासायामाह-पंक्तिशब्दार्थविज्ञाने इति = तैत्तिरीयशाखोक्त "पंचाक्षरा पंक्तिः" इत्यस्य विज्ञाने सति । छंदसि विषये न संदेहो जायेतेति भावः ।

१७. ध्यानश्लोकार्थः—स्फटिकवदमलकांतियुक्तः । अस्य मुखानि = पंच । तानि । विद्युत् = अनेकवर्णोपेतं । शुभ्रं = धवलं । असितं = कृष्णं । रजः = रक्तवर्णं । श्यामं = इंद्रनीलमणिवर्णं । इत्येवं पंचवर्णयुक्तानीति भावः । जटावबद्धेंदुकलः—जटासु अवबद्धा इंदुकला अर्धचंद्रः यस्य स तथा । प्रियायुक् = प्रियया उमया युक्तः । नागभूषणः=नागाः कार्कोटकादयः भूषणानि यस्य स तथा । तंत्रांतरोक्तं ध्यानं—मूले कल्पद्रुमस्य ॥७२॥
द्रुतकनकनिभं चारुपद्मासनस्थं वामांकारूढगौरीनिबिडकुचभराभोगगाढोपगूढं । नानाकल्पोज्ज्वलांगं मृगपरशुवराभीतिहस्तं प्रसन्नं ध्यायेद्बालेंदुमौलिं गुहगजवदनाभ्यां समाश्लिष्टपार्श्वं ।

श्रीसंकर्षणप्रेरणया श्रीसंकर्षणप्रीत्यर्थं पंचाक्षरशिवमंत्रजपं करिष्ये। ॐ ❀ नमः शिवाय ❀ ॐ। इति मंत्रजपः। पुनः प्राणायामः पंचांगन्यासः ऋष्यादिन्यासः ध्यानं च। शिवांतर्यामिश्रीसंकर्षणप्रेरणया श्रीसंकर्षणप्रीत्यर्थं पंचाक्षरशिवमंत्रजपः संपूर्णः। ॐ ❀ नमः शिवाय ❀ ॐ। शिवं तर्पयामि। इति पंचाक्षर-शिवमंत्रः॥ ५४॥

---

१८. मंत्रार्थः—शिवाय = मंगलरूपाय ते नमोऽस्तु। अत्र कश्चिद्विशेषः—मंत्रेष्वेतेषु सर्वेषु वाच्यस्तारेण केशवः। अंतर्यामितया ध्येयः सर्वदेवेषु सर्वदा॥ अर्थः—एतेषु = उक्तवक्ष्यमाणमंत्रेषु। आद्यंतयोरध्याहृतेन तारेण = ओंकारेण। केशव एव वाच्यः॥

[तंत्रसारभावार्थचंद्रिकात उद्धृतः]

## [अथ दक्षिणामूर्तिमंत्रः॥ ५४—अ॥

श्रीगुरुभ्यो नमः। ११ स्थाने दक्षिणामूर्तये नमः। ओं * ओं नमो भगवते दक्षिणामूर्तये मह्यं मेधां प्रयच्छ स्वाहा * ओं। इति मंत्रेण प्राणायामः। ओं आं हृदयाय नमः। ओं ईं शिरसे स्वाहा। ओं ऊं शिखायै वौषट्। ओं ऐं कवचाय हुं।]

 

# अथ पार्वतीमंत्रः ॥ ५५ ॥

७३॥ श्रीगुरुभ्यो नमः । ११ स्थाने पार्वत्यै नमः । ॐ ❁ नमः शिवायै ❁ ॐ । मंत्राः

[ओं औं नेत्राभ्यां वषट् । ओं अः अस्त्राय फट् । इति दिग्बंधः । अस्य श्रीद्वाविंशाक्षरदक्षिणामूर्तिमंत्रस्य दक्षप्रजापति ऋषिः शिरसि । गायत्री च्छंदः मुखे । दक्षिणामूर्त्यंतर्गतः परमात्मा देवता हृदये । जपे विनियोगः । ध्यानं—स्फटिकरजतवर्णं मौक्तिकीमक्षमालाममृतकलशविद्याऽभीतिमुद्राः कराब्जैः । दधतमुरगकक्षं चंद्रचूडं त्रिणेत्रं विधृतविविधभूषं दक्षिणामूर्तिमीडे । श्रीदक्षिणामूर्तिप्रेरणया श्रीदक्षिणामूर्तिप्रीत्यर्थं द्वाविंशाक्षरदक्षिणामूर्तिमंत्रजपं करिष्ये । ओं * ओं नमो भगवते दक्षिणामूर्तये मह्यं मेधां प्रयच्छ स्वाहा * ओं । इति मंत्रजपः । पूर्ववत्प्राणायामः षडंगन्यासः ऋष्यादिन्यासः ध्यानं च । श्रीदक्षिणामूर्तिप्रेरणया श्रीदक्षिणामूर्तिप्रीत्यर्थं श्रीदक्षिणामूर्तिमंत्रजपः संपूर्णः । मंत्रमुच्चार्य तर्पणं । आदित्याभिमुखो भूत्वा द्वादशांजलिदानतः । स सर्वैश्वर्यतेजस्वी जायते नात्र संशयः । अयुतं प्रजपन्मंत्रं भूयसीं श्रियमाप्नुयात् । अपमृत्युहरो मंत्रो विषरोगनिवारणः । किमत्र बहुनोक्तेन ॥७३॥
विष्णुज्ञानप्रदर्शकः ।

इति दक्षिणामूर्तिमंत्रः ॥ ५४—-अ ॥]

१९. मंत्रोद्धारः—स एव वनितालिंगः पार्वत्या मनुरुच्यते । अर्थः—स एव =

इति मंत्रेण प्राणायामः। ओं नं हृदयाय नमः। ओं मः शिरसे स्वाहा। ओं शिं शिखायै वौषट्। ओं वां कवचाय हुं। ओं यैं अस्त्राय फट्। इति दिग्बंधः॥ अस्य श्रीपंचाक्षरपार्वतीमंत्रस्य वामदेव ऋषिः शिरसि। पंक्तिश्छंदः मुखे। पार्वत्यंतर्गत श्रीपरमात्मा देवता हृदये। जपे विनियोगः। ध्यानं—गौरी वरोंभयकरा ध्येया पीतांबरा च सा। पार्वत्यंतर्गतश्रीपरमात्मप्रेरणया श्रीपरमात्मप्रीत्यर्थं पार्वतीपंचाक्षरमंत्रजपं करिष्ये। ओं ❀ नमः शिवायै ❀ ओं। इति मंत्रजपः। पुनः प्राणायामः पंचांगन्यासः ऋष्यादिन्यासः ध्यानं च। पार्वत्यंतर्गतश्रीपरमात्मप्रेरणया श्रीपरमात्मप्रीत्यर्थं पार्वतीपंचाक्षरमंत्रजपः संपूर्णः। ओं ❀ नमः शिवायै ❀ ओं। पार्वतीं तर्पयामि। इति पार्वतीमंत्रः॥ ५५॥

---

उद्देशनतियुक्तः शिवशब्द एव। वनितालिंगः = स्त्रीलिंगश्चेत्। शिवायै नम इति पार्वत्या मनुः = मंत्रः उच्यते॥ अंगन्यासः पूर्वमंत्रवत्। यैं अस्त्राय फट् इति विशेषः।

२०. ध्यानश्लोकार्थः—गौरीः = गौरी = गौरवर्णा। वराभयकरा = वरमुद्राऽभयमुद्राभ्यां युक्तौ करौ यस्याः सा। तंत्रांतरोक्तं ध्यानं—गौरी वराभयकरा कोमलांगी सुमध्यमा। दिव्यपीतांबरधरा ध्येया सा भक्तिभाग्यदा॥

२१. मंत्रार्थः—मंगलकरत्वाच्छिवा। तस्यै नमः।

## अ[22]थ षडक्षरशेषमंत्रः ॥ ५६ ॥ प्रति-

श्रीगुरुभ्यो नमः । ११ स्थाने शेषाय नमः । ॐ ❀ शें शेषाय नमः मंत्राः ❀ ॐ । इति मंत्रेण प्राणायामः । ओं शें हृदयाय नमः । ओं शें शिरसे स्वाहा । ओं षां शिखायै वौषट् । ओं यं कवचाय हुं । ओं नं नेत्राभ्यां वषट् । ओं मः अस्त्राय फट् । इति दिग्बंधः । मंत्रस्थपदैर्वा न्यासः—ओं शें हृदयाय नमः । ओं शेषाय शिरसे स्वाहा । ओं नमः शिखायै वौषट् । ओं शें कवचाय हुं । ओं शेषाय नेत्राभ्यां वषट् । ओं नमः अस्त्राय फट् । इति दिग्बंधः । अस्य श्रीशेषषडक्षरमंत्रस्य सनत्कुमार ऋषिः शिरसि । गायत्री च्छंदः मुखे । शेषांतर्यामिश्रीसंकर्षणो देवता हृदये । जपे विनियोगः । ध्यानं—द[23]धानो हलसौनंदौ श्वेतवर्णः कृतांजलिः । सहस्रमूर्धाऽद्वितीयकर्णभूषः प्रिया-

---

२२. मंत्रोद्धारः—स्वयमुद्देशनत्यंतः पूर्वपूर्वः षडक्षरः । सनत्कुमारदृष्टोऽयं मंत्रः शेषस्य कामदः ॥ अर्थः - स्वयं = शेषशब्दः । उद्देशनत्यंतः = चतुर्थीनमःशब्दौ अंते यस्य स तथा । पूर्वपूर्वः = पूर्वाक्षरभूतबिंद्वतशेकारपूर्वः । तथा च शें शेषाय नम इति । ॥७४॥
अयं मंत्रः षडक्षरः ।

२३. ध्यानश्लोकार्थः—सौनंदशब्देन मुसलमुच्यते । सहस्रमूर्धा = सहस्रं मूर्धानो यस्य सः । अद्वितीयकर्णभूषः = न विद्यते द्वितीयकर्णभूषा यस्य सः । एककर्ण-

युतः । वनमाली नीलवासा ध्येयो विष्णोस्तु पृष्ठतः । श्रीशेषांतर्यामिसंकर्षणप्रेरणया श्रीशेषांतर्यामिश्रीसंकर्षणप्रीत्यर्थं षडक्षरशेषमंत्रजपं करिष्ये । ॐ ❁ शें शेषाय नमः ❁ ॐ । इति मंत्रजपः । पुनः प्राणायामः । षडक्षरन्यासः । षट् पदैर्वा न्यासः । ऋष्यादिन्यासः ध्यानं च । श्रीशेषांतर्यामिसंकर्षणप्रेरणया श्रीशेषांतर्यामिसंकर्षणप्रीत्यर्थं षडक्षरशेषमंत्रजपः संपूर्णः । ॐ ❁ शें शेषाय नमः ❁ ॐ । शेषं तर्पयामि । इति शेषमंत्रः ॥ ५६ ॥

## अथ पंचाक्षरगरुडमंत्रः ॥ ५७ ॥

श्रीगुरुभ्यो नमः । ११ स्थाने गरुडाय नमः । ॐ ❁ क्षिप ॐ स्वाहा ❁ ॐ ॥ १ ॥ ॐ ❁ ॐ पक्षि स्वाहा ❁ ॐ ॥ २ ॥ ॐ ❁ ॐ

---

कुंडल इत्यर्थः । नवा एकेनाक्षरेणछन्दांसिवियन्तीत्येकाक्षरन्यूनता मूर्धाऽह्वितीयइत्यत्र । प्रिया = वारुणी । पृष्ठतः = पश्चाद्भागसेवकत्वेन ध्येयः ।

२४. शिनष्टीति शेषः । विशिष्टः उत्तम इत्यर्थः । तस्मै नमः ।

२५. मंत्रोद्धारः—व्यत्यस्तपक्षितारौ च स्वाहांतो गारुडो मनुः । अर्थः—व्यत्यस्तपक्षितारौ = व्यत्यस्तः व्युत्क्रमेण पठितः पक्षिः पक्षिशब्दः व्यत्यस्तपक्षिः

द्वास- क्षिप स्वाहा ❀ ॐ ॥ ३ ॥ इति वा प्राणायामः। ओं क्षिपँ हृदयाय प्रति-
नमः। ओं ओं शिरसे स्वाहा। ओं स्वाहा शिखायै वौषट्। ओं स्वाहा मंत्राः
॥७५॥ कवचाय हुं। ओं ओं नेत्राभ्यां वषट्। ओं क्षिप अस्त्राय फट्। इति
दिग्बंधः। अस्य श्रीगरुडपंचाक्षरमंत्रस्य कश्यप ऋषिः शिरसि। पंक्तिश्छंदः

---

'क्षिप' इति शब्दः। स च तार ओंकारश्च व्यत्यस्तपक्षितारौ। एतौ मंत्रस्यादौ प्रयोक्तव्यौ। स्वाहांतः = स्वाहा इति शब्दः अंते पठनीयः तथा च 'क्षिप ओं स्वाहा' इति मंत्रो भवति। अयं प्रथमः पक्षः॥ १॥ पक्षिशब्द ओंशब्दयोरेव व्यत्यास इति पक्षे पक्षिश्च तारश्च पक्षितारौ। व्यत्यस्तौ च तौ पक्षितारौ च तथा। 'ओं पक्षि स्वाहा' इति भवति। अयं द्वितीयः पक्षः॥२॥ पक्षिशब्दोंशब्दयोः पक्षिशब्दस्थवर्णयोः ओमित्यस्यच व्यत्यास इति पक्षे 'ओं क्षिप स्वाहा' इति तृतीयः पक्षः॥३॥ एवं त्रिप्रकारोऽयं मनुः=मंत्रः गारुडः गरुडदेवताकः। तथापि 'क्षिप ओं स्वाहा' इत्येव बहुमांत्रिकसंमतः पक्षः। तत्र प्रमाणं = नृसिंहो माधवारूढो लोहितो निगमादिमः। कृशानुभार्या पंचार्णो मनुर्विषहरः परः इति। अर्थः—नृसिंहः क्षकारः। माधवः इकारः। तेनारूढः क्षि इति। लोहितः ॥७५॥
पकारः। क्षिप इति निगमादिमः ओंकारः। कृशानुभार्या अग्निपत्नी स्वाहा। तथाच 'क्षिप ओं स्वाहा' इति।

२६. प्रथमं पक्षमवलंब्यैतन्मंत्रस्थैः त्रिभिः पदैः. क्रमेण व्युत्क्रमेण च षडंगन्यासः।

मुखे। गरुडांतर्यामिश्रीलक्ष्मीनारायणो देवता हृदये। जपे विनियोगः। ध्यानं—
गरुडः सर्वदा ध्येयः सुधापूर्णं हिरण्मयं। दधानः कुंभमभयं पीतशुक्लारुणो हरित्।
कृष्णश्चाजानुतो नाभेः कंठात्कादंत एव च। प्रियायुक्पुरतो विष्णोः पक्षतुंडसमन्वितः।

---

२७. ध्यानश्लोकार्थः—सुधापूर्णं हिरण्मयं कुंभं = कलशं। दधानः। दक्षिणकरे इति शेषः। अभयं = अभयमुद्रां वामकरे दधानः। आजानुतः=पादमारभ्य जानुपर्यंतं। पीतः पीतवर्णः। आनाभेः = जानुमारभ्य नाभिपर्यंतं शुक्लः। आ कंठात् नाभिमारभ्य कंठपर्यंतं अरुणः। आ कात् = कंठमारभ्य शिरःपर्यंतं। हरित् = हरिद्वर्णः। अंते = शिरसोंते। कृष्णः = कृष्णवर्णः। प्रियायुक् = भार्यया सौपर्ण्या युक्तः। पक्षाभ्यां तुंडेन मुखेन चंच्वा च समन्वितः। विष्णोः पुरतः कृतांजलिः स्थितः। सेवकत्वेन स्थित इत्यर्थः। जपफलमाह = जंगमस्थावरविषहृत् = जंगमाः = वृश्चिकसर्पप्रभृतयः। स्थावराः = वत्सनाभिगौरीपाषाणप्रभृतयः। तेषां विषहृत्। अयं मंत्रः सर्वकामदः = न केवलं विषपरिहारकः। सर्वेष्टप्रदश्च। तंत्रांतरोक्तं ध्यानं = तप्तस्वर्णनिभं फणींद्रनिकरैः कॢप्तांगभूषं प्रभुं स्मर्तॄणां शमयंतमुग्रमखिलं नृणां विषं तत्क्षणात्। चंच्वग्रप्रचलद्भुजंगमभयं पाण्योर्वरं बिभ्रतं पक्षोच्चारितसामगीतिममलं श्रीपक्षिराजं भजे॥ अथान्यच्च ध्यानं = अमृतकलशहस्तं कांतिसंपूर्णदेहं सकलविबुधवंद्यं वेदशास्त्रैरचिंत्यं। विविधसुलभपक्षैर्धूयमानांडगोलं सकलविषविनाशं चिंतयेत्पक्षिराजं॥

जंगमस्थावरविषहृदयं सर्वकामदः । गरुडांतर्गतश्रीलक्ष्मीनारायणप्रेरणया श्रीलक्ष्मीनारायणप्रीत्यर्थं पंचाक्षरगरुडमंत्रजपं करिष्ये । ॐ ❀ क्षिप ॐ स्वाहा ❀ ॐ । इत्येको मंत्रः । ओं * ओं क्षिप स्वाहा * ओं । इत्यपरः । ओं * ओं पक्षि स्वाहा * ओं । इति तृतीयो मंत्रः । एतेष्वन्यतमो जप्यः । पुनः प्राणायामः । षडंगन्यासः । ऋष्यादिन्यासः ध्यानं च । गरुडांतर्गतश्रीलक्ष्मीनारायणप्रेरणया श्रीलक्ष्मीनारायणप्रीत्यर्थं पंचाक्षरगरुडमंत्रजपः संपूर्णः । ओं * क्षिप ओं स्वाहा * ओं । गरुडांतर्गतश्रीलक्ष्मीनारायणं तर्पयामि । इति पंचाक्षरगरुडमंत्रः ॥ ५७ ॥

## अथ दशलोकपालमंत्राः ॥

### तेषु प्रथमः पंचाक्षर इंद्रमंत्रः ॥ ५८ ॥

श्रीगुरुभ्यो नमः । ११ स्थाने इंद्राय नमः । ओं लां ❀ इंद्राय नमः ❀ ओं ।

---

२८. इंद्रादीनां दशानां लोकपालानां समष्टिमंत्रोद्धारः-मंत्राश्च लोकपालानां नमोऽताः सर्वकामदाः । अर्थः—लोकपालानां = इंद्रादिब्रह्मांतानां दशानां नामवाचकाः शब्दाः नमोंताश्चेत् । त एव लोकपालानां मंत्राः = तत्तन्मंत्रा भवंति । तथा च इंद्राय नमः इत्यादयः । सर्वकामदाः = ते सर्वे प्रत्येकं सर्वाभीष्टदाः । ॥७६॥

इति मंत्रेण प्राणायामः । ओं इं हृदयाय नमः । ओं द्रां शिरसे स्वाहा । ओं यं शिखायै वौषट् । ओं नं कवचाय हुं । ओं मः अस्त्राय फट् । इति दिग्बंधः । अस्य श्रीइंद्रपंचाक्षरमंत्रस्य ब्रह्मा कश्यपो वा ऋषिः शिरसि । पंक्तिश्छंदः मुखे । इंद्रांतर्गतश्रीपरमात्मा देवता हृदये । जपे विनियोगः । ध्यानं—इंद्रस्त्वैरावतारूढः[29] सहस्राक्षः शचीपतिः । स्वर्णवर्णो वज्रपाणिः साभयस्त्वमरेश्वरः । इंद्रांतर्गतश्रीपरमात्मप्रेरणया श्रीपरमात्मप्रीत्यर्थं इंद्रमंत्रजपं करिष्ये । ॐ लां ❀ इंद्राय[30] नमः ❀ ॐ । इति मंत्रजपः । पुनः प्राणायामः पंचांगन्यासः ऋष्यादिन्यासः ध्यानं च । इंद्रांतर्गत-

---

२९. ध्यानश्लोकार्थः—साभयः = अभयमुद्रायुतसव्यहस्तः । शिष्टं स्पष्टं । समष्टिध्यानोद्धारः—पीतरक्तासितश्वेतरक्तशुक्लाश्च वर्णतः । सप्रियाः साभया वज्रशक्तिदंडासिपाशिनः । गदाकुमुदशूलर्ष्टिखड्गिनो भूषणोज्ज्वलाः । अर्थः—इंद्रादयः प्रत्येकं पीतादिवर्णयुक्ताः । सप्रियाः = सर्वे स्वस्वपत्नीभिः सहिताः । साभयाः = सर्वे दक्षिणहस्ते अभयमुद्रायुताः । सर्वे अपरस्मिन्हस्ते प्रत्येकं वज्राद्यायुधवंतः । असिः = खड्गः ।

३०. इंद्राय = परमैश्वर्ययुक्ताय । अत्र इंद्राय नम इत्येव मंत्रः । लां इत्यादीनि बीजानि मांत्रिकसंप्रदायादागतानीति ज्ञेयं । मंत्रबीजं च लं रं क्षं इत्यादि ह्रस्वांत इति केचित् ।

श्रीपरमात्मप्रेरणया श्रीपरमात्मप्रीत्यर्थं इंद्रमंत्रजपः संपूर्णः। ॐ लां ❀ इंद्राय नमः ❀ ॐ । इन्द्रं तर्पयामि। इति इंद्रमंत्रः ॥ ५८ ॥

## अथ पंचाक्षरः अग्निमंत्रः ॥ ५९ ॥

श्रीगुरुभ्यो नमः। ११ स्थाने अग्नये नमः। ॐ रां ❀ अग्नये नमः ❀ ॐ । इति मंत्रेण प्राणायामः। ॐ अं हृदयाय नमः । ॐ ग्निं शिरसे स्वाहा। ओं यें शिखायै वौषट्। ओं नं कवचाय हुं। ओं मः अस्त्राय फट्। इति दिग्बंधः । अस्य श्रीपंचाक्षराग्निमंत्रस्य ब्रह्मा कश्यपो वा ऋषिः शिरसि। पंक्तिश्छंदः मुखे । अग्न्यंतर्गतश्रीपरशुरामो देवता हृदये । जपे विनियोगः। ध्यान—अग्निस्तु स्वर्णवर्णांगः सप्तार्चिः सप्तहस्तयुक्। स्वाहासखो[३१] मेषवाहोऽभयशक्तिस्रुवादियुक् । अग्न्यंतर्गतश्रीपरशुरामप्रेरणया श्रीपरशुरामप्रीत्यर्थं पंचाक्षराग्निमंत्रजपं करिष्ये । ॐ रां ❀ अग्नये नमः ❀ ॐ। इति मंत्रजपः। पुनः प्राणायामः। पंचांगन्यासः । ऋष्यादिन्यासः । ध्यानं च । अग्न्यंतर्गतश्रीपरशुरामप्रेरणया

३१. स्वाहासखः = स्वाहेत्यग्निपत्न्याः नाम। स्वाहायाः सखा स्वाहासखः।

श्रीपरशुरामप्रीत्यर्थं पंचाक्षराग्निमंत्रजपः संपूर्णः । ॐ रां ❀ अग्नये नमः ❀ ॐ । अग्निं तर्पयामि । इत्यग्निमंत्रः ॥ ५९ ॥

## अथ पंचाक्षरयममंत्रः ॥ ६० ॥

श्रीगुरुभ्यो नमः । ११ स्थाने यमाय नमः । ॐ यां ❀ यमाय नमः ❀ ॐ । इति मंत्रेण प्राणायामः । ओं यं हृदयाय नमः । ओं मां शिरसे स्वाहा । ओं यं शिखायै वौषट् । ओं नं कवचाय हुं । ओं मः अस्त्राय फट् । इति दिग्बंधः । अस्य श्रीपंचाक्षरयममंत्रस्य ब्रह्मा कश्यपो वा ऋषिः शिरसि । पंक्तिश्छंदः मुखे । यमांतर्गतश्रीपरमात्मा देवता हृदये । जपे विनियोगः । ध्यानं—ईलाप्रियो[३२] दंडधरो यमो महिषवाहनः । साभयः कृष्णवर्णश्च लोककर्मफलप्रदः । यमांतर्गत-श्रीपरमात्मप्रेरणया श्रीपरमात्मप्रीत्यर्थं पंचाक्षरयममंत्रजपं करिष्ये । ॐ यां ❀ यमाय नमः ❀ ॐ । इति मंत्रजपः । पुनः प्राणायामः । पंचांगन्यासः । ऋष्यादिन्यासः

---

३२. इलेति यमभार्यायाः श्यामलाया नाम । स च यमः सर्वलोकानां तत्तत्कर्मानुसारिफलप्रदः ।

द्वास- ध्यानं च। यमांतर्गतश्रीपरमात्मप्रेरणया श्रीपरमात्मप्रीत्यर्थं पंचाक्षरयममंत्रजपः संपूर्णः। प्रति-
||७८|| ॐ यां ❁ यमाय नमः ❁ ॐ। यमं तर्पयामि। इति यममंत्रः ॥ ६० ॥ मंत्राः

## अथ षडक्षरनिर्ऋतिमंत्रः ॥ ६१ ॥

श्रीगुरुभ्यो नमः। ११ स्थाने निर्ऋतये नमः। ॐ क्षां ❁ निर्ऋतये नमः ❁ ॐ। इति मंत्रेण प्राणायामः। ओं निं हृदयाय नमः। ओं ऋं शिरसे स्वाहा। ओं तं शिखायै वौषट्। ओं यें कवचाय हुं। ओं नं नेत्राभ्यां वषट्। ओं मः अस्त्राय फट्। इति दिग्बंधः। अस्य श्रीषडक्षरनिर्ऋतिमंत्रस्य ब्रह्मा कश्यपो वा ऋषिः शिरसि। गायत्री च्छंदः मुखे। निर्ऋत्यंतर्गतश्रीपरमात्मा देवता हृदये। जपे विनियोगः। ध्यानं—अभयासिधरो नीलो निर्ऋतिर्नरवाहनः। ऊर्ध्वकेशो विरूपाक्षः करालः कालिका[३३]प्रियः। निर्ऋत्यंतर्गतश्रीपरमात्मप्रेरणया श्रीपरमात्मप्रीत्यर्थं षडक्षरनिर्ऋतिमंत्रजपं करिष्ये। ॐ क्षां ❁ निर्ऋतये नमः ❁ ओं। ||७८||
इति मंत्रजपः। पुनः प्राणायामः षडंगन्यासः ऋष्यादिन्यासः ध्यानं च। निर्ऋत्यं-

३३. कालिकेति निर्ऋतेर्भार्या।

तर्गतश्रीपरमात्मप्रेरणया श्रीपरमात्मप्रीत्यर्थं षडक्षरनिर्ऋतिमंत्रजपः संपूर्णः । ॐ क्षां ❁ निर्ऋतये नमः ❁ ॐ । निर्ऋतिं तर्पयामि । इति निर्ऋतिमंत्रः ॥ ६१ ॥

## अथ षडक्षरवरुणमंत्रः ॥ ६२ ॥

श्रीगुरुभ्यो नमः । ११ स्थाने वरुणाय नमः । ॐ वां ❁ वरुणाय नमः ❁ ॐ । इति मंत्रेण प्राणायामः । ओं वं हृदयाय नमः । ओं रुं शिरसे स्वाहा । ओं णां शिखायै वौषट् । ॐ यं कवचाय हुं । ओं नं नेत्राभ्यां वषट् । ओं मः अस्त्राय फट् । इति दिग्बंधः । अस्य श्रीषडक्षरवरुणमंत्रस्य ब्रह्मा कश्यपो वा ऋषिः शिरसि । गायत्री च्छंदः मुखे । वरुणांतर्गतश्रीपरमात्मा देवता हृदये । जपे विनियोगः । ध्यानं—पाशाभयधरो रक्तभूषणः पद्मिनीपति[34]: । वरुणोंबुपतिः स्वर्णवर्णो मकरवाहनः । वरुणांतर्गतश्रीपरमात्मप्रेरणया श्रीपरमात्मप्रीत्यर्थं षडक्षरवरुण-मंत्रजपं करिष्ये । ॐ वां ❁ वरुणाय नमः ❁ ॐ । इति मंत्रजपः । पुनः प्राणायामः षडंगन्यासः ऋष्यादिन्यासः ध्यानं च । वरुणांतर्गतश्रीपरमात्मप्रेरणया

---

३४. पद्मिनी = वरुणभार्या ।

 

श्रीपरमात्मप्रीत्यर्थं वरुणषडक्षरमंत्रजपः संपूर्णः। ॐ वां ❀ वरुणाय नमः ❀ ॐ। वरुणं तर्पयामि। इति वरुणमंत्रः ॥ ६२ ॥

## अथ पंचाक्षरवायुमंत्रः ॥ ६३ ॥

श्रीगुरुभ्यो नमः। ११ स्थाने प्रवहनामकवायवे नमः। ओं यां ❀ वायवे नमः ❀ ओं। इति मंत्रेण प्राणायामः। ॐ वां हृदयाय नमः। ओं यं शिरसे स्वाहा। ओं वें शिखायै वौषट्। ओं नं कवचाय हुं। ओं मः अस्त्राय फट्। इति दिग्बंधः। अस्य श्रीपंचाक्षरवायुमंत्रस्य ब्रह्मा कश्यपो वा ऋषिः शिरसि। पंक्तिश्छंदः। मुखे। श्रीवाय्वंतर्गतश्रीपरमात्मा देवता हृदये। जपे विनियोगः। ध्यानं—प्राणरूपो हि जगतो वायुः कृष्णमृगासनः। गदाभयधरः श्यामो वर्णतो मोहिनीप्रियः[३५]। वाय्वं- तर्गतश्रीपरमात्मप्रेरणया श्रीपरमात्मप्रीत्यर्थं पंचाक्षरवायुमंत्रजपं करिष्ये। ॐ यां ❀ वायवे नमः ❀ ॐ। इति मंत्रजपः। पुनः प्राणायामः पंचांगन्यासः ऋष्या- दिन्यासः। ध्यानं च। वाय्वंतर्गतश्रीपरमात्मप्रेरणया श्रीपरमात्मप्रीत्यर्थं पंचाक्षर- ॥७९॥

---

३५. मोहिनी = प्रवहनामकवायोर्भार्या।

वायुमंत्रजपः संपूर्णः । ॐ यां ❀ वायवे नमः ❀ ॐ । वायुं तर्पयामि । इति वायुमंत्रः ॥ ६३ ॥

## अथ पंचाक्षरसोममंत्रः ॥ ६४ ॥

श्रीगुरुभ्यो नमः । ११ स्थाने सोमाय नमः । ॐ सां ❀ सोमाय नमः ❀ ॐ । इति मंत्रेण प्राणायामः । ओं सों हृदयाय नमः । ओं मां शिरसे स्वाहा । ओं यं शिखायै वौषट् । ओं नं कवचाय हु । ओं मः अस्त्राय फट् । इति दिग्बंधः । अस्य श्रीपंचाक्षरसोममंत्रस्य ब्रह्मा कश्यपो वा ऋषिः शिरसि । पंक्तिश्छंदः मुखे । सोमांतर्गतश्रीपरमात्मा देवता हृदये । जपे विनियोगः । ध्यानं—सोमं कुमुदसद्धस्तं साभयं हेमभूषणं । प्रियाँसहायं शुक्लाभं सुखदं चिन्तयेत्सुधीः । सोमांतर्गत-श्रीपरमात्मप्रेरणया श्रीपरमात्मप्रीत्यर्थं पंचाक्षरसोममंत्रजपं करिष्ये । ॐ सां ❀ सोमाय नमः ❀ ॐ । इति मंत्रजपः । पुनः प्राणायामः । पंचांगन्यासः ऋष्यादिन्यासः ।

---

३६. प्रिया = सोमभार्या रोहिणी ।

द्वास- ध्यानं च। सोमांतर्गतश्रीपरमात्मप्रेरणया श्रीपरमात्मप्रीत्यर्थं पंचाक्षरसोममंत्रजपः संपूर्णः। प्रति-

॥८०॥ ॐ सां ❀ सोमाय नमः ❀ ॐ। सोमं तर्पयामि। इति सोममंत्रः॥ ६४ ॥ मंत्राः

## [अथ कुबेरमंत्रः ॥ ६४-अ ॥

उत्तरदिगीश्वरः कुबेर इति तत्वकर्णिकाकाराः श्रीरघुनाथतीर्था अभिप्रयंते। तन्मते ओं * सां कुबेराय नमः * ओं। इति सप्ताक्षरो मंत्रः। प्राणायामादिकं सोममंत्रवत्। द्विरावृत्तैः सां-कुबेराय-नमः। इति षड्भिःपदैः षडंगन्यासः। सोमस्थाने कुबेर इति विशेषः।

तंत्रसारभावार्थप्रकाशे अन्यः कुबेरमंत्र उक्तः। स यथा—श्रीगुरुभ्यो नमः। ११ स्थाने कुबेराय नमः। ओं * यक्षाय कुबेराय वैश्रवणाय धनधान्याधिपतये धनधान्यसमृद्धिं मे देहि दापय स्वाहा * ओं। इति मंत्रेण प्राणायामः। ओं यक्षाय हृदयाय नमः। ओं कुबेराय शिरसे स्वाहा। ओं वैश्रवणाय शिखायै वौषट्। ओं धनधान्याधिपतये कवचाय हुं। ओं धनधान्यसमृद्धिं मे नेत्राभ्यां वषट्। ओं देहि दापय स्वाहा अस्त्राय फट्। इति दिग्बंधः। अस्य श्रीपंचत्रिंशदक्षरकुबेरमंत्रस्य विश्रवा ऋषिः शिरसि। बृहती छंदः मुखे। धनाधिपो देवता हृदये। जपे विनियोगः। ध्यानं—मनुजवाह्यविमानवरस्थितं गरुडरत्ननिभं निधिनायकं[३७]। ॥८०॥
शिवसखं मकुटादिविभूषितं वरगदे दधतं भज तुंदिलं। कुबेरांतर्यामिलक्ष्मीनारायण-]

३७. निधिरिति कुबेरभार्याया नाम। तन्नायकं = तस्याः पतिं।

## ॥ अथ श्रीषडक्षरईशानमंत्रः ॥ ६५ ॥

श्रीगुरुभ्यो नमः। ११ स्थाने ईशानाय नमः। ॐ ह्रां * ईशानाय नमः * ॐ। इति मंत्रेण प्राणायामः। ओं ईं हृदयाय नमः। ओं शां शिरसे स्वाहा। ओं नां शिखायै वौषट्। ओं यं कवचाय हुं। ओं नं नेत्राभ्यां वषट्। ओं मः अस्त्राय फट्। इति दिग्बंधः। अस्य श्रीषडक्षरेशानमंत्रस्य ब्रह्मा कश्यपो वा ऋषिः शिरसि। गायत्री च्छंदः मुखे। ईशानांतर्गतश्रीसंकर्षणो देवता हृदये। जपे विनियोगः। ध्यानं—ईशानं शूलिनं ध्यायेन्नागभूषणभूषितं।

---

[प्रेरणया लक्ष्मीनारायणप्रीत्यर्थं पंचत्रिंशदक्षर कुबेरमंत्रजपं करिष्ये। ध्यानश्लोकानुसारेण सुवर्णादिप्रतिमां कारयित्वा प्राणप्रतिष्ठादिकं कृत्वा जपेत्। ओं * यक्षाय कुबेराय वैश्रवणाय धनधान्याधिपतये धनधान्यसमृद्धिं मे देहि दापय स्वाहा ओं * इति जपः। पुनः प्राणायामः षडंगन्यासः ऋष्यादिन्यासः ध्यानं च। कुबेरांतर्यामिलक्ष्मीनारायणप्रेरणया लक्ष्मीनारायणप्रीत्यर्थं पंचत्रिंशदक्षरकुबेरमंत्रजपः संपूर्णः। मंत्रमुक्त्वा तर्पणं। लक्षमेकं पुरश्चरणं। तद्दशांशं तर्पणं। तद्दशांशास्तिलैर्होमः। ब्राह्मणभोजनं च। एवं कृतेऽचिरादेव महैश्वर्यवान्भवति॥

इति कुबेरमंत्रः॥ ६४-अ॥]

द्वास- शुभ्रांगं साभयं गौरीसहायं सेव्यमव्ययं। ईशानांतर्गतश्रीसंकर्षणप्रेरणया श्रीसंकर्षण- प्रति-
प्रीत्यर्थं षडक्षरेशानमंत्रजपं करिष्ये। ॐ ह्रां ❀ ईशानाय नमः ❀ ॐ।
॥८१॥ इति मंत्रजपः। पुनः प्राणायामः षडंगन्यासः ऋष्यादिन्यासः ध्यानं च। ईशानां- मंत्राः
तर्गतश्रीसंकर्षणप्रेरणया श्रीसंकर्षणप्रीत्यर्थं षडक्षरेशानमंत्रजपः संपूर्णः। ॐ ह्रां
❀ ईशानाय नमः ❀ ॐ। ईशानं तर्पयामि। इति ईशानमंत्रः ॥ ६५ ॥

## ॥ अथ श्रीषडक्षर अनंतमंत्रः ॥ ६६ ॥

श्रीगुरुभ्यो नमः। ११ स्थाने अनंताय नमः। ॐ आं ❀ अनंताय नमः ❀ ॐ
इति मंत्रेण प्राणायामः। ओं अं हृदयाय नमः। ओं नं शिरसे स्वाहा। ओं तां
शिखायै वौषट्। ओं यं कवचाय हुं। ओं नं नेत्राभ्यां वषट्। ओं मः अस्त्राय
फट्। इति दिग्बंधः। अस्य श्री षडक्षरानंतमंत्रस्य ब्रह्मा ऋषिः शिरसि। गायत्री
च्छंदः मुखे। अनंतांतर्गतश्रीसंकर्षणो देवता हृदये। जपे विनियोगः। ध्यानं— ॥८१॥
अनंतः शुक्लवर्णश्च वारुण्या[३८] च समन्वितः। साभय ऋष्टिहस्तश्च ध्येयो वै नीलवासधृत्।

३८ वारुणी = अनंतभार्या।

अनंतांतर्गतश्रीसंकर्षणप्रेरणया श्रीसंकर्षणप्रीत्यर्थं षडक्षरानंतमंत्रजपं करिष्ये । ॐ आं ❁ अनंताय नमः ❁ ॐ । इति मंत्रजपः । पुनः प्राणायामः । षडंग-न्यासः ऋष्यादिन्यासः ध्यानं च । अनंतांतर्गतश्रीसंकर्षणप्रेरणया श्रीसंकर्षणप्रीत्यर्थं षडक्षरानंतमंत्रजपः संपूर्णः । ॐ आं ❁ अनंताय नमः ❁ ॐ । अनंतं तर्पयामि। इति अनंतमंत्रः ॥ ६६ ॥

## ॥ अथ श्रीपंचाक्षरब्रह्ममंत्रः ॥ ६७ ॥

श्रीगुरुभ्यो नमः । ११ स्थाने ब्रह्मणे नमः । ॐ ह्रीं ❁ ब्रह्मणे नमः ❁ ॐ । इति मंत्रेण प्राणायामः । ओं ब्रं हृदयाय नमः । ओं ह्मं शिरसे स्वाहा । ओं णें शिखायै वौषट् । ओं नं कवचाय हुं । ओं मः अस्त्राय फट् । इति दिग्बंधः । अस्य श्रीपंचाक्षरब्रह्ममंत्रस्य ब्रह्मा ऋषिः शिरसि । पंक्तिश्छंदः मुखे । ब्रह्मांतर्गत-श्रीपरमात्मा देवता हृदये । जपे विनियोगः । ध्यानं—ध्येयो ब्रह्मा रक्तवर्णः सरस्वत्या समन्वितः । साभयः खड्गहस्तश्च जगदाद्यः पितामहः । ब्रह्मांतर्गतश्रीपरमात्मप्रेरणया श्रीपरमात्मप्रीत्यर्थं पंचाक्षरब्रह्ममंत्रजपं करिष्ये । ॐ ह्रीं ❁ ब्रह्मणे नमः ❁ ॐ ।

इति मंत्रजपः। पुनः प्राणायामः पंचांगन्यासः ऋष्यादिन्यासः ध्यानं च। ब्रह्मांतर्गत-श्रीपरमात्मप्रेरणया श्रीपरमात्मप्रीत्यर्थं पंचाक्षरब्रह्ममंत्रजपः संपूर्णः। ॐ ह्रीं ❀ ब्रह्मणे नमः ❀ ॐ। ब्रह्माणं तर्पयामि। इति ब्रह्ममंत्रः ॥ ६७ ॥

## अथ श्रीषडक्षर स्कंदमंत्रः[३९] ॥ ६८ ॥

श्रीगुरुभ्यो नमः। ११ स्थाने स्कंदायनमः। ॐ ❀ रं स्कंदाय नमः ❀ ॐ। इति मंत्रेण प्राणायामः। ॐ रं हृदयाय नमः। ॐ स्कं शिरसे स्वाहा। ॐ दां शिखायै वौषट्। ॐ यं कवचाय हुं। ॐ नं नेत्राभ्यां वषट्। ॐ मः अस्त्राय फट्। इति दिग्बंधः। अस्य श्रीषडक्षरस्कंदमंत्रस्य कौशिको विश्वामित्र ऋषिः शिरसि। गायत्री च्छंदः मुखे। स्कंदांतर्गतश्रीपरमात्मा देवता हृदये। जपे विनियोगः। ध्यानं—



---

३९ मंत्रोद्धारः—अग्निश्च स्वयमुद्देशी सनमः स्कंदवाचकः। कौशिकोऽस्य मुनिर्वह्नि-वर्णः षण्मुख उज्ज्वलः। धनुः शक्तिधरो ध्येयः कामदो भयनाशनः। अर्थः—प्रथमं अग्निः= अग्निबीजं रं। ततः स्वयं = स्ववाचकः स्कंदशब्दः। स च उद्देशी = चतुर्थ्यंतः। सनमः = नमोंतः। रं स्कंदायनमः इति।स्कंदवाचकः = स्कंदमंत्रः। शिष्टं स्पष्टं।

कात्यायनीसुतो वह्निवर्णः षण्मुख उज्ज्वलः। धनुःशक्तिधरो ध्येयः कामदो भयनाशनः। स्कंदांतर्गतश्रीविष्णुप्रेरणया श्रीविष्णुप्रीत्यर्थं षडक्षरस्कंदमंत्रजपं करिष्ये। ॐ ❀ रं स्कंदाय नमः ❀ ॐ। इति मंत्रजपः। पुनः प्राणायामः षडंगन्यासः ऋष्यादिन्यासः ध्यानं च। स्कंदांतर्गतश्रीविष्णुप्रेरणया श्रीविष्णुप्रीत्यर्थं षडक्षरस्कंदमंत्रजपः संपूर्णः। ॐ ❀ रं स्कंदाय नमः ❀ ॐ। स्कंदं तर्पयामि। इति स्कंदमंत्रः॥ ६८ ॥

---

## ॥ अथ तंत्रांतरस्थः दशाक्षरः स्कंदमंत्रः ॥ ६८—अ ॥

श्रीगुरुभ्यो नमः। ११ स्थाने कुमाराय नमः। ओं * ऐं हुं क्षुं क्लीं कुमाराय नमः * ओं। इति मंत्रेण प्राणायामः। ओं ऐं हृदयाय नमः। ओं हुं शिरसे स्वाहा। ओं क्षुं शिखायै वौषट्। ओं क्लीं कवचाय हुं। ओं कुमाराय नेत्राभ्यां वषट्। ओं नमः अस्त्राय फट्। इति दिग्बंधः। अस्य श्रीदशाक्षरस्कंदमंत्रस्य। कौशिक ऋषिः शिरसि। गायत्रीच्छंदः मुखे। श्रीस्कंदो देवता हृदये। जपे विनियोगः। ध्यानं—स्फुरंतं चलंतं तटित्कोटिकांतिं मयूराधिरूढं मनोहारिवेषं। पुलिंदींपतिं त्वां प्रपद्ये कुमारं कुमारं च मे देहि मृत्युं जय त्वं। स्कंदांतर्गतश्रीविष्णुप्रेरणया श्रीविष्णुप्रीत्यर्थं दशाक्षरस्कंदमंत्रजपं करिष्ये। ओं * ऐं हुं क्षुं क्लीं कुमाराय नमः * ओं। इति मंत्रजपः। पुनरुपसंहारार्थं प्राणायामः षडंगन्यासः

---

४०. पुलिंदेति कुमारापरनामकस्य स्कंदस्य भार्या। तस्या एव वल्लीति नामान्तरं।

द्वास-

||८३||

## || अथाष्टाक्षरसूर्यमंत्रः || ६९ ||

प्रति-

मंत्राः

श्रीगुरुभ्यो नमः। ११ स्थाने सूर्याय नमः। ॐ ❀ ॐ घृणिः सूर्य आदित्यः ❀ ॐ। इति मंत्रेण प्राणायामः। ॐ घृंणिः हृदयाय नमः। ॐ

---

ऋष्यादिन्यासः ध्यानं च। श्रीस्कंदप्रेरणया० प्रीत्यर्थं दशाक्षरस्कंदमंत्रजपः संपूर्णः। मंत्रमुच्चार्य तर्पणं। एतन्मंत्रजपेन बालानां ग्रहबाधापरिहारः भूतप्रेतपिशाचादिदुष्टग्रहनिवारणं ऐश्वर्यप्राप्तिश्च फलं।

४१. मंत्रोद्धारः—ह्रस्वः कृपालुः सेतश्च स्वयमन्यः स्वयं तथा। सतारोऽष्टाक्षरः सौरः। अर्थः—कृपालुः = कृपालुवाचकः घृणी शब्दः। स च ह्रस्वः = अदीर्घः। घृणि इति। सेतः विसर्गसहितः। घृणिः। ततः स्वयं = सूर्यः। ततः अन्यः स्वयं आदित्यः। सतारः = आदौ ओंकारसहितः। सौरः = सूर्यप्रतिपादको मंत्रः तथाच 'ओं घृणिः सूर्य आदित्यः।' इति मंत्रो निष्पद्यते। यद्यपि 'ह्रस्वः कृपालुः' इति उक्तप्रमाणेन 'ओं घृणिरादित्यः सूर्यः।' इति क्रमेण भाव्यं। तथापि 'ओं घृणिः सूर्य आदित्यः इति मांत्रिकपरिपाटी तु 'तारो घृणिर्भृगुः पश्चात्' इति तिलकमंत्रानुसारेणेति ज्ञेयं। ||८३||

४२. अंगन्यासोद्धारः–क्रमव्युत्क्रमतः पदैः। अगानि। अर्थः–घृणिः सूर्यः आदित्यः इति क्रमः। आदित्यः सूर्यः घृणिः इति व्युत्क्रमः। एवंप्रकारेण तारवर्जितैः ओंकाररहितैः। षड्भिः पदैः। षडंगानि भवंति।

सूर्यः शिरसे स्वाहा। ॐ आदित्यः शिखायै वौषट्। ॐ आदित्यः कवचाय हुं। ॐ सूर्यः नेत्राभ्यां वषट्। ॐ घृणिः अस्त्राय फट्। इति दिग्बंधः। अस्य श्रीमहासौराष्टाक्षरमंत्रस्य देवभाग ऋषिः शिरसि। गायत्री च्छंदः मुखे। सूर्यांतर्गतश्रीनारायणो देवता हृदये। जपे विनियोगः। ध्यानं—सच्छायः[४३] पद्मयुगलधरो ध्येयोऽरुणो रविः। सर्वव्याधिहरः श्रीदो वृष्टिदोऽयं मनुः स्मृतः। सूर्यांतर्गतश्रीनारायणप्रेरणया श्रीनारायणप्रीत्यर्थं महासौराष्टाक्षरमंत्रजपं करिष्ये। ॐ ❁ ॐ घृणिः सूर्य आदित्यः ❁ ॐ। इति मंत्रजपः। पुनः प्राणायामः षडंगन्यासः ऋष्यादिन्यासः ध्यानं च। सूर्यांतर्गतश्रीनारायणप्रेरणया श्रीनारायणप्रीत्यर्थं महासौराष्टाक्षरमंत्रजपः संपूर्णः।

---

४३. ध्यानोद्धारः—'पद्मयुगलधरो ध्येयोऽरुणो रविः' इति। तंत्रसारे ध्यानमंत्रस्य संक्षिप्योक्तत्वात् तदर्थभूतोऽन्यः तंत्रांतरोक्तः श्लोकः पठ्यते। सच्छाय इत्यादि। अर्थः—सच्छायः=छायादेवीसहितः। अन्यत्स्पष्टं। तंत्रांतरोक्त ध्यानं–शोणांभोरुहसंस्थितं त्रिणयनं वेदत्रयीविग्रहं दानांभोजयुगाभयानि दधतं हस्तैः प्रवालप्रभं। केयूरांगदहारनूपुरधरं कर्णोल्लसत्कुंडलं लोकाभीष्टफलप्रदाननिपुणं सूर्यं युगादिं भजे॥

४४. मंत्रार्थः—घृणिः = दयालुः। सूर्यः = सूरिप्राप्यः। आदित्यः = आदित् = आदितः सर्वदा। भवति विद्यते इति।

द्वास- ॐ ❁ ॐ घृणिः सूर्य आदित्यः ❁ ॐ। सूर्यं तर्पयामि ॥ इति अष्टाक्षर प्रति-
॥८४॥ सूर्यमंत्रः ॥ ६९ ॥ मंत्राः

## ॥ अथाष्टाक्षरगणेशमंत्रः ॥ ७० ॥

श्रीगुरुभ्यो नमः। ११ स्थाने गणेशाय नमः। ॐ ❁ क्षिप्रप्रसादाय नमः ❁ ॐ। इति मंत्रेण प्राणायामः। ॐ क्षिप्र हृदयाय नमः। ॐ प्रसादाय शिरसे स्वाहा। ॐ नमः शिखायै वौषट्। ॐ क्षिप्र कवचाय हुं। ॐ प्रसादाय नेत्राभ्यां वषट्। ॐ नमः अस्त्राय फट्। इति दिग्बंधः। अस्य श्रीगणेशमंत्रस्य कौशिक ऋषिः शिरसि। गायत्री च्छंदः मुखे। गणेशांतर्गतश्रीविश्वो देवता हृदये। जपे विनियोगः। ध्यानं—रक्तांबरो[४६] रक्ततनू रक्तमाल्यानुलेपनः। महोदरो गजमुखः पाशदंतांकुशाभये।

---

४५. मंत्रोद्धारः—मोनयदासाप्रप्राक्षिव्यत्यस्तो विघ्नराणमनुः। समष्टयर्थः—मोनये- ॥८४॥
त्ययं पादः व्यत्यस्तः विपरीतं पठितः सन्। 'क्षिप्रप्रसादाय नमः।' इति मनुर्मंत्रो भवति। द्विरावृत्तैः पदैः षडंगन्यासः।

४६. ध्यानोद्धारः—रक्तांबर इति मूलोक्तमेव। अर्थः सुगमः। क्षिप्रप्रसाद इत्यस्य

बिभ्रद्ध्येयो विघ्नहरः कामदस्त्वरया ह्ययं। गणेशांतर्गतश्रीविश्वप्रेरणया श्रीविश्वप्रीत्यर्थं गणेशाष्टाक्षरमंत्रजपं करिष्ये। ॐ ❀ क्षिप्रप्रसादाय नमः ❀ ॐ। इति मंत्रजपः। पुनः प्राणायामः षडंगन्यासः ऋष्यादिन्यासः ध्यानं च। गणेशांतर्गतश्रीविश्वप्रेरणया श्रीविश्वप्रीत्यर्थं गणेशाष्टाक्षरमंत्रजपः संपूर्णः। ॐ ❀ क्षिप्रप्रसादाय नमः ❀ ॐ। क्षिप्रप्रसादं तर्पयामि। इति गणेशमंत्रः ॥ ७० ॥

---

कामदस्त्वरया ह्ययमित्यर्थः। पाशश्च दंतश्च पाशदंतौ ताभ्यां सहिते अंकुशाभये। द्वितीयाद्विवचनं। तंत्रांतरे ध्यानं—गजाननं चतुर्बाहुं लंबकुक्षिं सितप्रभं। करंडिकामकुटिनं लंबयज्ञोपवीतिनं। वामहस्तेन मुख्येन संगृहीतमहाफलं। इतरेण तु हस्तेन भग्नदंतपरिग्रहं। अपराभ्यां च हस्ताभ्यां पाशांकुशवराभयं॥ आरब्धकर्म निर्विघ्नं फलं दुग्धे यथेप्सितं॥ विष्णिवतरमंत्राणामुक्तं नानाफलदातृत्वं। न तत् संगच्छते तेषामस्वातंत्र्यादित्यत उक्तं—तत्र तत्र स्थितो विष्णुस्तत्तच्छक्तीः प्रबोधयन्। एक एव महाशक्तिः कुरुते सर्वमंजसा। इति तत्रतत्र गरुडविघ्नेश्वरादौ। तत्तच्छक्तीः = विषपरिहारकत्व-विघ्नपरिहारकत्वादिरूपाः। प्रबोधयन् महाशक्तिः विष्णुरेक एव सर्वं करोतीति संबंधः।

## ॥ अथ श्रीअष्टाक्षरधन्वंतरिमंत्रः ॥ ७१ ॥

श्रीगुरुभ्यो नमः। ११ स्थाने धन्वंतरये नमः। ॐ ❀ धं धन्वंतरये नमः ❀ ॐ। इति मंत्रेण प्राणायामः। ओं धं हृदयाय नमः। ओं धन्वंतरये शिरसे स्वाहा। ओं नमः शिखायै वौषट्। ओं धं कवचाय हुं। ओं धन्वंतरये नेत्राभ्यां वषट्। ओं नमः अस्त्राय फट्। इति दिग्बंधः। ओं पूर्णज्ञानात्मने हृदयाय नमः इति वा न्यासः। अस्य श्रीधन्वंतर्यष्टाक्षरमंत्रस्य ब्रह्मा ऋषिः शिरसि। गायत्री च्छंदः मुखे। श्रीधन्वंतरिर्देवता

---

४७. मंत्रोद्धारः—स्वयमुद्देशवान्पूर्वपूर्वो हृदयसंयुतः। धान्वंतरो महामंत्रः संसृतिव्याधिनाशनः। अत्रोक्तसर्वमंत्राणां नायकोपलसंनिभः। अर्थः—स्वयं=स्ववाचकः धन्वंतरिशब्दः। पूर्वपूर्वः = पूर्वः = पूर्ववर्णः प्रथमाक्षरः धकारः। सच बीजत्वेन बिंदुसहितः। धं इति भवति। सः पूर्वः प्रथमो यस्य। किंच हृदयसंयुतः = नमःशब्दयुतः। नमःशब्दयोगात् धन्वंतरिः चतुर्थ्यंतः। तथा च ‘धं धन्वंतरये नमः’। अयं धान्वंतरः = धन्वंतरिदेवताको महामंत्रः संसृतिव्याधिनाशनः = संसाररूपव्याधिं संसारं व्याधींश्च वा नाशयतीति। अयं मंत्रः। अत्र = चतुर्थाध्याये उक्तानां सर्वमंत्राणां। नायकोपलसंनिभः = चूडामणिसदृशः। महोत्तम इति यावत्।

हृदये । जपे विनियोगः । ध्यानं—चंद्रौघकांतिमर्मृतोरुकरैर्जगंति संजीवयंतममितात्मसुखं परेशं । ज्ञानं सुधाकलशमेव च संदधानं शीतांशुमंडलगतं स्मरतात्मसंस्थं ॥ मूर्ध्नि स्थितादमुत एव सुधां स्रवंतीं भ्रूमध्यगाच्च तत एव च तालुसंस्थात् । हार्दाच्च नाभिसदनादधरस्थिताच्च ध्यात्वाऽभिपूरिततनुर्दुरितं निहन्यात् ॥ अज्ञानरोगभयदुःखमहाविषाणि योगोऽयमाशु विनिहंति सुखं च दद्यात् । उन्मादविभ्रमहरः परतश्च सांद्रमानंदमेव

---

४८. ध्यानश्लोकार्थः—अमृतोरुकरैः = अमृतसदृशैरुत्कृष्टरश्मिभिः । अमितात्मसुखं = अपरिच्छिन्नस्वरूपसुखं । आत्मसंस्थं = अस्मच्छरीरे निवसंतं । शीतांशुमंडलगतं चन्द्रबिम्बस्थं । परेशं = लक्ष्मीब्रह्मादीनामीशं स्वामिनं । स्मरत ।

४९. मूर्ध्नि स्थितात् = मूर्धस्थद्वादशदलपद्मगतात् । अमुतः = धन्वंतरेः । स्रवंतीं सुधां ध्यात्वा । भ्रूमध्यगात् = भ्रूमध्यगतचतुर्दलपद्मगात् धन्वंतरेरेव । तथा तालुसंस्थात् = इंद्रयोन्यपरनामकतालुगतद्विदलपद्मात् । हार्दात् = हृदि स्थिताष्टदलपद्मगतात् । नाभिसदनात् = नाभिगतषड्दलपद्मस्थात् । अधरस्थितात् = गुदाख्यमूलाधारस्थचतुर्दलपद्मगताच्च । धन्वंतरेरेव स्रवंतीं सुधां ध्यात्वेति पूर्वेणान्वयः । अभिपूरिततनुः सन् । श्रीधन्वंतरिर्भगवान्मच्छरीरांतर्व्याप्य वर्तते इति ध्यायन्निति तात्पर्यं । दुरितं = पापं । निहन्यात् समूलं घातयेत् । किं च अयं योगः अज्ञानरोगभयादीन्यपि आशु विनिहंति । सुखं च = ऐहिकं पारलौकिकं च दद्यात् ॥

द्वास- पदमापयति स्म नित्यं ॥ ध्यात्वैव हस्ततलगं स्वमृतं स्रवंतं देवं स यस्य शिरसि स्वकरं प्रति-
॥८६॥ निधाय। आवर्तयेन्मनुमिमं स च वीतरोगः पापादपैति मनसा यदि भक्तिनम्रः। मंत्राः
श्रीधन्वंतरिप्रेरणया श्रीधन्वंतरिप्रीत्यर्थं अष्टाक्षरधन्वंतरिमंत्रजपं करिष्ये। ॐ ❁ धं धन्वंतरये नमः ❁ ॐ। इति मंत्रजपः। पुनः प्राणायामः षडंगन्यासः ऋष्यादिन्यासः ध्यानं च। श्रीधन्वंतरिप्रेरणया श्रीधन्वंतरिप्रीत्यर्थं धन्वंतर्यष्टाक्षरमंत्रजपः संपूर्णः॥ ॐ ❁ धं धन्वंतरये नमः ❁ ॐ। धन्वंतरिं तर्पयामि। इति धन्वंतरिमंत्रः॥ ७१ ॥

---

५०. एतन्मंत्रजपोक्तं फलं विष्णोर्भक्तिमत एव फलेदित्याह। यदि भक्तिनम्र इति॥

५१. रोगपरिहारविषये इतिकर्तव्यांतरमाह—शतं सहस्रमयुतं लक्षं वाऽऽरोगसंक्षयात्। इममेव जपेन्मंत्रं साधूनां दुःखशांतये॥ तात्पर्यार्थः—आत्मनः रोगसंक्षयपर्यंतं अनेकवारं इमं मंत्रमेव जपेत्। अन्येषां साधूनां रोगसंक्षयमुद्दिश्य वा जपेत्॥
तथा—जूतिदाहादिशांत्यर्थं तर्पयेन्मनुनाऽमुना। ध्यात्वा हरिं जले सप्तरात्रं जूर्तिविनश्यति। अर्थः—जूतिर्ज्वरः। तत्प्रयुक्तो यस्तापस्तत्परिहारार्थं। जलेन सप्तरात्रं यदि तर्पयेत्तदा जूतिर्विनश्यति॥ किंच एतदर्थं होममप्याह-अयुतामृतसमिद्धोमाद्दोघृतक्षीरसंयुतात्। सर्वे रोगा विनश्यंति विमुखो न हरेर्यदि। अर्थः—अमृतसमिधः = गुडूचीसमिधः॥ ॥८६॥

## ॥ अथ धन्वंतरिऋङ्मंत्रः[५२] ॥ ७२ ॥

श्रीगुरुभ्यो नमः । ११ स्थाने धन्वंतरये नमः । ॐ * अयंमे हस्तो भगवानयं मे भगवत्तरः । अयं मे विश्वभेषजोऽयं शिवाभिमर्शनः * ॐ । इति मंत्रेण प्राणायामः । ॐ अयं मे हस्तो भगवान् हृदयाय नमः । ॐ अयं मे भगवत्तरः शिरसे स्वाहा । ॐ अयं मे विश्वभेषजः शिखायै वौषट् । ॐ अयं शिवाभिमर्शनः कवचाय हुं । ॐ अयं मे हस्तो भगवान् अयं मे भगवत्तरः । अयं मे विश्वभेषजोऽयं शिवाभिमर्शनः अस्त्राय फट् । इति दिग्बंधः । अस्य श्रीधन्वंतरिऋङ्मंत्रस्य ब्रह्मा ऋषिः शिरसि । अनुष्टुप्

---

भूताभिचारशांत्यर्थमपामार्गाहुतिक्रिया । द्विगुणामृतया पश्चात्केवलेन घृतेन वा । अर्थः—भूतबाधानिवृत्यर्थं परकृताभिचारनिवृत्यर्थं च अपामार्गसमिद्भिर्होमः कार्यः। ततः द्विगुणितसंख्यया अमृतसमिधा घृतेन वा होमः कार्यः । कृते च तस्मिन् शान्तिर्भवति ।

५२. मंत्रोद्धारः—अयं मे हस्त इति च मंत्रः पूर्वोक्तवत्स्मृतः । अर्थः—अयं मे हस्त इति [ऋग्वेदे-८ । १ । २५] मंत्रः । पूर्वोक्तवत् = धन्वंतरिप्रतिपादकः । स्मृतः ।

द्वास- छंदः मुखे। श्रीधन्वंतरिर्देवता हृदये। जपे विनियोगः। ध्यानं—चंद्रौघकांतिममृतो- प्रांत-
रुकरैर्जगंति संजीवयंतममितात्मसुखं परेशं। ज्ञानं सुधाकलशमेव च संदधानं शीतांशु- मंत्राः
॥८७॥ मंडलगतं स्मरतात्मसंस्थं ॥ मूर्ध्नि स्थितादमुत एव सुधां स्रवंतीं भ्रूमध्यगाच्च तत एव च
तालुसंस्थात्। हार्दाच्च नाभिसदनादधरस्थिताच्च ध्यात्वाऽभिपूरिततनुर्दुरितं निहन्यात्।
अज्ञानरोगभयदुःखमहाविषाणि योगोऽयमाशु विनिहंति सुखं च दद्यात्। उन्मादविभ्र-
महरः परतश्च सांद्रमानंदमेव पदमापयति स्म नित्यं ॥ ध्यात्वैव हस्ततलगं स्वमृतं स्रवंतं
देवं स यस्य शिरसि स्वकरं निधाय। आवर्तयेन्मनुमिमं स च वीतरोगः पापादपैति
मनसा यदि भक्तिनम्रः ॥ श्रीधन्वंतरिप्रेरणया श्रीधन्वंतरिप्रीत्यर्थं श्रीधन्वंतरिऋङ्मंत्रजपं
करिष्ये। ॐ ❀ अ॒यं मे॒ हस्तो॒ भग॑वान॒यं मे॒ भग॑वत्तरः। अ॒यं मे॑ वि॒श्व-

---

५३. ध्यानश्लोकार्थः पूर्वमंत्रे गतः।

५४. मंत्रार्थः—अयं = बुद्धिस्थः। मे हस्तः=मम हस्ते स्थितो धन्वंतरिः भगवान् = समग्रैश्वर्यगुणः। भगवत्तरः = लक्ष्म्यादिभ्यो भगवद्भ्योऽप्यतिशयितः। अनन्याधीन- ॥८७॥ निरवधिकसमग्रैश्वर्यादिसंपन्नः। विश्वभेषजः = सर्वारिष्टनिवर्तकः। [जीवचिकित्सासाधन-सर्वौषधवान्] शिवाभिमर्शनः शिवस्य परममंगलस्य अभिमर्शनं संबंधो यस्मात्। यतोऽयं धन्वंतरिरेतादृशः तस्मात्तदुपासनं बुभूषुभिरवश्यं कर्तव्यं।

भैषजाऽयं शिवाभिमर्शनः ❀ ॐ। इति मंत्रजपः। पुनः प्राणायामः पंचांगन्यासः ऋष्यादिन्यासः ध्यानं च ॥ श्रीधन्वंतरिप्रेरणया श्रीधन्वंतरिप्रीत्यर्थं धन्वंतरिऋङ्मंत्रजपः संपूर्णः। ॐ * अयं मे हस्तो भगवानयं मे भगवत्तरः। अयं मे विश्वभैषजोऽयं शिवाभिमर्शनः * ॐ। श्रीधन्वंतरिं तर्पयामि। इति श्रीधन्वंतरिऋङ्मंत्रः ॥ ७२ ॥ अंत्रविशेषः

---

५५. बीजांतः साध्यमध्यं च विभक्तदलमंत्रयुक्। वर्णानुप्रातिलोम्येन वृत्तं भूपुरसंयुतं॥ बीजसंदब्धकोणं च यंत्रं रक्षादिसाधकं ॥ समं तत्सर्वमंत्रेषु।

यंत्रलेखनप्रकारमाह—बीजांतरिति। अस्य समष्ट्यर्थो लिख्यते। सर्वेषामपि मंत्राणां अनुस्वारसहित आद्यवर्णो बीजं। यंत्रस्य मध्ये साध्यं लिखेत्। तत्वज्ञानं मे भूयात् रोगनिवृत्तिर्मे भूयात् धनप्राप्तिर्मे भूयात् इत्यादि साध्यं मध्ये लिखेत्। तत्साध्यं तत्तन्मंत्रस्य बीजाक्षरैः वेष्टयेत्। तदुपरि वर्तुलाकारतया मंत्रे यावंत्यक्षराणि वर्तंते तावंति दळानि कुर्यात्। दळेषु मंत्राक्षराणि विलिखेत्। दळानामंतरेषु अकारादिक्षकारांतान् वर्णान् प्रथमं आनुलोम्येन (क्रमेण) लिखेत्। ततः प्रातिलोम्येन (व्युत्क्रमेण) क्षकारादि अकारांतान् लिखेत्। इदं वर्तुलतया कुर्यात्। ततः चतुरस्ररेखाद्वयं कुर्यात्। रेखाद्वये चतुर्दिक्षु प्रत्येकं भूपुरं गोपुरं कुर्यात्। गोपुरं नाम अंतः स्थितस्य बहिर्गंतुं बहिः स्थितस्यांतर्गंतुं च मार्गः। चतुरस्रस्याष्टकोणेषु दिक्पालबीजानि लिखेत्।

द्वास- ||८८|| अपिच—अत्रोक्तास्तु क्रियाः पूर्वमंत्रेष्वप्युपलक्षणं। विजयस्तंभनादीनि नारसिंहैर्वि- प्रति-
शेषतः॥ जामदग्न्यैश्च कार्याणि राघवैर्यादवैरपि। वाराहैः स्तंभनं क्षिप्रं श्रीकरोः मंत्राः
कथिताः पुरा॥ बहुबाहुं महाकायं उद्युक्तं चोद्यतायुधं। स्मरन्विजयमाप्नोति

---

ततस्तत्र तत्तद्देवता आवाह्य प्राणप्रतिष्ठां पूजां च कृत्वा जपेत्। इदं यंत्रं "आत्मनो रक्षा परस्य उच्चाटनादिकं" इत्यादीनां विधायकं भवति। सर्वमंत्राणामपि एवमेव यंत्रलेखन-प्रकारः। इतोऽधिकं तंत्रसारे तत्तद्व्याख्यानेषु च द्रष्टव्यं।

५६. अत्र=धन्वंतरिमंत्रे। क्रियाः=जपतर्पणहोमादिकाः। पूर्वमंत्रेषु=भूवरा-हादिषु। उपलक्षणं=ज्ञापिकाः।

५७. विजयः=शत्रुप्रतिवाद्याद्यभिभवः। स्तंभनं=प्रतिवादिमुखस्तंभनं जलाग्नि-सर्पव्याघ्रचोरादिस्तंभनं च। आदिपदेन मोहनवशीकरणोच्चाटनादिकं च। नार-सिंहैः=नारसिंहमंत्रप्रभृतिभिः। बहुवचनमाद्यर्थं। यादवः=श्रीकृष्णः। तत्रापि वरा-हादिभिः स्तंभनं क्षिप्रं भवति।

५८. पुरा कथिताः = पूर्वमुक्ताः। श्रीकराः=श्रीकराष्टाक्षरप्रभृतयो मंत्राः सर्वेऽपि श्रीकराः। श्रीकरा इत्यस्यावृत्तिः। ||८८||

५९. विजयस्तंभनाद्यभीष्टसिद्ध्यर्थं भगवंतं तत्तत्कार्यकरणोपयुक्तबहुबाह्वादि मत्त्वेन। स्मरन्=ध्यायन् विजयं स्तंभनादींश्च कारयेत्=साधयेत्॥

स्तंभनादींश्च कारयेत् ॥ वसुपूर्णकरं[60] रत्नपर्वतस्थं विभावयन् । वसुसिद्धिमवाप्नोति सेव्यमानमजादिभिः । श्रिया[61] विभूतिभिर्युक्तं भावयन्भूतिमाप्नुयात् ॥ यद्यन्मनोगतं[62] तस्य तत्तदाप्नोत्यसंशयं । तथा तथा हरिं ध्यायन्क्रियास्तास्ताश्च साधयन् । श्रियै पद्मानि[63]

---

६०. द्रव्यप्राप्तिकामः भगवंतं वसुपूर्णकरं = द्रव्यसंपूर्णहस्तं । रत्नपर्वतस्थं = रत्नमयपर्वते विद्यमानं । उपलक्षणया भक्तेभ्यो वसु ददतं च । विभावयन्=ध्यायन् । वसुसिद्धिमवाप्नोति द्रव्यप्राप्तिमान्भवति ।

६१. ऐश्वर्याद्युद्देश्यमंत्रजपे विशेषध्यानमाह—श्रियेति—श्रिया = संपन्नियामिकया महालक्ष्म्या । विभूतिभिः=ऐश्वर्याभिमानिनीभिरितरदेवताभिश्च युक्तं परितः सेव्यमानं भगवंतं । भावयन्=ध्यायन् । भूतिं=ऐश्वर्यं । आप्नुयात् ।

६२. न केवलं पूर्वोक्तैश्वर्यरूपफलप्राप्तिरेव भगवदुपासकस्य—किंतु यद्यत् = विद्यादिकं आरोग्यादिकं च उद्दिश्य मनोगतं=इच्छाऽस्ति । तथातथा हरिं ध्यायन्=तत्तदभीप्सितानुगुण्येन भगवंतं तत्तद्गुणविशिष्टत्वेन ध्यात्वा तास्ताः क्रियाः तत्तत्प्रयोजनानुकूलानि जपतर्पणहोमादीनि । साधयन् = कुर्वन् तत्तत्फलं आप्नोति । असंशयं= संशयाभावः । अत्र संशयो नास्तीत्यर्थः ॥

६३. ता एव क्रिया लेशतो दर्शयति—श्रिया इति-श्रियै=ऐश्वर्यप्राप्त्यर्थं । पद्मानि = सरसिजानि जुहुयात् । तृप्त्यै = संतृप्त्यै । उत्पलानि = नीलोत्पलानि । जुहुयादिति शेषः ।

जुहुयात्संप्रीत्या उत्पलानि च। विद्यायै६४ मंत्रितं वारि वचां वा तुलसीमपि। ब्राह्मीं घृतं [घृष्टं] सुवर्णं वा शतावृत्त्या तु नित्यशः। सर्वमेतदवाप्नोति विशेषेण न संशयः ॥ अशेषदो६५षोज्झितपूर्णसद्गुणं सदाविशेषापगतोरुरूपं। नमामि नारायणमप्रतीपं सदाप्रियेभ्यः प्रियमादरेण ॥ इति श्रीमध्वमंत्ररत्नाकरे द्वितीयस्तरंगः ॥ २ ॥

६४. विद्यायै = विद्याप्राप्त्यर्थं। नित्यशः = प्रतिदिनं। शतावृत्या मंत्रितं = वेदव्यासकपिलहयग्रीवधन्वंतर्यादिमंत्रैः अभिमंत्रितं। वारि पिबेदिति शेषः। वचामित्यादौ मंत्रितमिति पदस्य लिंगव्यत्ययेन अनुवृत्या संबंधः। वचां तुलसीं ब्राह्मीं गोघृतं वा अभिमंत्रितं भक्षयेदिति शेषः। सुवर्णं पत्रं कृत्वा घृष्ट्वा भक्षयेदिति भावः। एतत्सर्वं श्रिया इत्यादिनोक्तं सर्वं फलमपि विशेषेण अवाप्नोति। न संशयः ॥

६५. अयं मंगळश्लोकः श्रीमदाचार्यैः तंत्रसारसंग्रहांते निबद्धः। अर्थः— सदा=कालत्रयेऽपि। अशेषदोषैः उज्झितः अशेषदोषोज्झितः। सद्गुणैः पूर्णः पूर्णसद्गुणः। अशेषदोषोज्झितश्चासौ पूर्णसद्गुणश्च अशेषदोषोज्झितपूर्णसद्गुणः तं। विशेषात् = भेदात् अपगतं उरु = सच्चिदानंदात्मकत्वादुत्कृष्टं रूपं शरीरं यस्य स तथा तं विशेषापगतोरुरूपं। अप्रतीपं = अप्रतिद्वंद्वं। प्रियेभ्यः प्रियं = मम आत्मादिभ्यः परमप्रियं। नारायणं आदरेण = श्रद्धातिशयेन। सदा अहं नमामि।

॥ इति श्रीमध्वमंत्ररत्नाकरटिप्पण्यां द्वितीयस्तरंगः ॥ २ ॥

# श्रीमध्वमंत्ररत्नाकरे तृतीयस्तरंगः ॥ ३ ॥

## तत्र श्रीहरिवायुस्तुतिमंत्रपुरश्चरणं ॥ १ ॥

### श्रीमद्वादिराजतीर्थकृतस्य पुरश्चरणस्य लघुपद्धतिः

यत्पादाब्जप्रसादेन विना ब्रह्मादयोऽखिलाः । न किंचिदपि जानंति तं वंदे हयशीर्षकं ॥ १ ॥ नत्वा नृसिंहकमले ब्रह्मवायुसरस्वतीः । शेषाद्यखिलदेवांश्च पूर्णप्रज्ञं जगद्गुरुं ॥ २ ॥ वक्ष्ये लोकहितार्थाय मंत्रसाधनमुत्तमं । धर्मार्थकाममोक्षाणां कारणं भवतारणं ॥ ३ ॥ नानाविधाश्च मंत्राश्च संति ह्येव सहस्रशः । वैदिका लौकिकाश्चैव न तैः सिद्धिः कलौ युगे ॥ ४ ॥ तस्मादिदं परं गुह्यं वायुस्तोत्रं महाफलं । स्मरणाद्देवदेवस्य ईप्सितार्थः कलौ युगे ॥ ५ ॥ ब्राह्मणैर्विष्णुभक्तैश्च गुरुभक्तैश्च सिद्ध्यति । विष्णुभक्तिविहीनस्य न तु सिद्धिः कदाचन ॥ ६ ॥ श्रीबीजमेव निक्षिप्य जपेन्मंत्रविशुद्धये । यस्य यस्मिन्भवेद्भक्तिः सोऽपि मंत्रः प्रसिद्ध्यति ॥ ७ ॥

# जपक्रमः ॥

नद्यां स्नात्वा शुचौ देशे नित्यकर्म समाचरेत् । पश्चात्स्थानं समागत्य तत्रस्थो नियतः शुचिः ॥ ८ ॥ प्राणायामं ततः कृत्वा संकल्प्य विधिपूर्वकं । स्तोत्रारंभं ततः कुर्याच्छ्लोकानां च प्रसंख्यया ॥ ९ ॥ एकवारं द्विवारं वा त्रिवारमथ सप्तकं । यः पठेन्नियतो भक्त्या ईप्सितं फलमाप्नुयात् ॥ १० ॥ द्रव्यकर्मानुसारेण होतव्यं च हुताशने ॥ अष्टाविंशतिराहुत्या श्लोकेनैकेन नित्यशः ॥ ११ ॥ सप्तरात्रं द्विसप्तं वा त्रिसप्तमथ मंडलं । कुर्याज्जपं च होमं च सर्वकामार्थसिद्धये ॥ १२ ॥ पूजयेच्च नृसिंहं च पश्चाद्ब्राह्मणपूजनं । कुर्याद्विभवसारेण वित्तशाठ्यं न कारयेत् ॥ १३ ॥ प्रथमतरंगोक्त प्रकारेण भूतोच्चाटनादिमातृकान्यासांतं कृत्वा ।

श्रीगुरुभ्यो नमः । परमगुरुभ्यो नमः । श्रीमदानंदतीर्थभगवत्पादाचार्येभ्यो नमः । श्रीवेदव्यासाय नमः । श्रीभारत्यै नमः । श्रीसरस्वत्यै नमः । श्रीवायवे नमः । श्रीब्रह्मणे नमः । श्रीमहालक्ष्म्यै नमः । श्रीनारायणाय नमः । श्रीवायुहनु

---

१. जपहोमाद्यर्थं कल्पितं स्थानं । एकस्मिन्नेव स्थाने स्थित्वावायुस्तुतिपुरश्चरणं कार्यं । २. स्वाभीष्टफलप्रदश्लोकेन । ३. जपहोमानंतरं । ४. विभवानुसारेणेत्यर्थः ।

मद्धीममध्वात्मकश्रीमुख्यप्राणाय नमः । श्रीवासुदेवाय नमः। अथ प्राणायामः । ओं भूः । ओं भुवः । ओं स्वः । ओं महः । ओं जनः । ओं तपः । ओं सत्यं । ओं तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि । धियो यो नः प्रचोदयात् । ओमापो ज्योतीरसोऽमृतं ब्रह्म भूर्भुवःस्वरों । इति १२ वारं षड्वारं वा त्रिवारं वा प्राणायामः । यद्वा-ओं हं हनुमते नमः । ओं भीं भीमाय नमः । ओं मं मध्वाय नमः । ओं पूं पूर्णप्रज्ञाय नमः । ओं वां वायुपुत्राय नमः । ओं अं अंजनीनंदनाय नमः । ओं जिं जितेंद्रियाय नमः । ओं वां वानरयूथमुख्याय नमः । ओं रां रामदूताय नमः । ओं पं पवमानाय नमः । ओं प्रां प्राणदेवाय नमः । ओं मं महाबलाय नमः । इति प्राणायामः ।

अथ अंगुलिन्यासः—ओं अं अजनीनंदनाय अनिरुद्धाय अंगुष्ठाभ्यां नमः । ओं रुं रुद्रमूर्तये प्रद्युम्नाय तर्जनीभ्यां नमः । ओं वां वायुपुत्राय संकर्षणाय मध्यमाभ्यां नमः । ओं रां रामदूताय वासुदेवाय अनामिकाभ्यां नमः । ओं अं अग्निमूर्तये नारायणाय कनिष्ठिकाभ्यां नमः । ओं हं हनुमते करतलकरपृष्ठाभ्यां नमः ।

अथ अंगन्यासः—ओं प्राणात्मने अंजनीनंदनाय हृदयाय नमः । ओं अपा-

नात्मने रुद्रमूर्तये शिरसे स्वाहा। ओं व्यानात्मने वायुसुताय शिखायै वौषट्। ओं उदानात्मने रामदूताय कवचाय हुं। ओं समानात्मने ब्रह्मास्त्रनिवारणाय अस्त्राय फट्। इति दिग्बंधः। ओं हं हनुमते इति कीलकं। ओं भीं भीमायेति बीजं। ओं मं मध्वायेति शक्तिः।

अथ ऋष्यादिन्यासः——अस्य श्रीहरिवायुस्तुतिमंत्रपुरश्चरणस्य ब्रह्मा ऋषिः। [अतिधृतिच्छंदः] गायत्री च्छंदः॥ मुख्यप्राणांतर्गतश्रीनृसिंहो देवता। श्रीहनुमद्भीमम-ध्वांतर्गतश्रीनृसिंहप्रेरणया श्रीनृसिंहप्रीत्यर्थं श्रीहरिवायुस्तुतिमंत्रपुरश्चरणे विनियोगः

ध्यानं——यस्ते मन्यो इति सूक्तं। ऋषभं मा इति सूक्तं। बलित्थेति सूक्तं। पांत्वस्मान्पुरुहूत०। श्रीमत्कंठीरवास्य०॥ १॥ लक्ष्मीकांतसमंततो०। यद्रोषोत्कर०॥ २॥ लक्ष्मीकांतमनंतसद्गुणनिधिं दोषातिदूरं सदा सर्गत्राणनिरोध-बंधनगतिज्ञानप्रदं मुक्तिदं। विश्वस्याखिलवेदवैदिकवचोब्रह्मेशपूर्वैः स्तुतं तं वंदे कुमतीभकुंभदलनं श्रीमन्नृकंठीरवं॥ ३॥ उद्यद्भास्वत्समाभासश्चिदा-नंदैकदेहवान्। चक्रशंखगदापद्मधरो ध्येयोऽहमीश्वरः॥ ४॥ लक्ष्मीधराभ्यामाश्लिष्टः स्वमूर्तिगणमध्यगः। ब्रह्मवायुशिवाहीशविपैः शक्रादिकैरपि। सेव्यमानोऽधिकं भक्त्या

॥९१॥

नित्यनिःशेषशक्तिमान् ॥ ५ ॥ ध्यायेद्धारिन्मणिनिभं जगदेकवंद्यं सौदर्यसारमरिशंखवराभयानि । दोर्भिर्दधानमजितं सरसं च भैष्मीसत्यासमेतमखिलप्रदमिंदिरेशं ॥ ६ ॥ विज्ञानरोचिःपरिपूरितांतर्बाह्यांडकोशं हरितोपलाभं । तर्काभयेतं विधिशर्वपूर्वगीर्वाणविज्ञानदमानतोस्मि ॥ ७ ॥ उद्यद्रविप्रकरसंनिभमच्युतांके स्वासीनमस्य नुतिनित्यवचःप्रवृत्तिं । ध्यायेद्गदाभयकरं सुकृतांजलिं तं प्राणं यथेष्टतनुमुन्नतकर्मशक्तिं ॥ ८ ॥ ध्यायेद्बालदिवाकरद्युतिनिभं देवारिदर्पापहं देवेंद्रप्रमुखैः प्रशस्तयशसं देदीप्यमानं रुचा । सुग्रीवादिसमस्तवानरयुतं सुव्यक्ततत्त्वप्रियं संरक्तारुणलोचनं पवनजं पीतांबरालंकृतं ॥ ९ ॥ नमस्ते मरुतां श्रेष्ठ प्राणदेव महाबल । मोचयस्व महाबाहो सुवीर्यात्स्वप्रजाः प्रभो ॥ १० ॥ मनोजवं मारुततुल्यवेगं जितेंद्रियं बुद्धिमतां वरिष्ठं । वातात्मजं वानरयूथमुख्यं श्रीरामदूतं शिरसा नमामि ॥ ११ ॥ बुद्धिर्बलं यशो धैर्यं निर्भयत्वमरोगता । अजाड्यं वाक्पटुत्वं च हनुमत्स्मरणाद्भवेत् ॥ १२ ॥ उल्लंघ्य सिंधोः सलिलं सलीलं यः शोकवह्निं जनकात्मजायाः । आदाय तेनैव ददाह लंकां नमामि तं प्रांजलिरांजनेयं ॥ १३ ॥ आदित्यकोटिप्रभमुग्रतेजसं किरीटकेयूरमहाविभूषणं । ध्यायेद्गदाभयकरामितबाहुविक्रमं भीमं महाभयकरं [महाभयहरं] सुरवैरिशत्रुं ॥ १४ ॥ राजावनाय शिनि-

पुंगवपार्षदौ च संदिश्य कर्णमभिगच्छत आस रूपं । अंते कृतांतनरसिंहतनोर्यथैव विष्णोर्हरं ग्रसत आत्तसमस्तविश्वं ॥ १५॥ नवार्ककांतिस्मितसुंदरास्यं सुवर्णकौपीनभृतांकसौख्यं प्रबोधमुद्राभयपद्महस्तं नमामि विद्याधिपमादिमध्वं ॥ १६ ॥ आनंदतीर्थनृहरिः स्वपदानतोरुहर्षाय वादिगजमस्तकमर्दनाय । कुर्वन्नुदारचरितानि समस्तदेववर्योदितानि सततं विजयाय नोस्तु ॥ १७ ॥ शुक्लांबरधरं विष्णुं शशिवर्णं चतुर्भुजं । प्रसन्नवदनं ध्यायेत्सर्वविघ्नोपशांतये ॥ १८ ॥ लक्ष्मीनारायणं वंदे तद्भक्तप्रवरोहि यः । श्रीमदानंदतीर्थाख्यो गुरुस्तं च नमाम्यहं ॥ १९ ॥

भारतीरमणमुख्यप्राणांतर्गतश्रीनृसिंहप्रेरणया श्रीनृसिंहप्रीत्यर्थं ममाभीष्टसिद्ध्यर्थं श्रीहरिवायुस्तुतिपुरश्चरणमंत्रजपं करिष्ये । श्रीमद्विष्ण्वंघ्रिनिष्ठा इति श्लोकमारभ्य-सुब्रह्मण्याख्यसूरेरिति श्लोकपर्यंतमेकवारमारोहणक्रमेण पठनं । ततः सुब्रह्मण्याख्यसूरेरिति श्लोकमारभ्य श्रीमद्विष्ण्वंघ्रिनिष्ठेति श्लोकपर्यंतमवरोहणक्रमेण पठनं । पुनरेकवारं आरोहणक्रमेण पठनं । एवं कृते एकः संपुटितो जपो भवति । एवंप्रकारेण प्रतिदिनं सप्तवारं जपेत् । त्रिवारं जपः कनिष्ठः पक्षः । ततो यं मनोरथमुद्दिश्य पुरश्चरणं क्रियते तत्फलप्रदं वायुस्तुतिश्लोकं अष्टोत्तरशता (१०८) वृत्या जपेत् । पुनर्मंत्रोपसंहारार्थं पूर्ववत्प्राणायामः ।

॥९२॥

अंगुलिन्यासः अंगन्यासः ऋष्यादिन्यासः ध्यानं च । भारतीरमणमुख्य-प्राणांतर्गतश्रीनृसिंहप्रेरणया श्रीनृसिंहप्रीत्यर्थं श्रीहरिवायुस्तुतिपुरश्चरणमंत्रजपः संपूर्णः ॥

ततोऽर्घ्यं—ओं * ओं नमो नारायणाय * ॐ । श्रीनारायणं तर्पयामि। उग्रंवीर-मितिमंत्रेण नृसिंहाय नमः । नृसिंहं तर्पयामि । ओं हं हनुमते नमः । हनुमंतं तर्पयामि । ओं भीं भीमायनमः । भीमं तर्पयामि [एवंविधेन वक्ष्यमाणमंत्रैश्च तर्पणं] ओं मं मध्वाय नमः । ओं पूं पूर्णप्रज्ञाय० । ओं वां वायुपुत्राय० । ओं अं अंजनीनंदनाय० । ओं जि जितेंद्रियाय० । ओं वां वानरयूथमुख्याय । ओं रां रामदूताय० । ओं पं पवमानाय० । ओं प्रां प्राण-देवाय० । ओं मं महाबलाय नमः । महाबलं तर्पयामि । ओं प्राणाय० । ओं अपानाय० । ओं व्यानाय० । ओं उदानाय० । ओं समानाय० । इति मंत्रैः, श्रीमद्विष्ण्वंघ्रिनिष्ठा० इत्यारभ्य सुब्रह्मण्याख्यसूरेरिति (४१) एकचत्वारिंश श्लोकपर्यंतं च प्रतिश्लोकं पूर्ववत् मुख्यप्राणायनमः मुख्यप्राणं तर्पयामि इति च शर्कराज्यमिश्रेण गोक्षीरेण तर्पणं।

अथ होमः— तत्प्रकारः प्रदर्श्यते । स्वस्वशाखोक्तविधानेन अग्निप्रतिष्ठापनादिकं कृत्वा अन्वाधानं कुर्यात् । तत्र प्रधानदेवताः—ॐ ओं नमो नारायणायेति नारायणं, उग्रं वीरमिति श्रीनृसिंहं-हनुमंतं-भीमं-मध्वं-पूर्णप्रज्ञं-वायुपुत्रं-अंजनीनंदनं-जितेंद्रियं-वानरयूथ-

मुख्यं-रामदूतं-पवमानं-प्राणदेवं-महाबलं-प्राणं-अपानं-व्यानं-उदानं-समानं-एताः प्रधानदेवताः तत्तन्नाममंत्रेण गोघृतद्रव्येणाष्टवारं । श्रीमुख्यप्राणं श्रीमद्विष्णवंघ्रिनिष्ठा इत्याद्येकचत्वारिंशच्छ्लोकमंत्रैः सकृत्संख्ययाऽऽज्येन । पुनरत्र प्रधानं श्रीमुख्यप्राणं स्वापेक्षितफलप्रदश्लोकमंत्रेणाष्टोत्तरशतवारमाज्येन । तत्रतत्र स्वाहांतेन तत्तन्मंत्रेण होमः । त्यागः—श्रीमुख्यप्राणांतर्गतश्रीनृसिंहायेदं इति सर्वत्र । ततः स्विष्टकृदादिहोमशेषं समापयेत् । कृतस्य कर्मणः यस्य स्मृत्येति भगवति समर्पणं । ब्राह्मणभोजनं च । एवं मंडलं तदर्धं सप्तदिनं वा सुष्ठाचारवता जितेंद्रियेण पुरश्चरणं कार्यं । अवभृथदिने विशेषतो जपहोमब्राह्मणभोजनादिकं कार्यं । एवं कृते श्रीमुख्यप्राणांतर्गतश्रीलक्ष्मीनृसिंहप्रसादेन सर्वारिष्टशांतिः सर्वाभीष्टप्राप्तिश्चासंशयं भवेत् ।

## अथ श्रीहरिवायुस्तुतिश्लोकानां फलानि ।

(१) वाक्सिद्ध्यर्थं—श्रीमद्विष्णवंघ्रिनिष्ठा०

(२) प्रज्ञासिद्ध्यर्थं—उत्कंठाकुंठकोलाहल०

(३) व्याधिपरिहारार्थं—जन्माधिव्याध्युपाधि-

(४) जपसिद्ध्यर्थं—अस्याविष्कर्तुकामं०

(५) पराक्रमसिद्ध्यर्थं—उद्यद्विद्युत्प्रचं-
डां०
(६) स्नेहार्थं—संसारोत्ताप०
(७) बंधमोक्षार्थं—मूर्धन्येषांजलिमें०
(८) उन्मादनिवृत्यर्थं—साभ्रोष्णाभी-
शु०
(९) स्त्रीवश्यार्थं—येऽमुं भावं भजंते०
(१०) संतानार्थं—आनंदान्मंदमंदा०
(११) शत्रुवश्यार्थं—उत्तप्तात्युत्कट-
त्विट्०
(१२) क्लेशनिवारणार्थं—अस्मिन्नस्मद्-
गुरूणां०
(१३) दारिद्र्यपरिहारार्थं—क्षुत्क्षामानरू-
क्षरक्षो०
(१४) जनवश्यार्थं—मातर्मे मातरिश्वन्०
(१५) हरिभक्त्यर्थं—विष्णोरत्युत्तमत्वा-
त्०
(१६) मोक्षार्थं—तत्वज्ञान्मुक्तिभाजः०
(१७) पौरुषसिद्ध्यर्थं—वंदेऽहं तं हनू-
मान्०
(१८) औषधवीर्यवत्त्वार्थं—प्राक्पंचाश-
त्सहस्रैः०
(१९) स्थिरप्रयोजनार्थं—क्षिप्तः पश्चात्स-
लीलं०
(२०) संग्रामविजयार्थं—दृष्ट्वा दुष्टाधिपोर०
(२१) रक्षणार्थं—देव्यादेशप्रणीति०
(२२) विघ्नविनाशार्थं—जघ्ने निघ्नेन०
(२३) युद्धसंनाहार्थं—निर्मृत्यन्नत्ययत्नं०
(२४) राजसेवार्थं—क्ष्वेळाक्षीणाट्टहासं०
(२५) वाक्पटुत्वसिद्ध्यर्थं—दुह्यंतींहृद्रुहं
मां०
(२६) गुरुसेवार्थं—याभ्यां शुश्रूषुरासीः०
(२७) ज्ञानसिद्ध्यर्थं—गच्छन्सौगंधिका
र्थं०
(२८) मिथ्यापवादपरिहारार्थं—बह्वीः
कोटीरटीकः०

(२९) जनवश्यार्थं—देहादुत्क्रामितानां०
(३०) प्रतिवादिजयार्थं—तद्दुष्प्रेक्षानुसारात्०
(३१) उच्चाटनार्थं—आक्रोशंतो निराशाः०
(३२) अपमृत्युपरिहारार्थं—त्रिष्वप्येवावतारेषु०
(३३) रूपलावण्यप्राप्त्यर्थं—उद्यन्मंदस्मितश्री०
(३४) विचक्षणार्थं—प्राचीनाचीर्ण०
(३५) महैश्वर्यप्राप्त्यर्थं-पीठे रत्नोपक्लृप्ते०
(३६) वैराग्यसिद्ध्यर्थं—सानुक्रोशैरजस्रं०
(३७) अदृश्यवस्तुप्राप्त्यर्थं—अस्तव्यस्तं समस्त०
(३८) राजविड्वरपरिहारार्थं-आज्ञामन्यैरधार्यां०
(३९) संतानप्राप्त्यर्थं-भूत्वा क्षेत्रे विशुद्धे०
(४०) सर्वाभीष्टसिध्यर्थं-वंदे तं त्वासुपूर्ण०
(४१) ग्रह-राज-चोर-व्याघ्राद्युपद्रवपरिहारार्थं—सुब्रह्मण्याख्यसूरेः०

इति श्रीहरिवायुस्तुतिश्लोकानां जपफलं ॥

श्रीहरिवायुस्तुतिमूलं व्याख्यानं च बहुभिर्मुद्रितं सर्वत्र लभ्यत इति नास्माभिस्तत्र यत्नः क्रियते ॥

॥ इति श्रीहरिवायुस्तुतिपुरश्चरणं ॥ १ ॥

अथ मार्कंडेयप्रोक्तं

## ॥ श्रीमन्युसूक्तपुरश्चरणं ॥

अस्ति गुह्यतमं लोके सर्वशत्रुनिबर्हणं । राज्यदं राज्यकामानामधनानां धनप्रदं ॥ १ ॥ राजा प्रसन्नो भवति राजसन्मानमिच्छतां । यं यं कामयते लोकस्तं तमाप्नोत्यसंशयं ॥ २ ॥ पुरा त्रेतायुगे राजा देवरात इति श्रुतः । स जितः शत्रुभिर्दुःखी नैमिशारण्यमाययौ ॥ ३ ॥ व्यासोक्तं नारदः प्राह मन्युकल्पं यथाविधि । स राजा तदनुष्ठानाद्राज्यं प्राप पुनः स्वकं ॥ ४ ॥

अथ पुरश्चरणक्रम :—श्रीगुरुभ्यो नमः । एकादशस्थाने मन्युनामकश्रीनृसिंहाय नमः । ओं ⊛ उग्रं वीरं महाविष्णुं ज्वलंतं सर्वतोमुखं । नृसिंहं भीषणं भद्रं मृत्युमृत्युं नमाम्यहं ⊛ ओं । इति मंत्रेण प्राणायामः । ओं उग्रं वीरं महाविष्णुं हृदयाय नमः। ओं ज्वलंतं सर्वतोमुखं शिरसे स्वाहा । ओं नृसिंहं भीषणं भद्रं शिखायै वौषट्। ओं मृत्युमृत्युं नमाम्यहं कवचाय हुं । ओं उग्रं वीरं महाविष्णुं ज्वलंतं सर्वतोमुखं । नृसिंहं भीषणं भद्रं मृत्युमृत्युं नमाम्यहं । अस्त्राय फट्। इति दिग्बंधः।

पुर- अस्य श्री यस्ते मन्यो इति चतुर्दशर्चस्य सूक्तमंत्रस्य ब्रह्मा भीमसेनो वा ऋषिः श्चरणं
॥९५॥ शिरसि। आद्या जगती। ततो नव त्रिष्टुभः। ततश्चतस्रो जगत्यश्छंदांसि मुखे। मन्युनामकश्रीनृसिंहो देवता हृदये। पुरश्चरणांगजपे विनियोगः। ध्यानं—वज्रकल्पं त्रिणयनं सर्वशत्रुनिषूदनं। द्वात्रिंशदायुधोपेतं ध्याये त्वां मन्युरूपिणं॥ ध्यायेन्नृसिंहमुरुवृत्तरवित्रिणेत्रं जानुप्रसक्तकरयुग्ममथापराभ्यां। चक्रं दरं च दधतं प्रियया समेतं तिग्मांशुकोटयधिकतेजसमग्र्यशक्तिं॥ मन्युनामकश्रीनृसिंहप्रेरणया श्रीनृसिंहप्रीत्यर्थं [ममामुकमनोभीष्टसिद्ध्यर्थं] मन्युसूक्तपुरश्चरणजपं करिष्ये। संपूर्णं सूक्तं एकवारं जपेत्॥

यस्ते॑ म॒न्यो विं॑धद्वज्र सायक॒ सह॒ ओजः॑ पुष्यति॒ विश्व॑मानु॒षक्। सा॒ह्याम॒ दास॒मार्यं॒ त्वया॑ यु॒जा सह॑स्कृतेन॒ सह॑सा॒ सह॑स्वता॥१॥ म॒न्युरिंद्रो॑ म॒न्युरे॒वास॑ दे॒वो म॒न्युर्होता॒ वरु॑णो जा॒तवे॑दाः।

---

१. [ऋग्वेदे ८। ३। १८-१९] चतुर्दशर्चं सूक्तं।

२. श्रीमहाभारततात्पर्यनिर्णये २७ शेऽध्याये–‘स्मरन्नृसिंहं भगवंतमीश्वरं स मन्युसूक्तं च ददर्श भक्त्या। यस्ते मन्यो इत्यतो नारसिंहं सोमं तस्मै चार्पयच्छोणिताख्यं’। इति॥ ॥९५॥

१. यस्ते मन्यो— श्रीमद्वीरेंद्रतीर्थीयव्याख्यानात्संगृहीतोऽर्थः—श्रीमदानंदतीर्थार्यहृदयांभोजवासिनौ। पद्माराधितपादाब्जौ व्यासरामौ नमाम्यहं॥ श्रीराघवें-

म॒न्युं विशं॑ ईळते॒ मानु॑षी॒र्याः पा॒हि नो॑ मन्यो॒ तप॑सा स॒जोषाः॑ ॥ २ ॥ अ॒भी॑हि

द्रार्यगुरून्नत्वा वादींद्रदेशिकान् । करिष्ये मन्युसूक्तार्थसंग्रहं बुद्धिशुद्धये ॥ हे अविध-द्वज्र सायक = अविधत् धृतः । अविद्धो वा । वज्रसदृशः सायकः शरः । नंदकाख्यः खड्गो वा यस्य सः । शरे खड्गे च सायक इत्यभिधानात् । हे मन्यो क्रोधा-भिमानिरुद्रांतर्गत । ज्ञानरूपत्वान्मन्युनामक श्रीनृसिंह । मनु अवबोधन इति धातोः युचि रूपं । ते = तव । यः = यत् । सहः = बलं । ओजः = प्रभावो दीप्तिर्वा । विश्वं = प्रपंचं । आनुषक् = अनुषक्तं संबद्धं सत् । पुष्यति = पुष्णाति । विकरण-व्यत्ययः । सहस्वता = बलवता । सहनवता वा । सहस्कृतेन = बलकर्त्रा । त्वया युजा = युक्तेन । सहसा = बलेन सैन्येन वा । दासं = नीचं । आर्यं अस्मत्तो महांतं उभयविधं शत्रुमिति शेषः । साह्याम = निराकुर्मः । उत्तमपुरुषप्रयोगात् वयमिति लभ्यते । ईदृशेन महता सहायेन शत्रूनभिभवेमेत्यर्थः ॥ १ ॥

२. मन्युरिंद्रः—सर्वशब्दवाच्यत्वेन मन्युनामकं श्रीनृसिंहं स्तुवन् तत्कर्तृकं पालनं प्रार्थयते । एवकारः सर्वत्रापि संबद्ध्यते । मन्युरेव इंद्रः = परमैश्वर्यशालि-त्वादियोगेनेंद्रशब्दवाच्यः । 'इंद्रः स परमैश्वर्यात्' इति ऋग्भाष्यवचनात् । आस = बभूव । देवः = क्रीडादिगुणविशिष्टत्वेनेंद्रशब्दवाच्योऽपि मन्युरेव । 'द्योतनाद्विजया-त्कांत्यास्तुत्या व्यवहृतेरपि।' इति ऋग्भाष्यात्। होता=पंचेंद्रियेषु विषयाणां होतृत्वाद्धोतृना-

पुर- मन्यो तवसस्तवीयान्तपसा युजा विजहि शत्रून्। अमित्रहा वृत्रहा दस्युहा च श्वरणं

||९६|| विश्वावसून्याभरा त्वं नः ॥ ३ ॥ त्वं हि मन्यो अभिभूत्योजाः स्वयंभूर्भामो

---

मापि मन्युरेव। आस। 'होतृसंस्थं विशेषतः। इंद्रियादिषु चार्थानां होतृत्वाद्धोतृनामकं' इति ऋग्भाष्यात्॥ मन्युरेव वरुणः = तमसोऽज्ञानतश्चावृणोतीति वरोन्नयनाच्च वरुण-शब्दवाच्यः। न तु वरुणमन्य्वोरैक्यात्। उक्तं च—'आवृणोतीति वरुणस्तमसाऽज्ञान-तोपि वा। वरमुन्नयतीत्यस्माद्वरानंदत्वतोऽपि वा।' इति। आस। जातवेदाः = जातं सर्वं वेत्तीति जातवेदश्शब्दवाच्योऽपि मन्युरेव। तपसा = कृच्छ्रचांद्रायणाध्ययनादिरूप-तपसा। सजोषाः = सहिताः। ससुखा वा। तूष्णींभूता वा। या मानुषीः = मनुष्य-संबंधिन्यः। विशः = प्रजाः। ईळते = ईडते ऋक्षु डस्य ळः प्रायेण। स्तुवंतीत्यर्थः॥ ताः नः = अस्मदीयाः प्रजाः अस्मांश्च। पाहि = रक्ष। त्वमिति लभ्यते॥ २॥

३. अभीहि मन्यो—पूर्वमंत्रे शत्रुहननपूर्वकं स्वस्य रक्षणं प्रार्थयित्वाऽस्मि-न्मंत्रे स्वस्य धनप्राप्तिं प्रार्थयते। हे मन्यो। त्वं। तवसस्तवीयान् = सर्वतोऽभि-वृद्धादप्यभिवृद्धः। तव इति सौत्रो धातुर्वृद्ध्यर्थकः। यद्वा बलवतां मध्येऽत्यंतबलीयान्। ||९६||
अभीहि = अस्मद्रक्षणार्थमागच्छ। तपसा युजा = तपोयुक्तेन। सहसा = बलेन। सहसेति पूर्वस्मादनुवर्तते। नः = अस्माकं। शत्रून् विजहि। यद्वा = तपसा आलोचनया। युजा = समाधिना च। विजहि। शत्रुहननसामर्थ्यं कथमित्यत आह।

अभिमातिषाहः । विश्वचर्षणिः सहुरिः सहावानस्मास्वोजः पृतनासु धेहि ॥ ४ ॥
अभागः सन्नप परेतो अस्मि तव क्रत्वा तविषस्य प्रचेतः । तं त्वा मन्यो अक्रतुर्जिहिळाहं स्वा

---

अमित्रहेति । अमित्रान् हिरण्यकशिप्वादिशत्रून् हंतीति अमित्रहा । वृत्रहा = इंद्रांतर्गतरूपेण वृत्रहननादिसामर्थ्यवान् । यद्वा-वृत्राणामावरकाणां पापानां हंता । दस्युहा च = दस्यून्गूढद्वेषिचोरान् हंतीति दस्युहा सन् । विश्वा=समस्तानि । वसूनि = धनानि । नः आभर = अस्मभ्यमाहरेत्यर्थः ॥ ३ ॥

४. त्वं हि मन्यो—अत्रापि मन्युनामकश्रीनृसिंहप्रार्थना क्रियते । हे मन्यो । अभिभूत्योजाः = पराभिभवकार्योजःशाली । स्वयंभूः = स्वयमेव भवति अभिव्यज्यते तथा । स्वेच्छया नृसिंहरूपेण स्तंभेऽभिव्यक्तः । भामः = अभिव्यक्तसाररूपः । भा दीप्तौ माङ् माने इति धात्वोर्डः । अभिमातिसहः = अभिमातिं अस्मदभिमतिं सहते मर्षतीति तथा । अस्मदभीष्टकारीत्यर्थः । विश्वचर्षणिः = विश्वं समस्तं जगत् चर्षणिः प्रजा यस्य स तथा । प्रजाश्चर्षणयः प्रोक्ता इत्युक्तेः । सहुरिः = सहनशीलः । सहावान् = सहोवान् बलवान् । मार्गशीर्षमासप्रियो वा । ‘मासानां मार्गशीर्षोऽहमित्युक्तेः । एतादृशास्त्वं । अस्मत्संबंधिषु । पृतनासु = संग्रामेषु सेनासु वादेषु वा । ओजः = बलं प्रभावं कीर्तिं च । धेहि = देहि ॥ ४ ॥

पुर- तनूर्बलदेयाय मेहि ॥५॥ अयं ते अस्म्युप मेह्यर्वाङ् प्रतीचीनः सहुरे विश्वधायः । मन्यो व श्वरणं

॥९७॥ ज्रिन्नभिमामावंवृत्स्व हनाव दस्यूँरुत बोध्यापेः ॥६॥ अभिप्रेहि दक्षिणतो भवा मेधा वृत्राणि-

५. अभागः सन्—तविषस्य = अभिवृद्धस्य बलवतः । तव । अपेत्यस्य क्त्वेत्यनेन संबंधः । अपक्रत्वा = अपकृत्य त्वत्पूजाभावरूपं अपकारं कृत्वेति यावत् । अभागः सन् = प्राप्तव्यभागहीनः सन् । परेतः = मृतप्रायः स्थानभ्रष्टो वा । अस्मि = अभवं । हे प्रचेतः = प्रकृष्टज्ञान । प्रकृष्टमनस्केति वा । तं पूर्वोक्तमहिमोपेतं । त्वा = त्वां । हे मन्यो । अक्रतुः = त्वद्यजनहीनः । त्वद्विषयकज्ञानहीनो वा । 'सक्रतुर्ज्ञान-रूपत्वात्' इति भाष्योक्तेः । अहं जिहीळ = त्यक्तवान् । क्रुद्धं कृतवान्वा । तथापि अहं । स्वा तनूः = यतस्तव शरीरभूतः त्वन्नियम्य इत्यर्थः । अतः बलदेयाय = बलप्रदा-नाय । सद्बुद्धिदानाय च । मा = मां प्रति । इहि = आगच्छ । संनिधत्स्वेति भावः ॥ ५ ॥

६. अयं ते अस्मि—हे मन्यो । सहुरे = सहनशील । वज्रिन् = वज्रायुधोपेत । भक्तानां सर्वारिष्टवर्जनस्वभावेति वा । 'वर्जनाद्वज्र उच्यते' इति स्मृतेः । अयं = अहं । ते = त्वदीयोऽस्मि त्वत्कर्मकृदित्यर्थः । यत एवमतः । मा = मां । उप = समीपे । ॥९७॥
एहि = प्राप्नुहि । सर्वाधारकस्त्वमित्याह । अर्वाङिति । अर्वाक् = अधस्तात् । यः विश्वधाः = समस्तप्रपंचधारणपोषणकर्ता । प्रतीचीनः = पश्चादपि विश्वधाः । अतस्त्वमपि अभि = अभितः । मा = मां । आववृत्स्व = आवृत्य तिष्ठ । 'नैनेन किंचनानावृतं

जंघनाव भूरिं । जुहोमि ते धुरुणं मध्वो अग्रमुभा उपांशु प्रथमा पिंबाव ॥ ७ । १ ॥ त्वयां मन्यो सुरथंमारुजंतो हर्षमाणासो धृषिता मरुत्वः । तिग्मेषव आयुधा संशिशाना अभिप्रयंतु नरो अग्निरूपाः ॥ ८ ॥ अग्निरिव मन्यो त्विषितः

---

इति श्रुतेः । यद्वा आववृत्स्व = भक्तत्वेन वृणीष्व । 'यमेवैष वृणुते तेन लभ्यः' । इति श्रुतेः । उत = अपिच । दस्यून् = बाह्याभ्यंतरशत्रून् । अभिहनाव = वज्रवांस्त्वं अहं च उभौ अभिहननं कुर्वः । उत = अपिच । अतः आपेः प्राप्तान् (ज्ञातिभूतान्वा) दस्यूनित्यावर्तते । शत्रून् । बोधि = मां बोधय ॥ ६ ॥

७. अभि प्रेहि—हे मन्यो नृसिंह । अभिप्रेहि = अभिगच्छ । मे दक्षिणतः= मम दक्षिणपार्श्वे । भव । अथ = अनंतरं । ते = तव । धरुणं = धारणशक्तिप्रदं । मध्वः = सोमरसं । अग्रं = अग्रे । जुहोमि । उभौ = आवां । उपांशु = एकांते । प्रथमा = प्रथमं । पिबाव = मधु प्राश्नीयाव । पीत्वा च भूरि वृत्राणि = पापानि शत्रुबृंदानि वा । जंघनाव = पुनः पुनर्हनाव ॥ ७ ॥ १ ॥

८. त्वया मन्यो—हे मन्यो । सरथं = समानं रथं । आरुह्येति शेषः । त्वया सह आरुजंतः = गच्छंतः । यद्वा सरथं शत्रुं आरुजंतः = रोगयुक्तं कुर्वंतः । नाशयंत इति यावत् । हर्षमाणासः = संहृष्टाः । धृषिताः = धृष्टाः । मरुत्वः = वायुवेगाः ।

सहस्व सेनानीर्नः सहुरे हूत एधि । हत्वाय शत्रून्विभजस्व वेद ओजो मिमानो विमृधो नुदस्व ॥९॥ सहस्व मन्यो अभिमातिमस्मे रुजन्मृणन्प्रमृणन्प्रेहि शत्रून् । उग्रं ते पाजो नन्वारुरुध्रे वशी वशं नयस एकज त्वं ॥ १० ॥ एको बहूनामसि मन्य वीळितो

---

तिग्मेषवः = तीक्ष्णबाणाः । अयुधा = खड्गाद्यायुधानि । संशिशानाः = शाणोल्लीढं कुर्वाणाः । यद्वा संनद्धाः । अग्निरूपाः = अग्निवत्क्रूरकर्माणः । नरः = मनुष्याः । अभि प्रयंतु = शत्रूणामभिमुखं भवंतु ॥ ८ ॥

९. अग्निरिव—हे सहुरे = हुरिति शब्दायमान । सहनशीलेति वा । हे मन्यो । त्वं नः । सेनानीः = सेनानयनकर्ता । हूतः = आहूतः । एधि = अभिवृद्धो भव । अग्निरिव त्विषितः = ज्वलितः । ज्ञानवानित्यर्थः । शत्रून् सहस्व = सहनं कुरु । शत्रूनित्यावर्त्य । हत्वाय = हननाय । विभजस्व । विभज्य । शत्रुमित्रोदासीनान् मिमानः = मानं कुर्वन् विभागं । कुरु । अस्मदधीनान्कुर्वित्यर्थः । ओजः = अस्मदीयं बलं प्रभावं सुकृतं वा । वेद = ज्ञातवान् । नः = अस्माकं । विमृदः = पापानि शत्रून्वा । अपनुदस्व = परिहरेत्यर्थः ॥ ९ ॥

१०. सहस्व मन्यो—हे मन्यो । एकजः=मुख्याविर्भूतः । वशी = सर्व-स्वतंत्रः । त्वं । अभिमातिं = अभिगंतारं शत्रुं । वशं नयसे = स्वाधीनं करोषि ।

॥९८॥

विशंविशं युधये संशिशाधि। अकृत्तरुक्त्वया युजा वयं द्युमंतं घोषं विजयाय कृण्महे ॥ ११ ॥ विजेषकृदिंद्र इवानवब्रवो ३स्माकं मन्यो अधिपा भवेह । प्रियं ते नाम सहुरे गृणीमसि विद्मा तमुत्सं यत आबभूथ ॥ १२ ॥ आभूत्या स

---

अतः सहस्व = तं अभिभव। अस्मे = अस्मदर्थे। शत्रून् रुजन् = रोगयुक्तान्कुर्वन्। मृणन् = प्रमथ्नन्। प्रमृणन् = प्रकर्षेण हिंसन्। प्रेहि = यथा स न पुनर्जीवेत्तथा कुर्वन्गच्छ। ते उग्रं = क्रूरं। पाजः बलं। आरुरुध्रे ननु = दृढमासीत्खलु ॥ १० ॥

११. एको बहूनां—हे मन्यो। बहूनां एक ईळितोऽसि = सत्स्वप्यनेकेषु रुद्रादिदेवेषु त्वमेक एव मया ईळितः ईडितः स्तुतोऽसि। अतः त्वं विशंविशं = प्रतिमनुष्यं। युधये = युद्धार्थं। संशिशाधि = सम्यङ्नियोजय। हे अकृत्तरुक् = अच्छिन्नदीप्ते। त्वया युजा = त्वत्सहायेन। द्युमंतं घोषं = दीप्तिमंतं घोषं सिंहनादमित्यर्थः। विजयाय = विजयार्थं। वयं कृण्महे=त्वं, त्वदीयाः पुरुषाः, अहं च कुर्मः ॥ ११ ॥

१२. विजेषकृत्—हे मन्यो। विजेषकृत् = विजयेच्छुः। इंद्रइव = परमैश्वर्यशाली परमात्मेव। पुरंदर इवेति वा। अनवब्रवः = अनिंदितवचनः। अस्माकं अधिपाः = अधिपतिः। रक्षक इति यावत्। विश्वपाशब्दवदाकारांतोऽयं। भव। इह = इदानीं। ते प्रियं सहुरे नाम = सहुरे इति तव प्रियतमं नामधेयं। गृणीमसि = गृणीमः = उच्चारयामः। यतः = उच्चारणरूपस्तोत्रात्। त्वं। आ = सम्यक्। उत्सं =

पुर- हजा वज्र सायकसहो बिभर्ष्यभिभूत उत्तरं। क्रत्वा नो मन्यो सह मेद्येधि महाधनस्य पुरुहूत श्वरणं
॥९९॥ संसृजि ॥ १३ ॥ संसृष्टं धनमुभयं समाकृतमस्मभ्यं दत्तां वरुणश्च मन्युः।
भियं दधाना हृदयेषु शत्रवः पराजितासो अप निलयंतां ॥ १४ ॥

---

उत्कृष्टं यथा तथा। बभूथ = भवसि। संतुष्टो भवसि। इति वयं तं त्वां। विद्म = विद्मः जानीमः ॥ १२ ॥

१३. आ भूत्या—हे पुरुहूत = पुरुभिः श्रेष्ठैः ब्रह्मादिभिः स्तुत आकारितो वा। अभिभूते = पराभिभवकर्तः। वज्र = वज्रवद्दृढ। सायक = शत्रूणामंतकर। हे मन्यो। त्वं आभूत्या = सम्यग्रूपसंपदा। सहजाः = सहजः। दीर्घश्छांदसः। सह जातोऽसि। उत्तरं—उत्तमं। सहः = बलं। बिभर्षि = धारयसि। महाधनस्य = महाद्रविणस्य संसृजि = सर्जनाय। नः = अस्माकं। क्रत्वा = कर्मणा। मेद्येधि = स्निग्धो भव ॥ १३ ॥

१४. संसृष्टं धनं—वरुणः = वरणीयत्वाद्वरुणशब्दवाच्यः। मन्युः = मन्यु- ॥९९॥
नामकश्रीनृसिंहः। संसृष्टं = मिश्रीभूतं। धनं = मम परस्य च अविभागमापन्नं द्रविणं। उभयमपि समाकृतं = समतया विभक्तं कृत्वा। अस्मभ्यं। दत्तां = ददातु। एवं बलादाकृष्य प्रदानेन शत्रवः। पराजितासः = पराभूताः। भियं = भीतिं। हृदयेषु दधानाश्च संतः। अपनिलयंतां = अस्माद्देशादुत्क्रम्य कुत्रचिद्देशांतरे निलीना भवंतु ॥ १४ ॥

इत्येकवारं मन्युसूक्तसंहितां जपित्वा—

## पादशः संपुटीकृत्य जपेत्—

एकैकस्या ऋचः क्रमेण चतुर्भिरपि पादैः अंत्याया ऋचः चतुर्थपादेन मेलनं पादशः संपुटीकरणं। तद्यथा—

(१) यस्ते मन्यो विधद्वज्रसायक—शत्रवः पराजितासो अप निलयंतां॥

(२) सह ओजः पुष्यति विश्वमानुषक्—शत्रवः पराजितासो अप निलयंतां॥

(३) साह्याम दासमार्यं त्वया युजा—तथा

(४) सहस्कृतेन सहसा सहस्वता ॥ १॥ तथा

(५) मन्युरिंद्रो मन्युरेवा स देवः—तथा

(६) मन्युर्होता वरुणो जातवेदाः—तथा

(७) मन्युं विश ईळते मानुषीर्याः—तथा

(८) पाहि नो मन्यो तपसा सजोषाः ॥२॥ शत्रवः पराजितासो अप निलयंतां।

(९) अभीहि मन्यो तवसस्तवीयान्—तथा

(१०) तपसा युजा विजहि शत्रून्—तथा

(११) अमित्रहा वृत्रहा दस्युहा च—तथा

(१२) विश्वावसून्याभरा त्वं नः ॥ ३॥ तथा

(१३) त्वं हि मन्यो अभिभूत्योजाः—तथा

(१४) स्वयंभूर्भामो अभिमातिषाहः। तथा

पुर- ||१००||

(१५) विश्वचर्षणिः सहुरिः सहावान्—
शत्रवः पराजिता सो अपनिलयंतां।
(१६) अस्मास्वोजः पृतनासु धेहि ॥ ४ ॥
तथा
(१७) अभागः संन्नपपरेतो अस्मि—तथा
(१८) तव क्रत्वा तविषस्य प्रचेतः। तथा
(१९) तं त्वा मन्यो अक्रतुर्जिहिळाहं—
तथा
(२०) स्वातनूर्बलदेयाय मेहि ॥ ५ ॥ तथा
(२१) अयं ते अस्म्युपमेह्यर्वाङ्—तथा
(२२) प्रतीचीनः सहुरे विश्वधायः। तथा
(२३) मन्यो वज्रिन्नभिमामाववृत्स्व-तथा
(२४) हनाव दस्यूँरुत बोध्यापेः ॥ ६ ॥
तथा
(२५) अभिप्रेहि दक्षिणतो भवा मेधा—
तथा
(२६) वृत्राणि जंघनाव भूरि। तथा
(२७) जुहोमि ते धरुणं मध्वो अग्रं—तथा
(२८) उभा उपांशु प्रथमा पिबाव ॥ ७ ॥
तथा
(२९) त्वया मन्यो सरथमारुजंतः-
तथा
(३०) हर्षमाणासो धृषिता मरुत्वः। तथा
(३१) तिग्मेषव आयुधा संशिशानाः—
तथा
(३२) अभिप्रयंतु नरो अग्निरूपाः ॥ ८ ॥
तथा
(३३) अग्निरिव मन्यो त्विषितः सहस्व—
तथा
(३४) सेनानीर्नः सहुरे हूत एधि। तथा
(३५) हत्वाय शत्रून्विभजस्व वेद—तथा
(३६) ओजो मिमानो वि मृधो नुदस्व॥९॥
तथा
(३७) सहस्व मन्यो अभिमातिमस्मे—
तथा
(३८) रुजन्मृणन्प्रमृणन्प्रेहि शत्रून्। तथा

श्चरणं ||१००||

(३९) उग्रं ते पाजो नन्वारुरुध्रे—शत्रवः
पराजितासो अपनिलयंतां ।
(४०) वशी वशं नयस एकज त्वं ॥ १० ॥
तथा
(४१) एको बहूनामसि मन्यवीळितः—तथा
(४२) विशंविशं युधये सं शिशाधि ।
तथा
(४३) अकृत्तरुक्त्वया युजा वयं—तथा
(४४) द्युमंतं घोषं विजयाय कृण्महे ॥ ११ ॥
तथा
(४५) विजेषकृदिंद्र इवानवब्रवः—तथा
(४६) अस्माकं मन्यो अधिपा भवेह ।
तथा
(४७) प्रियं ते नाम सहुरे गृणीमसि—तथा
(४८) विद्मातमुत्सं यत आबभूथ १२-तथा
(४९) आभूत्या सहजा वज्रसायक-तथा
(५०) सहो बिभर्ष्यभिभूत उत्तरं । तथा
(५१) क्रत्वा नोमन्यो सह मेद्येधि—तथा
(५२) महाधनस्य पुरुहूत संसृजि ॥ १३ ॥
तथा
(५३) संसृष्टं धनमुभयं समाकृतं—तथा
(५४) अस्मभ्यं दत्तां वरुणश्च मन्युः । तथा
(५५) भियं दधाना हृदयेषु—तथा
(५६) शत्रवः पराजितासो अपनिलयंतां-
शत्रवः पराजितासो अपनिल-
यंतां ॥

## अथ अर्धर्चशः संपुटीकरणेन जपः ।

एकैकस्याऋचः पृथक् द्वाभ्यामर्धाभ्यां अंत्याया ऋचः उत्तरार्धेन मेलनेन अर्धर्चशः संपुटीकरणं भवति ।

(१) यस्ते मन्यो विधद्वज्र सायक सह
ओजः पुष्यति विश्वमानुषक् ।
भियंदधानाहृदयेषु शत्रवः परा-
जितासो अपनिलयंतां ।
(२) साह्याम दास० सहस्वता ॥ १ ॥
भियं दधाना० अपनिलयंतां ।
(३) मन्युरिंद्रो० जातवेदाः । तथा
(४) मन्युं विश० सजोषाः ॥ २ ॥ तथा
(५) अभीह्निमन्यो० विजहिशत्रून् । तथा
(६) अमित्रहा० न्याभरात्वंनः ॥ ३ ॥
तथा
(७) त्वंहिमन्यो० अभिमातिषाहः ।
भियंदधाना० अपनिलयंतां ।
(८) विश्वचर्षणिः० पृतनासु धेहि ॥ ४ ॥
तथा
(९) अभागःसन्० तविषस्यप्रचेतः। तथा
(१०) तंत्वामन्यो० बलदेयायमेहि ॥ ५ ॥
तथा

(११) अयंतेअस्म्यु० विश्वधायः । तथा
(१२) मन्यो वज्रिन्० बोध्यापेः ॥ ६ ॥
तथा
(१३) अभिप्रेहि० जंघनावभूरि । तथा
(१४) जुहोमिते० प्रथमापिबाव ॥ ७ ॥
तथा
(१५) त्वयामन्यो० धृषितामरुत्वः । तथा
(१६) तेग्मेषवः० अग्निरूपाः ॥ ८ ॥ तथा
(१७) अग्निरिवमन्यो० सहुरे हूत एधि ।
तथा
(१८) हत्वाय शत्रून्० विमृधो नुदस्व॥९॥
तथा
(१९) सहस्व मन्यो० प्रेहि शत्रून् । तथा
(२०) उग्रं ते पाजो० एकजत्वं ॥१०॥ तथा
(२१) एको बहूनामसि० संशिशाधि ।
तथा
(२२) अकृत्तरुत्त्वया० कृणमहे ॥ ११ ॥
तथा

(२३) विजेषकृदिंद्र० अभिपाभवेह—
तथा
(२४) प्रियं तेनाम० यतआबभूथ ॥ १२ ॥
तथा
(२५) आभूत्यासहजा० भूतउत्तरं । तथा

(२६) ऋत्वानोमन्यो० पुरुहूतसंसृजि॥१३॥
तथा
(२७) संसृष्टंधन० वरुणश्च मन्युः । तथा
(२८) भियंदधाना० अपनिलयंतां ॥ १४ ॥
भियं दधाना० अपनिलयंतां

## अथऋक्शः संपुटीकृत्यजपेत् ।

ऋक्शः संपुटीकरणंनाम एकैकया ऋचा अंत्याया ऋचो मेलनं ।

(१) यस्ते मन्यो विधद्वज्र सायक सह ओजः पुष्यति विश्वमानुषक् । साह्याम दासमार्यं त्वया युजा सहस्कृतेन सहसा सहस्वता ॥१॥ संसृष्टं धनमुभयं समाकृतमस्मभ्यं दत्तां वरुणश्च मन्युः । भियं दधाना हृदयेषु शत्रवः पराजितासो अपनिलयंतां ॥

(२) मन्युरिंद्रो० सजोषाः ॥ २ ॥ तथा
(३) अभीहि मन्यो० न्याभरात्वंनः ॥ ३ ॥
तथा
(४) त्वंहिमन्यो० पृतनासु धेहि ॥ ४ ॥
तथा
(५) अभागः सन्नप० देयायमेहि ॥ ५ ॥
तथा

---

(१) अत्र पूर्वोत्तरयोः संपूर्णा ऋचः पठनीयाः ।

(६) अयंते अस्म्युप० बोध्यापेः ॥ ६ ॥
तथा
(७) अभिप्रेहि० प्रथमा पिबाव ॥ ७ ॥
तथा
(८) त्वयामन्यो० अग्निरूपाः ॥ ८ ॥ तथा
(९) अग्निरिवमन्यो० विमृधोनुदस्व ॥९॥
तथा
(१०) सहस्वमन्यो० एकजत्वं ॥१०॥-तथा
(११) एकोबहूनां० कृण्महे ॥ ११ ॥ तथा
(१२) विजेषकृदिंद्र० आबभूथ ॥ १२ ॥
तथा
(१३) आभूत्यासहजा० पुरुहूतसंसृजि ॥१३॥ तथा
(१४) संसृष्टंधनं० अपनिलयंतां—
संसृष्टं धनमुभयं समाकृतमस्मभ्यं दत्तांवरुणश्च मन्युः। भियं दधाना हृदयेषु शत्रवः पराजितासो अपनिलयंतां ॥ १४ ॥

इति त्रिप्रकारसंपुटितं जपं कृत्वा—ततः संपूर्णं मन्युसूक्तं पुनरेकवारं जपित्वा। जपोपसंहारार्थं। ॐ ❀ उग्रं वीरं महाविष्णुं ज्वलंतं सर्वतोमुखं। नृसिंहं भीषणं भद्रं मृत्युमृत्युं नमाम्यहं ❀ ॐ। इति प्राणायामः। पंचांगन्यासः। ऋष्यादिन्यासः। वज्रकल्पं त्रिणयनं० ध्यायेन्नृसिंहं० इति ध्यानं। मन्युनामकश्रीनृसिंहप्रेरणया श्रीनृसिंहप्रीत्यर्थं [ममामुकमनोभीष्टसिद्ध्यर्थं] मन्युसूक्तपुरश्चरणमंत्रजपः संपूर्णः।

तर्पणं—नमःशब्दांताभिः केवलाभिः ऋग्भिः (१४) पादसंपुटिताभिः (५६) अर्धर्चसंपुटिताभिः (२८) ऋक्संपुटिताभिः (१४) ततः केवलाभिश्च ऋग्भिः (१४) इत्येवं १२६ संख्याकं तर्पणं भवति । मन्युनामकश्रीनृसिंहं तर्पयामीति तर्पणं । ततो होमः—स्वशाखोक्तविधानेन अग्निप्रतिष्ठापनादिकं कृत्वा अन्वाधानं कुर्यात् । अत्रप्रधानं—उग्रंवीरमितिश्रीनृसिंहं अष्टाविंशति (२८) संख्यया आज्येन, पूर्वोक्ताभिः यस्ते मन्यो इति स्वाहांताभिश्चतुर्दशऋग्भिः (१४) पादसंपुटिताभिः (५६) अर्धर्चसंपुटिताभिः (२८) ऋक्संपुठिताभिः (१४) पुनः केवलाभिर्ऋग्भिः (१४) नृसिंहं सकृत्संख्यया आज्येन इति विशेषः । एवं च (१५४) होमः । अत्र सर्वत्र मन्युनामकश्रीलक्ष्मीनरसिंहायेदं इति त्यागः । ततः स्विष्टकृदादिहोमशेषसमापनं । ततो ब्राह्मणभोजनं एवं मंडलंअर्धमंडलं सप्तकं वा विशिष्टाचारवता स्वविभवानुगुणं कर्तव्यं । अवभृथदिने सर्वं विशेषतया कार्यं ॥

अनेन मन्युसूक्तपुरश्चरणेन भगवान् मन्युनामकश्रीलक्ष्मीनृसिंहः प्रीयतां ॥

इति श्रीमन्युसूक्तपुरश्चरणं ॥ २ ॥

# अथ महैश्वर्यप्रदं श्रीसूक्तपुरश्चरणं ॥ ३ ॥

श्रीगुरुभ्यो नमः। एकादशस्थानेश्रीनामकमहालक्ष्म्यै नमः। ओं भूः। ओं भुवः। ओं स्वः। ओं महः। ओं जनः। ओं तपः। ओं सत्यं। ओं तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि। धियो यो नः प्रचोदयात्। ओमापो ज्योतीरसोऽमृतं ब्रह्म भूर्भुवस्वरों। इति दशतारकयुतगायत्र्या प्राणायामः। ओं श्रियै हृदयाय नमः। ओं लक्ष्म्यै शिरसे स्वाहा। ओं मायै शिखायै वौषट्। ओं इंदिरायै कवचाय हुं। ओं रमायै अस्त्राय फट्। इति दिग्बंधः। अपिच–हिरण्यवर्णामिति मूर्ध्नि। तां म आवह जातवेद इति नेत्रयोः। अश्वपूर्वामिति कर्णयोः। कां सोस्मितामिति नासयोः। चंद्रां प्रभासामिति मुखे। आदित्यवर्णे इति कंठे। उपैतु मां देवसख इति बाह्वोः। क्षुत्पिपासामलामिति हृदये। गंधद्वारामिति नाभौ। मनसः काममाकूतिमिति गुह्ये। कर्दमेनेति पायौ। आपः स्रजंत्विति ऊर्वोः। आर्द्रां पुष्करिणीमिति जान्वोः। आर्द्रां यः करिणीमिति जंघयोः। तां म आवह जातवेद इति पादयोः। इति पंचदशन्यासाः। अस्य श्री पंचदशर्चस्य श्रीसूक्त मंत्रस्य आनंदकर्दमचिक्लीतेंदिरासुता ऋषयः शिरसि। आद्यास्तिस्रोऽनुष्टुभः, चतुर्थी बृहती, पंचमीषष्ठ्यौ त्रिष्टुभौ, ततोऽष्टावनुष्टुभः, अंत्या प्रस्तारपंक्तिः, मुखे। श्रीमहालक्ष्मीर्देवता

॥१०३॥

हृद्ये । हिरण्यवर्णामिति बीजं । तां म आवहेति शक्तिः । कीर्तिमृद्धिं ददातु म इति कीलकं । जपे विनियोगः । ध्यानं—अरुणकमलसंस्था तद्रजःपुंजवर्णा करकमलधृतेष्टाभीतियुग्मांबुजाता । मणिमकुटविचित्रालंकृतिः पद्ममाला भवतु भुवनमाता संततं श्रीः श्रियै नः । श्रीनामकमहालक्ष्मीप्रेरणया महालक्ष्मीप्रीत्यर्थं पंचदशर्चश्रीसूक्तमंत्रजपं करिष्ये । ओं * हिरण्यवर्णां हरिणीं सुवर्णरजतस्रजां । चंद्रां हिरण्मयीं लक्ष्मीं जातवेदो ममावह ॥ १ ॥ तां म आवह जातवेदो लक्ष्मीमनपगामिनीं । यस्यां हिरण्यं विंदेयं गामश्वं पुरुषानहं ॥ २ ॥ अश्वपूर्वां रथमध्यां हस्तिनादप्रबोधिनीं ।

---

१. हिरण्यवर्णां—जातवेदः = जातं सर्वं वेत्तीति जातवेदाः तस्य संबुद्धिः । हे सर्वज्ञ नारायण त्वं । हिरण्यवर्णां = सुवर्णस्येव देहवर्णवतीं । हरिणीं = हरेर्भार्यां । हरिणीरूपधरां वा । सुवर्णरजतस्रजां = सुवर्णमयपुष्पैः रजतमयपुष्पैश्च ग्रथितमालाधारिणीं । स्रज्शब्दात् आपं चैव हलंतानामिति टाप् । चंद्रां = आह्लादयित्रीं । हिरण्मयीं = हिरक् = सुखं तन्मयीं सुखात्मिकामित्यर्थः । लक्ष्मीं = द्वात्रिंशल्लक्षणवतीं लक्ष्मीनाम्नीं तव भार्यां । मम = मामनुग्रहीतुं । आवह = प्रेषय प्रेरय वा । "तां मय्यावह गोविंद सुशिखंडोपशोभितामिति तैत्तरीयभाष्योक्तेः ॥ १ ॥

२. तां म आवह—तां म आवह जातवेदो लक्ष्मीं इत्यस्यार्थः पूर्ववत् ।

श्रियं देवीमुपह्वये श्रीर्मा देवी जुषतां ॥ ३ ॥ कां सोस्मितां हिरण्य-
प्राकारामार्द्रां ज्वलंतीं तृप्तां तर्पयंतीं । पद्मे स्थितां पद्मवर्णां तामिहोपह्वये



---

अनपगामिनीं = "समना किल मातस्त्वममुना तद्योगिनी" इत्युक्तप्रकारेण त्वदाज्ञां विनाऽन्यत्र गमनवर्जितां। अत एव तां लक्ष्मीमावह = त्वमेव प्रेरयेत्यर्थः। यस्यां = महालक्ष्म्यां। आगतायां सत्यां अहं हिरण्यं = सुवर्णं। उपलक्षणया मुक्ताविद्रुमादि-रत्नानि। गां = अजामहिष्यादिपशून्। अश्वं = तुरगगजोष्ट्रादीन्। पुरुषान् = दासदासीः पुत्रपौत्रादींश्च। विंदेयं = अहं लभेय। तामित्यन्वयः॥ २॥

३. अश्वपूर्वां—अश्वपूर्वां = अश्वाः पूर्वे पुरोभागे यस्याः प्रयाणे सा तां। रथमध्यां = रथाः स्यंदनाः तेषां परिचाराणां च। मध्ये = मध्यभागे तुरगेभ्योऽनंतरमिति भावः यस्याः सा तां। हस्तिनादप्रबोधिनीं = हस्तिनां करिणां नादेन बृंहितेन प्रबोधः ज्ञानं यस्याः सा तां। करिगर्जितं श्रुत्वा तुष्यंतीमिति भावः। देवीं = मद्गेहं प्रत्यागमन-काले क्रीडंतीं। प्रसन्नतयाऽऽगच्छंतीमिति भावः। श्रियं = ब्रह्मादिभिः श्रयणीयां। देवीः = वचनव्यत्ययाद्देवीं। अहं उपह्वये = आगच्छंत्याः तस्याः समीपमभिमुखं गत्वा स्वागतेनाह्वयामि। एवंभूता श्रीः। मा = मां। जुषतां = (जुषी प्रीतिसेवनयोः) मामनु-गृह्णातु। मयि प्रीतिं करोतु वा॥ ३॥

श्रियं ॥ ४ ॥ चंद्रां प्रभासां यशसा ज्वलंतीं श्रियं लोके देवजुष्टामुदारां ।
तां पद्मिनीमीं शरणमहं प्रपद्येऽलक्ष्मीर्मे नश्यतां त्वां वृणे ॥ ५ ॥ १ ॥
आदित्यवर्णे तपसोऽधिजातो वनस्पतिस्तव वृक्षोऽथ बिल्वः । तस्य फलानि तपसा

---

४. कां सोस्मितां—कां = मनोवाचामगोचरां । सोस्मितां = उत्कृष्टमंदहास-युक्तां । हिरण्यप्राकारां = सुवर्णमयसप्तप्राकारावृतवैकुंठस्थितां । आर्द्रां = भक्तेषु कृपया क्लिन्नमनस्कां । ज्वलंतीं = प्रकाशमानां । तृप्तां = पूर्णकामां । तर्पयंतीं = वरप्रसादानु-ग्रहविशेषैः स्वभक्तानां वांच्छापरिपूर्तिकारिणीं । पद्मवर्णां = कमलवद्भासमानां । पद्मे स्थितां = कमलाधिष्ठितां । तां श्रियं इह = मत्समीपं प्रति । उपह्वये = आह्वयामि ॥ ४ ॥

५. चंद्रां प्रभासां—चंद्रां = भक्तानामाह्लादकारिणीं चंद्रवत्प्रकाशमानां वा । प्रभासां = प्रकृष्टकांतिमतीं । यशसा ज्वलंतीं = न केवलं देहकांत्या अपितु कीर्त्याऽपि प्रकाशमानां । देवजुष्टां = ब्रह्मरुद्रेंद्रादिभिः सेवितां । उदारां=प्रगल्भां भक्ताभीष्टप्रदातृत्व-रूपगुणयुक्तां वा । पद्मिनीं = करधृतकमलां । ईं = ईं बीजवाच्यां । तां = श्रियं । लोके = इह लोके । अहं शरणं = रक्षित्रीं । प्रपद्ये = भजामि । अतः हे श्रीः । मे = मम । अलक्ष्मीः = अश्रीः । नश्यतां = नाशं प्राप्नोतु इति त्वां वृणे = प्रार्थयामि ॥ ५ ॥
इति प्रथमो वर्गः ॥ १ ॥

 



नुदंतु मा यांतरा याश्च बाह्या अलक्ष्मीः ॥ ६ ॥ उपैतु मां देवसखः कीर्तिश्च मणिना सह । प्रादुर्भूतोऽस्मि राष्ट्रेऽस्मिन्कीर्तिमृद्धिं ददातु मे ॥ ७ ॥ क्षुत्पिपासामलां ज्येष्ठामलक्ष्मीं नाशयाम्यहं ॥ अभूतिमसमृद्धिं च सर्वां निर्णुद मे गृहात् ॥ ८ ॥ गंधद्वारां

---

६. आदित्यवर्णे—हे आदित्यवर्णे = सूर्यसमानकांते । हे श्रीः । तव तपसः = नियमाद्धेतोः । वनस्पतिः = फलवान्पुष्पवांश्च यो बिल्वः वृक्षः = बिल्वद्रुमः । सः अधिजातः = प्रादुर्भूतः त्वत्करादिति शेषः । अथ = अनंतरं । तस्य = बिल्वस्य । फलानि = पक्वशलाटुकानि । तपसा = त्वदनुग्रहेण । मा = षष्ठ्यर्थे द्वितीया मम । याः आंतराः = देहांतर्भवाः । अलक्ष्मीः = रोगाज्ञानादिरूपाः = ताः । या बाह्याः अलक्ष्मीः = दारिद्र्यादयः ताश्च । नुदंतु = अपनुदंतु निवारयंत्वित्यर्थः ॥ ६ ॥

७. उपैतु मां—हे श्रीः । देवसखः = देवस्य महादेवस्य सखा कुबेरः । कीर्तिश्च = तन्नाम्नी यशोभिमानिनी देवता लक्ष्मीर्दक्षकन्या वा । मणिना सह = चिंतितार्थप्रदेन चिंतामणिना सह । मां उपैतु = प्राप्नोतु । अहं अस्मिन्राष्ट्रे = जनपदे । प्रादुर्भूतः = उत्पन्नः । अस्मि = आसं । सः = कुबेरः । कीर्तिं = दिगंतविश्रांतं यशः । ऋद्धिं = सर्वभोग्यसमृद्धिं च । मे = मह्यं । ददातु = यथा दद्यात्तथा त्वमनुगृहाण ॥ ७ ॥ 

८. क्षुत्पिपासा—हे अंगे । क्षुत्पिपासामलां = क्षुत्तृड्भ्यां मलिनां । ज्येष्ठां = क्षीराब्धिमथनकाले लक्ष्म्याः पूर्वमुत्पन्नां । अलक्ष्मीं = अश्रियं । अहं नाशयामि । हे

दुराधर्षां नित्यपुष्टां करीषिणीम् । ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियं ॥ ९ ॥ मनसः कामुमाकूतिं वाचः सत्यमशीमहि । पशूनां रूपमन्नस्य मयि श्रीः श्रयतां यशः ॥ १० ॥

---

महालक्ष्मीः त्वंतु अभूतिं = अनैश्वर्यं । असमृद्धिं च = भोग्यपदार्थानां वृद्ध्यभावं च । मे गृहात् । निर्णुद = उच्चाटय ॥ "क्षुत्पिपासामला ज्येष्ठा अलक्ष्मीर्नाशयाम्यहं" इति पाठे या क्षुत्पिपासामलादिका अलक्ष्मीः । तां नाशयामि । इत्यर्थः ॥ ८ ॥

९. गंधद्वारां—गंधद्वारां = गंधः घ्राणग्राह्यो गुणः द्वारं लक्षणं यस्याः सा तां । दुराधर्षां = कैरपि धर्षयितुमशक्यां । नित्यपुष्टां = सर्वदा सस्यादिभिः पुष्टां पोषयित्रीं वा । करीषिणीं = शुष्कगोमयवतीं उपलक्षणया पशुमतीमित्यर्थः । सर्व भूतानां = सर्वप्राणिनां । ईश्वरीं = ईशनशीलां । नियामिकामित्यर्थः । तां श्रियं = भूरूपां लक्ष्मीं । इह = अस्मिन्राष्ट्रे । उपह्वये = संप्रीत्याऽऽह्वयामि ॥ ९ ॥

१०. मनसः कामं—हे श्रीः । मनसः कामं = मनोरथं । आकूतिं = संतोषं । वाचः सत्यं = वचसां याथार्थ्यं । पशूनां = गोमहिष्यजादीनां । रूपं = क्षीरादिकं प्राचुर्यं वा । अन्नस्य = अदनीयस्य । रूपं = भक्ष्यभोज्यादिकं । अशीमहि = लभेमहि । श्रीः = संपत् । यशः = कीर्तिश्च । मयि = त्वदनुग्रहपात्रभूते मयि । श्रयतां = संनिधत्तां ॥ १० ॥

कर्दमेन प्रजाभूता मयि संभ्रम कर्दम । श्रियं वासय मे कुले मातरं पद्ममालिनीं ॥ ११ ॥ आपः स्रजंतु स्निग्धानि चिक्लीत वस मे गृहे । नि च देवीं मातरं श्रियं वासय मे कुले ॥ १२ ॥ आर्द्रां पुष्करिणीं पुष्टिं सुवर्णां हेममालिनीं । सूर्यां हिरण्मयीं लक्ष्मीं जातवेदो ममावह ॥ १३ ॥ आर्द्रां यः करिणीं यष्टिं पिंगळां पद्ममालिनीं ।

---

११. कर्दमेन—हे कर्दम = श्रीपुत्र त्वं मयि । संभ्रम = मयि प्रसादं कुरु । यतः श्रीः कर्दमेन त्वया । प्रजाभूता = पुत्रवती । हे कर्दम = श्रीपुत्र त्वं मयि = मदीयगृहे । संभ्रम = संभव = संवस सदा वासं कुर्वित्यर्थः । पद्ममालिनीं = कमलधारिणीं । मातरं = तव जननीं श्रियं = लक्ष्मीं च । मे = मम । कुले = न केवलं मयि अपितु मम वंशेऽपि वासय = निवासय । सा यथा मद्वंशपरंपरायां वसति तथा कुर्वित्यर्थः ॥ ११ ॥

१२. आपः स्रजंतु—आपः = अबभिमानिन्यो देवताः । स्निग्धानि = स्नेहयुक्तानि कार्याणि । स्रजंतु = सृजंतु = उत्पादयंतु । हे चिक्लीत = चिक्लीताख्य श्रीपुत्र । मे = मम । गृहे = गेहे । निवस च = वासं कुरु । अपि च । तां देवीं=तव मातरं श्रियं । मे = मम कुले । निवासय = संवासय ॥ १२ ॥



१३. आर्द्रां—आर्द्रां = शीतलगुणां । पुष्करिणीं = अभिषेकोद्यतदिग्गजशुंडाग्रसंबन्धवर्तीं । पुष्टिं = पुष्ट्यभिमानिनीं देवतां पोषणकरीं वा । सुवर्णां = शोभनकांतिं ।

चंद्रां हिरण्मयीं लक्ष्मीं जातवेदो ममावह ॥ १४ ॥ तां म आवह जातवेदो लक्ष्मीमनपगामिनीं । यस्यां हिरण्यं प्रभूतं गावो दास्योऽश्वान्विन्देयं पुरुषानहं ॥ १५ ॥

पुनः प्राणायामः अंगन्यासः ऋष्यादिन्यासः ध्यानं च। श्रीनामकमहालक्ष्मीप्रेरणया श्रीमहालक्ष्मीप्रीत्यर्थं श्रीसूक्तमंत्रजपः संपूर्णः । प्रत्यृचं तर्पणं ।

इति श्रीसूक्तमंत्रजपः ॥

---

हेममालिनीं = सुवर्णपद्मरचितस्रग्विणीं । सूर्यां = ऐश्वर्यरूपां । हिरण्मयीं = सुवर्णरूपां। मम = मदर्थं । आवह = आह्वय ॥ १३ ॥

१४. आर्द्रां यः—हे जातवेदः = गोविंद । आर्द्रां = शीतलगुणां । यःकरिणीं = यष्करिणीं यष्टिकरां वेत्रहस्तामित्यर्थः। टिकारलोपश्छांदसः। यष्टि = दंडरूपां धर्मदंड-स्वरूपिणीमित्यर्थः। पिंगळां = पिंगळवर्णां। पद्ममालिनीं = कमलमालालंकृतां। चंद्रां = आह्लादयुक्तां चंद्रमंडलवासिनीं वा। हिरण्मयीं = सुवर्णाधिदेवतां। लक्ष्मीं। मम = मदर्थं । आवह ॥ १४ ॥

१५. तां म आवह—इयं ऋक् द्वितीयया ऋचा व्याख्यातप्राया। विशेषस्तु— प्रभूतं = भूयिष्ठं। गावः = गाः। दास्यः = दासीः। परिचारकाः। उभयत्र द्वितीयार्थे प्रथमा। हे गोविंद। एतत्सर्वं त्वया प्रेरितायाः श्रियः प्रसादादहं विंदेयं ॥ १५ ॥ इति तृतीयो वर्गः ॥ ३ ॥

अथ फलस्तुतिः । यः शुचिः प्रयतो भूत्वा जुहुयादाज्यमन्वहं । श्रियः पंचदशर्चं च श्रीकामः सततं जपेत् ॥ १ ॥ पद्मानने पद्मऊरू पद्माक्षी पद्मसंभवे । यन्मां भजसि पद्माक्षि येन सौख्यं लभाम्यहं ॥ २ ॥ अश्वदायी गोदायी धनदायी महाधने । धनं मे जुषतां देवि सर्वकामार्थसिद्धये ॥ ३ ॥ पुत्रपौत्रधनं धान्यं हस्त्यश्वादि गवे रथं । प्रजानां भवसि माता आयुष्मंतं करोतु मां ॥ ४ ॥ धनमग्निर्धनं वायुर्धनं सूर्यो धनं वसुः । धनमिंद्रो बृहस्पतिर्वरुणं धनमश्नुते ॥ ५ ॥ वैनतेय सोमं पिब सोमं पिबतु वृत्रहा । सोमं धनस्य सोमिनो मह्यं ददातु सोमिनि ॥ ६ ॥ न क्रोधो नच मात्सर्यं न लोभो नाशुभा मतिः । भवंति कृतपुण्यानां भक्तानां श्रीसूक्तं जपेत्सदा ॥ ७ ॥ चंद्राभां लक्ष्मीमीशानां सूर्याभां श्रियमैश्वरीं । चंद्रसूर्याग्निवर्णाभां श्रीमहालक्ष्मीमुपास्महे ॥८॥ वर्षंतु ते विभावरि दिवो अभ्रस्य विद्युतः । रोहंतु सर्वबीजान्यवब्रह्मद्विषो जहि ॥ ९ ॥ पद्मप्रिये पद्मिनि पद्महस्ते पद्मानने पद्मदलायताक्षि । विश्वप्रिये विष्णुमनोनुकूले त्वत्पादपद्मं मयि संनिधत्स्व ॥ १० ॥ या सा पद्मासनस्था विपुलकटितटी पद्मपत्रायताक्षी गंभीरावर्तनाभिस्तनभरनमिता शुभ्रवस्त्रोत्तरीया । लक्ष्मीर्दिव्यैर्गजेंद्रैर्मणिगणखचितैः स्नापिता हेमकुंभैर्नित्यं सा पद्महस्ता मम वसतु गृहे सर्वमांगल्ययुक्ता ॥ ११ ॥ सिद्धलक्ष्मीर्मोक्षलक्ष्मीर्ज-

यल्क्ष्मीः सरस्वती । श्रीर्लक्ष्मीर्वरलक्ष्मीश्च प्रसन्ना भव सर्वदा ॥ १२ ॥ वरांकुशा पाशमभीतिमुद्रां करैर्वहंतीं कमलासनस्थां । बालार्ककोटिप्रतिभां त्रिणेत्रां भजेऽहमाद्यां जगदीश्वरीं तां ॥ १३ ॥ सर्वमंगळमांगळ्ये शिवे सर्वार्थसाधिके। शरण्ये त्र्यंबके देवि नारायणि नमोऽस्तुते ॥ १४ ॥ श्रीर्वर्चस्वमायुष्यमारोग्यमायुधात्पवमानं महीयते । धान्यं धनं पशुं बहुपुत्रलाभं शतसंवत्सरं दीर्घमायुः ॥

इति श्रीसूक्तजपफलस्तुतिः ॥

## अथ श्रीसूक्तमंत्रपुरश्चरणप्रकारः ॥

## तत्र प्रथमप्रकारः ॥ १ ॥

यः शुचिः [1]प्रयतो भूत्वा जुहुयादाज्यमन्वहं । श्रियः पंचदशर्चं च श्रीकामः सततं जपेत् ॥ निरुक्तकारोक्तः श्रीसूक्तफलस्तुतिरूपोऽयं मंत्रः ।

---

१. अर्थः—यः श्रीकामः सः प्रयतः = स्नानसंध्यावंदनगायत्र्यष्टमहामंत्रजपादिकं कृत्वा परिशुद्धः सन् । सततं = पंचदशादिनपर्यंतं । अन्वहं = मध्ये एकदिनमप्य-

# अथ द्वितीयप्रकारः ॥ २ ॥



दशपंचदिने लक्ष्मीसूक्तं यो जपमाचरेत् । दशपंचसहस्रं तु क्षीरान्नैर्जुहुयात्पृथक् ।
दशांशं तर्पणं चैव शतांशं भोजयेद्द्विजान् । कन्यार्थी लभते कन्यां धनकामो धनं लभेत् ।
राज्यकामो लभेद्राज्यं सर्वैश्वर्यं लभेत्सुधीः । यान्यांश्चिंतयते कामांस्तांस्तानाप्नोत्यसंशयं ॥

परित्यज्य दिनेदिने । श्रियः पंचदशर्चं = हिरण्यवर्णामित्यादि पंचदश ऋचः । जपेत् = पंचदशकृत्वः पठेत् । आज्यं जुहुयाच्च=गृह्याग्नौ लौकिकाग्नौ वा स्वस्वशाखोक्तविधानेन अग्निमुखांतं कृत्वा श्रीमत्तंत्रसारोक्तप्रकारेण अग्नेर्वैष्णवत्वसिद्ध्यर्थं आज्येन व्याहृतीभिः षोडशसंस्कारान् श्रीपरशुरामस्य षोडशोपचारपूजां च कृत्वा प्रत्यृचं स्वाहांताभिः पंचदशऋग्भिः पंचदशकृत्वः आज्यं जुहुयात्=गोघृतेन होमं कुर्यात् । तत्र त्यागः-श्रीनामकमहालक्ष्म्यंतर्गतश्रीनारायणायेदमिति [एवं कृते प्रत्यहं २२५ पंचविंशत्यधिकद्विशतऋचां जपः, तावत्संख्याका आहुतयश्च भवंति] प्रत्यहं ब्राह्मणसुवासिनीसमाराधनं च कार्यं । अवभृथदिने क्षीरान्नेन पंचदशसहस्रं १५००० जुहुयात् । दशांशं तर्पणं । तद्दशांशं ब्राह्मणभोजनं । अत्र श्रीकामः सततं जपेदित्युक्तत्वात् एवंरूपे पुरश्चरणे कृते महैश्वर्यं प्राप्नुयात् । 

२. अर्थः—दशपंचदिने = पंचदशदिनेषु । प्रत्यहं = दिनेदिने । यः लक्ष्मीसूक्तं = हिरण्यवर्णामित्यादिश्रीसूक्तं जपमाचरेत् = पंचदशकृत्वः जपेत् । अवभृथदिने दशपंचसहस्रकं=१५००० पंचदशसहस्रावृत्त्या क्षीरान्नैः स्थालीपाकेन पायसेन । पृथक् = स्वाहां-

## अथ तृतीयः प्रकारः ॥ ३ ॥

गंधद्वारेति मंत्र यो दशपंचसहस्रकं। दशांशैस्तर्पणं होमं दूर्वाज्यैः पायसोदनैः। सर्वसिद्धिमवाप्नोति महालक्ष्मीप्रसादतः ॥

## अथ चतुर्थः प्रकारः ॥ ४ ॥

अधिकारी यथादेशं यथाकालं यथामनु। यादृग्विधानसंपत्त्या प्रजपेत्तादृशं फलं ॥ न देवतोषणं व्यर्थं भविष्यति कदाचन। तस्मात्सर्वप्रयत्नेन जपेद्योगी यतेंद्रियः ॥

---

तेन एकैकमंत्रेण जुहुयात् = गृह्याग्नौ लौकिकाग्नौ वा होमं कुर्यात्। दशांशं तर्पणं = होमसंख्यायाः दशांशं तर्पणं। शतांशं द्विजांश्च भोजयेत् [तथाच तर्पणसंख्या १५०० ब्राह्मणभोजनसंख्या १५० च भवति] एवं कृते—कन्यार्थी लभते कन्यामित्यादिनोक्तं फलं तस्य भवति।

३. समष्ट्यर्थः—योऽधिकरी गंधद्वारेति मंत्रस्य पंचदशसहस्रसंख्याकजपं यावद्भि-र्दिनैः कर्तुं शक्नुयात् तावद्भिर्दिनैः कुर्यात्। आदावंते च सर्वासां पंचदशर्चां पंचदश-कृत्वः जपश्च कार्यः। अवभृथदिने गंधद्वारेति मंत्रेण दशांशं (१५००) तर्पणं। तेनैव मंत्रेण तद्दशांशेन (१५०) आज्यमिश्रदूर्वाद्रव्येण स्थालीपाकेन पायसेन च होमः कार्यः। ब्राह्मणभोजनं तु तद्दशांशं। एवं कृते महालक्ष्म्याः प्रसादेन सर्वमनोरथसिद्धिमवाप्नोति।

४. अर्थः सुगमः। इति श्रीसूक्तपुरश्चरणं।

# ऐतरेयोपनिषदुक्तः रात्रिसूक्तहोमः ।

तत्र प्रथमं सूक्तजपः । श्रीगुरुभ्यो नमः । एकादशस्थाने रात्रिनामकदुर्गांतर्गतश्रीलक्ष्मीनृसिंहाय नमः । ओं भूः । ओं भुवः । ओं स्वः । ओं महः । ओं जनः । ओं तपः । ओं सत्यं । ओं तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि । धियो यो नः प्रचोदयात् । ओमापो ज्योतीरसोऽमृतं ब्रह्म भूर्भुवःस्वरोम् । इति दशतारकयुतगायत्र्या प्राणायामः । ओं पूर्णज्ञानात्मने हृदयाय नमः । ओं पूर्णैश्वर्यात्मने शिरसे स्वाहा । ओं पूर्णप्रभात्मने शिखायै वौषट् । ओं पूर्णानंदात्मने कवचाय हुं । ओं पूर्णतेजआत्मने नेत्राभ्यां वषट् । ओं पूर्णशक्त्यात्मने अस्त्राय फट् । इति दिग्बंधः । अस्य श्रीरात्रिसूक्तमंत्रस्य कुशिकः सौभरिर्ऋषिः शिरसि । गायत्री च्छंदः मुखे । श्रीरात्रिनामकदुर्गांतर्गतश्रीलक्ष्मीनृसिंहो देवता हृदये । महाभयनिवारणार्थे जपे विनियोगः । ध्यानं—कौशेयरक्तवसनां कमलत्रिणेत्रां चक्राब्जतर्जनसुशूल्युताब्जहस्तां । श्यामांगकांतिसहितां परमांक-

संस्थां ध्यायेद्विधीशनतपादयुगां जनित्रीं । ध्यायेन्नृसिंहमुरुवृत्तरवित्रिणेत्रं जानुप्रसक्तकर-युग्ममथापराभ्यां । चक्रं दरं च दधतं प्रियया समेतं तिग्मांशुकोटयधिकतेजसमप्रयशक्ति । श्रीरात्रिनामकदुर्गांतर्गत श्रीलक्ष्मीनृसिंहप्रेरणया प्रीत्यर्थं रात्रिसूक्तमंत्रजपं करिष्ये ।

ओं * रात्री व्यंख्यदायती पुरुत्रा देव्यं १ क्षभिः । विश्वा अधि श्रियोऽधित ॥ १ ॥ ओर्वप्रा अमर्त्या निवतो देव्यु १ द्वतः । ज्योतिषा बाधते तमः ॥ २ ॥ निरु स्वसारम-

---

१. रात्री व्यख्यत्—रात्री = रतिं राति ददातीति रात्री नाम्नी । देवी = क्रीडादिगुणविशिष्टा दुर्गा तादृशः दुर्गांतर्गतः श्रीलक्ष्मीनृसिंहश्च । आयती = आयांती आगच्छंती सती । पुरुत्रा = बहुभिः । अक्षभिः = नयनैः । पुरुत्रेत्यस्यावृत्तिः = बहुधा । व्यख्यत् = जगद्दर्श । विश्वाः अधि = सर्वलोकेषु । विश्वाः श्रियः = निखिलैश्वर्यं । अधित = दधार ॥ १ ॥

२. ओर्वप्रा—[आ उरु अप्राः] देवी । निवतः = नीचान् मानुषान् । उद्वतः= उत्तमान् । अमर्त्या = अमर्त्यान् ब्रह्मादिदेवांश्च । ओर्वप्राः = विशेषेण समंतादपूरयत् । तत्रस्था सती । तेषां तमः=अज्ञानं । ज्योतिषा = ज्ञानेन करणेन । बाधते = नाशयति ॥२॥

 स्कृतोषसं देव्यायती । अपेदु हासते तमः ॥ ३ ॥ सा नो अद्य यस्या वयं नि ते यामन्न- 

विक्ष्महि । वृक्षे न वसतिं वयः ॥ ४ ॥ नि ग्रामासो अविक्षत नि पद्वंतो नि पक्षिणः ।
नि श्येनासश्चिदर्थिनः ॥५॥ यावया वृक्यं १ वृकं यवयस्तेनमूर्म्ये । अथानः सुतराभव

३. निरुस्वसारं—आयती = आगच्छंती । देवी = देवनशीला रात्रिः । स्वसारं=भगिनीं । उषसं = शुक्लवर्णं उषोनामकं प्रमदात्मकं स्वस्वरूपं (कर्तृ) । उ = एव । निः अकृत [संहितायां अस्कृत इत्यस्य अकृत इति पदपाठः] = निराकरोत्येव ॥ ३ ॥

४. सा नो अद्य—यस्याः = रात्रिदेव्याः । यामन् = यामनि यामनामके उदरे प्रलये स्वांतर्निवेशनेन । वयः = पक्षिणः । वृक्षे वसतिं न = वृक्षस्थनीडे निवासमिव । अद्य वयं न्यविक्ष्महि = प्रविश्य सुखेन तिष्ठामः । सा = तादृशी रात्रिः । नः = अस्मद्विषये प्रसीदतु ॥ ४ ॥

५. नि ग्रामासः—पूर्वोक्तरात्रिनामकस्य भगवत उदरे प्रलयकाले । ग्रामासः = ग्रामाः = असुराः । नि अविक्षत = न्यविशन् सुखेन वर्तत इत्यर्थः । पद्वंतः = द्विपदो मनुष्याश्च । न्यविक्षत । पक्षिणश्च = उपलक्षणया तिर्यंचश्च न्यविक्षत । श्येनासः = शं सुखं अस्यास्तीति शी विष्णुः । सः आसमंतात् । इनः स्वामी इति ज्ञानिनः ।  तथाभूता बद्धा देवोत्तमा अपि न्यविक्षत । अर्थिनश्चित् = प्राप्तमहापुरुषार्था मुक्ता अपि न्यविक्षत । बद्धानां मुक्तानां च देवासुरनृतिर्यगादिप्राणिनां सर्वेषां रात्रिदेव्येव सुखकरीति यावत् ॥ 'आवृत्त्यैवोपसर्गस्य क्रियाऽऽवृत्तिर्भविष्यती'ति वचनात् ॥ ५ ॥

॥६॥ उप॑मा पेपि॑शत्तमः॑ कृष्णं व्य॑क्तमस्थित । उष॑ ऋणेव॑ यातय ॥ ७ ॥ उप॑ ते गा इवाक॑रं वृणीष्व दु॑हितर्दिवः । रात्रि स्तोमं न जिग्युषे॑ ॥ ८ ॥

---

६. यावया वृक्यं—हे ऊर्म्यै = अंगीकृतप्रभाणे हे रात्रिदेवि । वृक्यं = वृकवत्क्रूरस्वभावं । अस्मदुपद्रवकारिणं जनं । यवय = यावय । यावय इत्यस्य यवय इति पदपाठः । निर्यापय । यथाऽस्मान्बाधितुं न प्राप्नोति तथा द्रावय । वृकं = तन्नामानं सज्जनबाधकमसुरं च यवय । स्तेनं=अहं ब्रह्मास्मीति वादिनं ब्रह्मस्तेनं महासुरजातं च यवय । अथ = अस्मच्छत्रुद्रावणानंतरं । त्वं । नः = अस्माकं । सुतरा = सुखेनतरणीया क्षेमकरी भव ॥ ६ ॥

७. उपमा—हे उषः = प्रकाशरूपे रात्रिदेवते । पेपिशत् = अज्ञानां पेशलं मनोरमं । कृष्णं = कृष्णवर्णं तद्वतां अधोगतिप्रदं । व्यक्तं = स्वसामर्थ्येन सर्वेषां बंधकं । यत्तमः = भावरूपाज्ञानं । मामुप = मत्समीपे । अस्थित = सम्यज्ज्ञानावरकतया प्राप्तं । तत् । ऋणा इव [ऋणेवेत्यस्य ऋणा इव इति पदच्छेदः] ऋणानीव । यथा सत्पुरुषः ऋणपरिहारेऽत्यंतमवहितो भवति । तथाऽवहिता सती । यातय = अपसारयेत्यर्थः ॥ ७ ॥

८. उप ते गाः—दिवो दुहितः = ज्ञानस्य सुते । ज्ञानव्यंग्ये इत्यर्थः । हे रात्रि = रात्रिदेवते दुर्गे । सद्ब्राह्मणाय गा इव । जिग्युषे = जयिने राज्ञे । स्तोमं

जपोपसंहारार्थं प्राणायामः ओं पूर्णज्ञानात्मन इत्यादि षडंगन्यासः ऋष्यादिन्यासः मंत्रदेवताध्यानं च। एकैकामृचमुच्चार्य रात्रिनामकदुर्गांतर्गतश्रीलक्ष्मीनृसिंहं तर्पयामि। इति तर्पणं। इति श्रीरात्रिसूक्तमंत्रजपः।

## अथ रात्रिसूक्तहोमः ॥

एकैकामृचं स्वाहांतामुक्त्वा स्थालीपाकेन पायसेन सकृद्धोमः। त्यागः रात्रिनामकदुर्गांतर्गतश्रीनृसिंहायेदमिति।

---

न = स्तोत्रमिव। ते स्तोमं = स्तुतिं। उप = त्वत्समीप एव। आ अकरं = सम्यगकरवं। यथा निरुपाधिकं ब्राह्मणाय गाः ददाति। यथा वा राष्ट्रस्थाः शत्रूञ्जितवते राज्ञे प्रमोदभरेण स्तुतिं कुर्वंति तथाऽहं तुभ्यं स्तुतिमकार्षं। मत्कृतं स्तवं त्वं वृणीष्व = अंगीकुरु। अंगीकृत्य चास्मान्रक्ष ॥ ८ ॥

१. ऐतरेयोपनिषदि तृतीयारण्यकस्य द्वितीयेऽध्याये—"अथाऽपि यत्र च्छिद्रमिवादित्यो दृश्यते इत्यारभ्य कृष्णां धेनुं कृष्णवत्सां नलदमाली दक्षिणाभिमुखो व्राजयति" इत्युक्त्वा स यद्येतेषां किंचित्पश्येदुपोष्य पायसं स्थालीपाकं श्रपयित्वा रात्रीसूक्तेन प्रत्यृचं हुत्वाऽन्येनान्नेन ब्राह्मणान्भोजयित्वा चरुं स्वयं प्राश्नीयात्।" इति। अर्थः—जाग्रत्स्वप्नसुषुप्त्यवस्थासु भौमदिव्यांतरिक्ष्यदुर्निमित्तदर्शनसूचितापमृत्युपरिहारार्थं-

अथ अपमृत्युपरिहारकः

# ऐतरेयोपनिषदुक्तऋङ्मंत्रजपः ॥

श्रीगुरुभ्यो नमः। एकादशस्थाने श्रीलक्ष्मीनृसिंहाय नमः। ओं भूः। ओं भुवः। ओं स्वः। ओं महः। ओं जनः। ओं तपः। ओं सत्यं। ओं तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि। धियो यो नः प्रचोदयात्। ओमापो ज्योतीरसोऽमृतं

---

रात्रिसूक्तहोमः कार्यः। अत्र भाष्यं—रात्र्यास्तु देवता दुर्गा दुःस्वप्ने सा प्रपूजिता। पायसेन हरेन्मृत्युं रात्रिसूक्तादकालिकं। यदि कालिकमृत्युः स्यात्पदं सा परमं नयेत्।

इति श्रीरात्रिसूक्तहोमः ॥

१. तदुक्तं ऐतरेयोपनिषदि तृतीयारण्यके द्वितीयाध्याये—"स यश्चायमशरीरः प्रज्ञात्मा यश्चासावादित्ये एकमेतदित्यवोचाम। तौ यत्रविहीयेते चंद्रमा इवादित्यो दृश्यते न रश्मयः प्रादुर्भवंति लोहिनी द्यौर्भवति यथा मंजिष्ठा व्यस्तः पायुः काककुलायगंधिकमस्य शिरो वायति संपरेतोऽस्यात्मा न चिरमिव जीविष्यतीति विद्यात्स यत्करणीयं मन्येत तत्कुर्वीत 'यदंति यच्च दूरक इति सप्त जपेदादित्प्रत्नस्य रेतस इत्येका यत्र ब्रह्मा पवमानेति षळृद्वयं तमसस्परीत्येका' इति ॥

पुर- ॥११२॥ श्रवणं

ब्रह्म भूर्भुवःस्वरोम् । इति दशतारकयुतगायत्र्या प्राणायामः । ओं पूर्णज्ञानात्मनेहृदयाय नमः । ओं पूर्णैश्वर्यात्मने शिरसे स्वाहा । ओं पूर्णप्रभात्मने शिखायै वौषट् । ओं पूर्णानंदात्मने कवचाय हुं । ओं पूर्णतेजआत्मने नेत्राभ्यां वषट् । ओं पूर्णशक्त्यात्मने अस्त्राय फट् । इति दिग्बंधः । अस्य श्रीयदंतियच्चेत्यादिपंचदशऋङ्मंत्रस्य ब्रह्मा ऋषिः शिरसि । यदंति यच्च दूरक इति षण्णां गायत्री च्छंदः । पुनंतु मां देवजना इत्यस्य अनुष्टुप् च्छंदः । आदित्प्रत्नस्येत्यस्य गायत्री च्छंदः । यत्र ब्रह्मा पवमानेति षण्णां गायत्री च्छंदः । यत्र ज्योतिरित्यस्य अनुष्टुप् च्छंदः मुखे । श्रीलक्ष्मीनृसिंहो देवता हृदये । जपे विनियोगः । ध्यानं—ध्यायेन्नृसिंहमुरुवृत्तरवित्रिणेत्रं जानुप्रसक्तकरयुग्ममथापराभ्यां । चक्रं दरं च दधतं प्रियया समेतं तिग्मांशुकोटयधिकतेजसमग्र्यशक्ति ॥ हृद्याकाशेऽष्टपत्रे सरसिभुवि गुहायां सदा कर्णिकायां दीप्यंतं सूर्यकोटिप्रभमजरमजं नित्यमानंदमूर्तिं । इंदूनां कोटिभासा परिगतमथ सज्जानुसंसक्तबाहुद्वंद्वं शंखारिबाहुं सुविवृतवदनं नारसिंहं नतोऽस्मि ॥ श्रीलक्ष्मीनृसिंहप्रेरणया श्रीलक्ष्मीनृसिंहप्रीत्यर्थं जाग्रत्स्वप्नसुषुप्त्यवस्थासु भौमदिव्यांतरिक्ष्यापमृत्युप्रदारिष्टपरिहारार्थं ऐतरेयोपनिषदुक्तयदंतियच्चेत्यादिपंचदशऋङ्मंत्रजपं करिष्ये । ॥११२॥

ओं * यदंति यच्च दूरके भयं विंदति मामिह । पवमान वि तज्जहि ॥ १ ॥ पवमानः सो अद्य नः पवित्रेण विचर्षणिः । यः पोता स पुनातु नः ॥ २ ॥ यत्ते पवित्रमर्चिष्यग्ने विततमंतरा । ब्रह्म तेन पुनीहि नः ॥ ३ ॥ यत्ते पवित्रमर्चिवदग्ने तेन पुनीहि नः । ब्रह्मसवैः पुनीहि नः ॥ ४ ॥ उभाभ्यां देव सवितः पवित्रेण सवेन च । मां पुनीहि विश्वतः

---

१. यदंति यच्च [ऋ. ७ । २ । १७ ।]—पवमान = पावयतीति पवमानः । तस्य संबुद्धिः । हे वायो । इह = अस्मिँल्लोके । यत् अंति=अंतिके । भयं । यच्च दूरके = दूरे । भयं । मां विंदति=प्राप्नोति । तत् = भयं । विजहि = नाशय ॥ १ ॥

२. पवमानः सः—विचर्षणिः = विविधप्रजावान् । सः = प्रसिद्धः । यः = पवमानः । नः = अस्माकं स्वामिना । पवित्रेण = पावयित्वा त्रातीति पवित्रनाम्ना हरिणा तत्प्रसादेन । लोकानां पोता=पावयिता । सः नः=अस्मानपि । अद्य पुनातु ॥ २ ॥

३. यत्ते पवित्रमर्चिषि—अग्ने = अगनेतृत्वादग्निनामक हे वायो । अंतरा = पुरुषदेहमध्ये । विततं = व्याप्तं । अर्चिषि = अर्चिष्मत् । पवित्रं=यद्ब्रह्म । तेन नः पुनीहि ॥३॥

४. यत्ते पवित्रमर्चिवत्—अग्ने = हे वायो । ते स्वामिभूतं । अर्चिवत् = अर्चिष्मत् = यत् पवित्रं ब्रह्म । तेन नः पुनीहि । तं प्रसादयित्वा तेन पुनीहीति यावत् । ब्रह्मसवैः = परब्रह्मणः ज्ञानाख्यप्रसूतिभिश्च । स्वयं पुनीहि नः । ब्रह्मज्ञानमुत्पाद्यापि पुनीहीत्यर्थः ॥ ४ ॥

५॥त्रिभिष्ट्वं देव सवितर्वर्षिष्ठैः सोम धामभिः। अग्ने दक्षैः पुनीहि नः ॥ ६ ॥ पुनंतु मां
देवजनाः पुनंतु वसवो धिया। विश्वे देवाः पुनीत मा जातवेदः पुनीहि मां ॥
७ ॥ * ॥ आदित्प्रत्नस्य रेतसो ज्योतिष्पश्यंति वासरं। पुरो यदिध्यते

---

५. **उभाभ्यां देव** = सवितः = ज्ञानप्रसवात् सवितृनामक। देव = क्रीडादिगुणविशिष्ट हे वायो। पवित्रेण=ब्रह्मणा। सवेन=प्रसवेन सोमाभिषवेण चेत्युभाभ्यां। मां विश्वतः = सर्वस्मात्पुनीहि। न पुनः प्रसादमात्रेण। तस्य कर्मणापि संभवात्। नापि ज्ञानमात्रेण। प्रसादजनकज्ञानमात्रस्येतरसाधारणत्वादित्युभयनियमनायेयं ऋगित्यपौनुरुक्त्यं ॥ ५ ॥

६. **त्रिभिष्ट्वं देव**—अग्ने सवितः देव सोम = सौम्यस्वरूप। त्वं वर्षिष्ठैः = भक्ताभिलषितवर्षणशीलैः। दक्षैस्त्रिभिर्धामभिः = क्षीराब्ध्यादिधामत्रयगतैर्भगवद्रूपैः। नः पुनीहि ॥ ६ ॥

७. **पुनंतु मां**—हे जातवेदः = जातं सर्वं वेत्तीति जातवेदाः। तस्य संबुद्धिः। सर्वज्ञ वायो। धिया = संविदा त्वदनुमत्या। देवजनाः विश्वे देवाश्च। मां धिया पुनंतु = ज्ञानं दत्वा पुनंतु। तथा वसवः पुनंतु। ते यथा पुनंति तथा त्वं मां पुनीहीत्यर्थः ॥ ७ ॥

द्विवा ॥ ८ ॥ *॥ यत्र ब्रह्मा पवमान छंदस्यां३ वाचं वदन् । ग्राव्णा-
सोमे महीयते सोमेनानंदं जनयन्निंद्रायेंदो परिस्रव ॥ ९ ॥ यत्र ज्योतिरजस्रं यस्मिँल्लोके
स्वर्हितं । तस्मिन्मां धेहि पवमानाऽमृते लोके अक्षित इंद्रायेंदो परिस्रव ॥ १० ॥

---

८. आदित्—[५ । ८ । १५] प्रत्नस्य = पुरातनस्य । रेतसः=महारतेर्विष्णोः । वासरं=वासेन स्वसंनिधानेन रमयति भक्तान्सुखयतीति तथा । यज्ज्योतिः । दिवा = दिवः । परः=परस्तात् वैकुंठलोके । इध्यते = दीप्यते । तत्=ज्योतीरूपं । आत् इत् = अकारवाच्यभगवदनुग्रहादेव । पश्यंति = उपासका इत्यर्थः ॥ ८ ॥

९. यत्र ब्रह्मा—[७ । ५ । २७ ।] हे इंदो = इष्टप्रद । पवमान = वायो । ब्रह्मा = मुक्तचतुर्मुखः । यत्र=यस्य विष्णोर्लोके । छंदस्यां=छंदःसंबंधिनीं । वाचं=वेदवाचं । वदन् = व्याकुर्वन् । सोमे = सौम्यरूपत्वात्सोमनामकभगवद्विषये । ग्राव्णा सुतेन = अभिषुतेन सोमेन । इष्ट्वा तत्प्रसादेन । स्वस्यानंदं जनयन् । मुक्तनिकरैर्महीयते । तस्मै इंद्राय = विष्णवे । मां परिस्रव = स्रावय प्रापय ॥ ९ ॥

१०. यत्र ज्योतिः—हे इंदो यत्र लोके । अजस्रं = निरंतरं । ज्योतिः = प्रकाशः वर्तते । यस्मिँल्लोके । स्वः=आनंदरूपं ब्रह्म । हितं = निहितं । अमृते = मोक्षलक्षणे । अक्षिते = स्वयं नाशरहिते । तस्मिँल्लोके । पवमान मां निधेहि । तद्गतायेंद्राय परिस्रव च ॥ १० ॥

पुर- श्रवणं
॥११४॥

यत्रानुकामं चरणं त्रिनाके त्रिदिवे दिवः । लोका यत्र ज्योतिष्मंतस्तत्र माममृतं कृधींद्रायेंदो परिस्रव ॥ ११ ॥ यत्र कामा निकामाश्च यत्र ब्रध्नस्य विष्टपं । स्वधा च यत्र तृप्तिश्च तत्र माममृतं कृधींद्रायेंदो परिस्रव ॥ १२ ॥ यत्र राजा वैवस्वतो यत्रावरोधनं दिवः । यत्रामूर्यह्वतीराप स्तत्र माममृतं कृधींद्रायेंदो परिस्रव ॥ १३ ॥ यत्रानंदाश्च मोदाश्च मुदः

---

११. यत्रानुकामं—त्रिनाके = कं सुखं। न कं अकं दुःखं । न अकं=परमसुखं। त्रिविधं नाकं तस्मिन् त्रिविधे परमसुखसाधने। त्रिदिवे=त्रिदिवशब्दवाच्ये श्वेतद्वीपानंतासनवैकुंठाख्ये लोकत्रये । अनुकामं चरणं = स्वेच्छानुसारेण गमनं भक्षणादिकं च विद्यते। यत्रच दिवः = सरस्वत्याः ज्योतिष्मंतः लोकाः वर्तन्ते। तत्र माममृतं कृधीत्यादि पूर्ववत् ॥ ११ ॥

१२. यत्र कामाः—यत्र कामाः = भोगार्थं विषयाश्च। निकामाः निकामं = यथेष्टं संति। ब्रध्नस्य = सूर्यस्य। विष्टपं = स्थानं। स्वधा = सुखं। तृप्तिः = अलंबुद्धिश्च। तदभिमानिदेवतेत्यर्थः। तत्र माममृतं कृधीत्यादि पूर्ववत् ॥ १२ ॥

१३. यत्र राजा—यत्र वैवस्वतो राजा = मुक्तो यमः। दिवः = सरस्वत्याः। ॥११४॥
अवरोधनं = परिवारभूताः सर्वदेव्यश्च । यह्वतीः = स्यंदमानाः। अमूः आपः = गंगाद्याः सरितश्च मुक्ताः सत्यः यत्र संति तत्र माममृतं कृधि ॥ १३ ॥

प्रमुद आसते । कामस्य यत्राप्ताः कामास्तत्र माममृतं कृधींद्रायेंद्रो परिस्रव ॥ १४ ॥ उद्वयं तमसस्परिज्योतिष्पश्यंत उत्तरं । देवं देवत्रा सूर्यमगन्म ज्योतिरुत्तमं ॥१५॥ पुनः प्राणायामः षडंगन्यासः ऋष्यादिन्यासः ध्यानं च । श्रीलक्ष्मीनृसिंहप्रेरणया श्रीलक्ष्मी-नृसिंहप्रीत्यर्थं ऐतरेयोपनिषदुक्त-यदंतियच्चेति पंचदशऋङ्मंत्रजपः संपूर्णः । एकैकामृचं उक्त्वा श्रीलक्ष्मीनृसिंहं तर्पयामि ॥

॥ इति श्रीअपमृत्युपरिहारक ऋङ्मंत्रजपः ॥

॥ इति श्रीमध्वमंत्ररत्नाकरे तृतीयस्तरंगः ॥ ३ ॥

---

१४. यत्रानंदाश्च—यत्र लोके । आनंदाः = अपरोक्षज्ञानव्यंग्याः विषयो-पाधिरहिताः स्वरूपभूतसुखविशेषाः वर्तंते । भोगनिमित्तकाः मोदाः । अल्पभोग-निमित्तकाः मुदः । प्रकृष्टविषयोत्थाः सुखविशेषाः प्रमुदः । एते सर्वे आसते = तिष्ठंति । यत्र कामस्य = इच्छायाः । कामाः = काम्यंते इति विषयाः । आप्ताः = पूर्णाः । तत्र माममृतं कृधि ॥ १४ ॥

१५. उद्वयं तमसस्परि—[१-४-८] तमसः = अज्ञानात् । उत् उद्गताः

वयं उत्तमं = सर्वोत्तमं। ज्योतिः = विष्णवाख्यं। परिपश्यंतः तमेव। देवत्रा देवं = देवविषयेऽपि देवं। देवानामपि देवमित्यर्थः। सूरिप्राप्यत्वात्सूरिनामकं। उत्तमं ज्योतिः= उत्तमज्योतीरूपं। अगन्म = प्राप्तास्मः। प्राप्यच्च निरंतरमक्षय्यंसुखमनुभवामः ॥ १५ ॥

इत्यशेषमतिमंगलम्।

इति टी. आर. कृष्णाचार्य संकलिता श्रीमध्वमंत्ररत्नाकरस्य लघुटिप्पणी।

॥ संपूर्णश्चायं श्रीमध्वमंत्ररत्नाकरः ॥

# अथ शुद्धिपत्रिका ।

प्रथमतरंगे ।

| पत्र संख्या । | सांकं निरंकं वा । | पंक्ति संख्या । | अशुद्धं | शुद्धं |
|---|---|---|---|---|
| २ | नि० | ८ | अस्पष्टं | नमः |
| ,, | सां० | १२ | पापपुरुष | पापैपुरुष |
| ४ | सां० | ७ | फट्टं | फट् |
| ६ | नि० | १२ | सपक्कीर्ति | संपक्कीर्ति |
| ,, | ,, | १३ | वाय्वभिसन्य | वाय्वभिमन्य |
| १५ | सां० | १ | अस्पष्टं | ओं |
| ,, | ,, | १० | णाष्टार: | णाष्टाक्षर: |
| १७ | नि० | — | एतत्पत्रमारभ्य २४ पत्रपर्यंतं पुटाक्षरेषु | |
| | | | ह्रास. स्ति. अष्टौ. | महा. |
| १७ | नि० | ९ | ओंज्ञानात्मयंने | ओं यं ज्ञानात्मने |

| पत्र संख्या। | सांकं निरंकं वा। | पंक्ति संख्या। | अशुद्धं | शुद्धं |
|---|---|---|---|---|
| २० | सां० | ५ | मं माधवाय | मों माधवाय |
| ,, | ,, | ७ | तुं श्रीधराय | सुं श्रीधराय |
| २१ | नि० | ९ | मं माधवाय | मों माधवाय |
| | | | द्वितीयतरंगे। | |
| ३ | नि० | १० | अथाष्टाक्षर | अर्थाष्टाक्षर |
| ९ | सां० | ८ | अस्पष्टं | सहितं |
| ११ | सां० | १२ | ओं नमा | ओं नमो |
| १२ | नि० | ८ | अस्पष्टं | अष्टादशवर्ण |
| १७ | नि० | १४ | इत्यादि | इत्यादेः |
| १९ | नि० | ६ | गापाल | गोपाल |
| ,, | ,, | १२ | अस्पष्टं | वेद्वेद्य |
| ,, | ,, | १३ | ,, | स्वामिन् |

| | | | | |
|---|---|---|---|---|
| २० | नि० | १२ | जमृणां | जपितृणां |
| २१ | सां० | १३ | जमृणां | जपितृणां |
| २२ | नि० | ४ | वेद्व्यासाय | वेदव्यासाय |
| २३ | ,, | १ | ध्यायेच्छशां | ध्यायेच्छिशां |
| ,, | ,, | ८ | कोटयति | कोट्यति |
| ,, | ,, | ११ | अस्पष्टं | युगपदेव |
| ,, | सां० | १ | ,, | प्रचोदयात् |
| २४ | नि० | ७ | श्रीएकाक्षर | श्रीअष्टाक्षर |
| २६ | नि० | ११ | अस्पष्टं | बाभ्रव्य |
| २६ | सां० | १३ | ,, | एतदादि |
| २७ | ,, | १ | यस्योरुषुं | यस्योरुषुं |
| ,, | ,, | २ | अस्पष्टं | मन्मंगिरि |
| २८ | सां० | २ | तदुरुगायस्य | तदुरुगायस्य |
| २९ | नि० | १४ | जमृणां | जपितृणां |
| ,, | सां० | १२ | कर्मना | कर्मणा |

| शुद्धि | पत्र संख्या। | सांकं निरंकं वा। | पंक्ति संख्या। | अशुद्धं | शुद्धं | पत्रं |
|---|---|---|---|---|---|---|
| ॥११७॥ | ३० | सां० | १ | अस्पष्टं | ण्वग्रीव | |
| | ,, | ,, | ,, | सजनास | सजंनास | |
| | ,, | ,, | ११ | अस्पष्टं | यं स्मा | |
| | ,, | ,, | ,, | ,, | त्रास्तीति | |
| | ३१ | नि० | ८ | ,, | कृशस्य | |
| | ,, | सां० | ३ | ,, | नमंन्यमाना | |
| | ,, | ,, | ,, | ,, | जघानं | |
| | ३२ | नि० | २ | ,, | जघान | |
| | ,, | सां० | १ | मस्फुरद्व | मस्फुरद्व | |
| | ,, | ,, | २ | अस्पष्टं | वज्रंहस्तः | |
| | ,, | ,, | ३ | शंसंतं | शंसंतं | ॥११७॥ |
| | ,, | ,, | ५ | तुविष्वान् | तुविष्मान् | |
| | ३४ | सां० | १ | अस्पष्टं | धेनुमती | |

| | | | | |
|---|---|---|---|---|
| ” | ” | ” | ” | सूंयवसिनी |
| ३६ | नि० | १४ | त्रि = | त्रिः = |
| ” | सां० | २ | अस्पष्टं | तत्रस |
| ” | ” | ४ | ” | अनादि |
| ” | ” | १२ | मुस्मिक | मुष्मिक |
| ३७ | नि० | १ | अस्पष्टं | अस्मदर्प |
| ” | ” | १० | शब्दावाच्यं | शब्दवाच्यं |
| ३९ | नि० | १२ | अस्पष्टं | निष्टतक्षुः = निष्ट |
| ” | सां० | ३ | ” | ऋषिः |
| ४० | नि० | २ | ” | घृतमें |
| ४० | सां० | ४ | ” | आदित् |
| ४१ | नि० | १ | ” | सपर्कं |
| ४५ | नि० | १ | म्युहमाद्रि | म्युहमांद्रि |
| ” | ” | २ | सोममाहनस | सोममांहनसं |

| पत्र संख्या। | सांकं निरं कं वा। | पंक्ति संख्या। | अशुद्धं | शुद्धं |
|---|---|---|---|---|
| ,, | ,, | ८ | मरुद्धिः | मरुद्भिः |
| ,, | सां० | २ | अस्पष्टं | व्रिपश्यति |
| ,, | ,, | ३ | ,, | अमुंतवो |
| ४६ | नि० | २ | ,, | रुद्राय |
| ,, | ,, | ,, | ,, | हंतवा उं |
| ,, | सां० | १ | पितर | पितर |
| ,, | ,, | ,, | अस्पष्टं | योनिर |
| ,, | ,, | १५ | ,, | भार्या |
| ४७ | नि० | १५ | ,, | रेभ्योऽपि |
| ,, | सां० | ३ | अस्पष्टं | प्रत्यृचं |
| ४८ | नि० | ३ | देवता | देवता हृदये |
| ४९ | नि० | १२ | अस्पष्टं | श्रीर्भवेद्वः |
| ० | सां० | ६ | ध्यान | ध्यानं |

| | | | | |
|---|---|---|---|---|
| ५५ | सां० | ३ | परमात्म | परशुराम |
| ,, | ,, | ४ | विश्वानु | विश्वानु |
| ,, | ,, | ५ | परमात्मानं | परशुरामं |
| ५६ | सां० | ३ | पतिरेक | पतिरेकं |
| ५८ | नि० | ३ | अस्पष्ट | कस्मै |
| ,, | सां० | १ | पृथिव्या | पृथिव्या |
| ६२ | नि० | १ | सहसो | सहसो |
| ,, | ,, | ३ | वृषभस्य | वृषभस्य |
| ,, | ,, | ४ | अस्पष्ट | शवसा |
| ६४ | नि० | १ | सुद्योत्मा | सुद्योत्मा |
| ,, | ,, | २ | सुवितं | सुवितं |
| ६८ | सां० | २ | अस्प० | गौरीर्मिमाय |
| ,, | ,, | ३ | ,, | पदी द्विपदी |
| ७० | नि० | ३ | पुष्यसि | पुष्यसि |
| ७० | नि० | १३ | वासुदेवस्य | वायुदेवस्य |

| | | | | |
|---|---|---|---|---|
| ७२ | सां० | १४ | अस्प० | द्रुतकनक |
| ७३ | सां० | ४ | ऋषिः | ॠषिः |
| ७७ | सां० | ९ | ध्यान | ध्यानं |
| ,, | ,, | ५ | ग्नि शिरसे | ग्नं शिरसे |
| ८० | सां० | ७ | ‘अन्यः’ इत्यनंतरं | ‘पंचत्रिंशदक्षरः’ इतियोज्यं |
| ८३ | सां० | १४ | अस्प० | अंगन्यासो |
| ,, | ,, | ,, | अगानि | अंगानि |
| ८५ | सां० | १ | तरिमंत्रः | तरिमहामंत्रः |
| ,, | ,, | ६ | क्षरमंत्र | क्षरमहामंत्र |
| ८७ | सां० | ९ | भगवानुयं | भगवानुयं |
| ,, | ,, | ,, | त्रिश्वभै | त्रिश्वभै |
| ८८ | नि० | १ | अस्पष्टं | भैषजोऽयं |
| १०५ | नि० | ३ | अस्पष्टं | तपसा |
| १०७ | नि० | १४ | परिचारकाः | परिचारिकाः |
| १११ | नि० | २ | [illegible] | प्रमाणे |